तथा, 'मत्स्य'संबन्धीय-५१श्लोकस्थले 'जनार्दन'संबन्धीय-५२श्लोकपाठे क्रमभङ्गदोषस्य परिहारो भवेत् ।

*Śl.* 64, 65, 67, 68. Taken from the *VD.* III, Ch. 54. Also, compare Hemādri, *Dānakhaṇḍam.*[103A]

तथा 'विष्णुधर्मोत्तरे' पाठभेदाः ( वि० ध० । ३यख० । अ० ५४ । )

"— मारकत०— — — — ।
— — — — स्ततः ॥ ६४ ॥ (२ वि० ध०)
— — — —०द्वयविभूषणः । (३ ?)
— — — कलापेन विवर्जितः ॥ ६५ ॥ (४क)
— पूर्णकुम्भश्च — — ॥ (४ख)
—०द्वये तु — — तथास्य रचिता०— ॥ ६७ ॥ (५क)
तथास्य १ भगवान् — — ०धरौ करौ । (५ख)
१(यदा इति पाठः । )
[ न कर्तव्यौ कर्तव्यौ देवपादधरौ । ६क ]
किञ्चि०— — — — ॥ ६८ ॥ (६ख)"

तथा 'हेमाद्रौ दानखण्डे' उद्धृताः पाठाः —

"भूस्थजानूर्द्ध्वजानुश्च — — ।
प्रभासंस्था तु सौवर्णकलापेन विवर्जितः* ॥ ६५ ॥

* विवर्धितः क्वचित्पाठः ।

छत्रन्ते — — — ।
विष्णुः पुरश्चेत् कार्योऽसौ द्विभुजो रचिताञ्जलि"रिति पाठः ।

एवं पाठान् विचार्य (६५श्लोके) "कलापैर्न विवर्जितः" इत्यस्माभिः शुद्धत्वेन परिकल्पितः । 'पक्षद्वयविभूषितः,—०विभूषणो' वा गरुडः कथं 'कलापेन विवर्जितः' स्यात् । एवं सति च तस्य सौन्दर्यहानिर्भवेत् । न हि गरुडो दुर्दर्शनश्च कदापि, पक्षान्तरेऽसौ भीमकान्तश्च दृश्यते । एतद्विचार्य, एकवाक्यतां चानुसन्धाय, अस्माकं मते "कलापैर्न विवर्जितः" इति पाठ एव साधुः ।

तथा "यदास्य — — ( ६८ क )" पाठः साधुः ।

तदनन्तरं श्लोकार्धः परित्यक्तः—"[ न कर्तव्यौ कर्तव्यौ देवपादधरौ । ] ।" समीचीन-

103A. Hemādri : *Caturvargacintā-maṇi* (*Bibliotheca Indica*), A. S. B,

मेतत्, यदा गरुडो विष्णुमुद्वहेत् तदा चाऽस्य पादौ ध्रियेतेति। द्विहस्तस्य गरुडस्य युगपत् छत्रकुम्भधारणं विष्णोर्भारवहनं च हस्तसाहाय्यं विनाऽसम्भवात् तेनैवमन्वयो भवितुमर्हति—

'यदास्य पृष्ठे भगवान् भवति, तदा गरुडस्य करौ छत्रकुम्भधरौ न कर्तव्यौ' इति।

*Śl.* 71. Taken probably from *ŚR.*,[103B] Part II, Ch. 25, *Śl.* 111, 112a.

तत्र पाठभेदाः "—०जिन्युपवीती — कृतकमण्डलुः।

— — महोदरः[103C] ॥ ७१ ॥

पुरुषो वामनाकारस्तथा (ब्राह्मण-)बटुः महोदरः एव भवति।

*Śl.* 72. 'रूपमण्डने' [103a] रामस्य दाशरथेस्तथा बलरामस्य एवं वर्णनं प्राप्यते—

'रामश्शरेषुधृक्छ्यामः ससीरमुसलो बलः।' तेनाऽस्माकं मते 'राम'स्य श्लोकार्धादनन्तरं (७५श्लोके) बलरामस्य अनन्तबलरामस्य वा वर्णनमासीत्। तस्य च श्लोकार्धं भ्रमात् परित्यक्तं, मन्ये। बलरामस्यैव आयुधौ सीरमुसलौ।

*Śl.* 72-74. 'शिल्परत्ना'दुद्धृतं[103b] मन्ये। *ŚR.* II, *Adhy.* 25, *Śl.* 112-115. तत्र पाठभेदाः—

(७२) —शोभितम्। (७३) —०फुल्ललोचनां।

*Śl.* 76. 'शिल्परत्ने' [103c] ७४श्लोकस्यानन्तरं श्लोकोऽयं विन्यस्तः। तेन प्रमाणान्तरमिदम्, अस्माकं मते स्थानव्यत्यासस्य। *ŚR.* II, 25, *Śl.* 116.

*Śl.* 77-80, 82. 'शिल्परत्ना'दुद्धृताः। *ŚR.* II, 25, *Śl.* 117–121a.

*Śl.* 83–85. "शिल्परत्नसंयोजिते कस्मिंश्चिद् ग्रन्थे" [104]. तत्र पाठभेदाः—

(८३) प्रमत्तवदने०—। (८४) — ०लम्बिनौ —। — वामे शंखं — ॥

(८५)—(गदां रम्यां) लिखेच्चित्रविशारदः ॥

---

103B. Śrī Kumāra: *Śilparatnam, Trivandrum Skt. Series*, No. XCVIII. Part II.

103C. These quotations are also given in T. A. Gopinatha Rao: *op. cit.*, presumably from another version of *ŚR.*

103a. See T. A. G. Rao: *Op. cit.*

103b. Quoted, also, by T. A. G. Rao: *Op. cit.*, apparently from another version of *ŚR.*, which sometimes gives better readings. —०लोचनां should really refer to the Devi, who is astonished, with her Lord's Prowess. Also, in *ŚR.*

103c. Both, in T. A. G. Rao: *Op. cit.*, and *ŚR.*

104. Quoted in T. A. G. Rao: *Op. cit.*

*Śl.* 86-90. विष्णुधर्मोत्तरे ३यखण्डे ८१अध्यायादेते ( श्लोकाः, २—७) गृहीताः। तत्र पाठभेदाः—

(८६) — शेषपन्नगतल्पगः [104a]। फणापुञ्ज०—दुर्निरीक्ष्यशिरोधरः [104a]॥

(८७ख) विष्णुधर्मोत्तरे ३य-ख० ८१-अ० (३—४)श्लोकयोः पादैकैकं परित्यक्तम्। तद्यथा—

(८७) स्वस्वलक्ष्म्युत्सङ्गगतः प्रभो।
तथापरश्च कर्तव्यः स्वस्वप्रभोः[104b]।

(८८क) एको भुजोऽस्य कर्तव्यस्तत्र जानौ प्रसारितः [105a]।
तथापरश्च — — प्रसाधितः [105b]।

(८९क) तथा चान्यः करः कार्यो देवस्य तु शिरोधरे [106a]।
तथैवान्यः — — ०धरः [106b]।

(८९ख) — तथैवास्यापरो — [107a-b]।

(९०क) सर्वपृथ्वीमये देव्याः प्राग्वत् कार्यः — [108a]।
— पृथ्वीमयो देवः — [108b]।

(९०ख) नालग्नौ — — — [109a-b]।

*Śl.* 91-93. 'रूपमण्डन'ाद्विशेषो नास्ति। केवलं कुत्र कुत्र कारकव्यत्ययः कृतः। संख्या-क्रमयोर्वा व्यत्ययः दृश्यते।

*Śl.* 94-115. 'रूपमण्डन'ात् कुत्र कुत्र विशेषाः। तेषां च प्रदर्शनं श्रीमद्भिः टीकाकारैः विस्तरेण कृतम्। इत्यलमधिकेन॥

*Śl.* 116. एतदनन्तरं यद् दृश्यते "इति विष्णुप्रतिहाराः", तस्य स्थानन्तु पूर्वश्लोकात् (११९)अनन्तरं भवितुमुचितमेव। यतोऽयम् अन्यश्लोकस्तु आशीर्वचनरूपः पृथक् वर्त्तते॥

## षष्ठोऽध्यायः। (Chapter VI.)

*Śl.* 1, 2a, 2c. 'रूपमण्डन'ाद् गृहीताः [110], कुत्र कुत्र विशेषोऽप्यस्ति। '२ख' इत्यंशो नास्ति तत्पुस्तके तत्र पाठभेदाः—(१)—०युतं कुर्याद्बाल०—॥

---

104a—109a. Readings quoted, from the printed Ed. of the *VD.* ( Śrī Veṅkaṭeśvara Pr.).

104b—109b. Readings quoted, from the *VD.* from another and presumably better version, in T. A. G. Rao : *Op. cit.*

110—115. These quotations are all from T. A. Gopinatha Rao :

(२क)— —कुण्डलाभ्यामल०—। 'रूपमण्डने' (२ख) नास्ति।

(२ग) सद्योजातं— —०पाणिकम् ॥ २ ॥

*Śl.* 3—5. 'रूपमण्डने'[111] कुत्र कुत्र विशेषः। तद्यथा—

(४) जटाचन्द्रधरं कुर्यात्— —। वामदेवं—॥ (५) सर्वाल०—रक्त०—॥

'रूपमण्डने' प्रथमचतुर्थपादौ न स्तः।

*Śl.* 6—12. 'रूपमण्डने' कुत्र कुत्र भेदः। तद्यथा—

( ६श्लोके )— ०वदनं—। — — ०कुण्डलमण्डिताम् ॥ (७ख) यो वस्ते—गले—०कमालिकाम् ॥

(८ख) पिङ्गाक्षं—॥ (९) —०कः —०कश्चैव पादस्तस्य नूपुरौ।—रूपकं कुर्यात्काल०—॥

(१०) — रिपोस्सङ्गं —॥ (११) —च कपालञ्च—पाश एव च।—०व्यमिदं शस्त्र०—॥

(१२) — परशुः खड्गो दण्डश्चवारिमर्दनः। शस्त्राण्येतानि चत्वारि दक्षिणेषु करेषु च ॥

अस्माकं मते, ( ७म-श्लोके ) 'योऽनिशं,' तथा (१२) 'दण्डं' इत्युचितौ पाठभेदौ। ( ६-श्लोकस्य प्रथमपादे ) छन्दसश्च पातः परिहर्त्तव्यः।

*Śl.* 13, 14. 'रूपमण्डन'ाद्भेदो[112] नास्ति। द्वितीया-स्थलेषु तत्र प्रथमान्तपाठ इति विशेषः।

*Śl.* 15, 16. 'रूपमण्डन'ात्[113] कुत्र कुत्र भेदोऽस्ति।

(१५ख)—मृत्युञ्जयं—०न्द्रभूषितम् ॥ (१६) —०मक्षमाला च दक्षयोः करयोस्स्मृतः। — —०कां वामे—मुद्राकरद्वयः ॥

*Śl.* 19. 'रूपमण्डन'ात्[114] किंचिन्मात्रं भिन्नः। तद्यथा—

(१९) —०र्भुजो —०बाहुः—०पादाक्षपाणिकः। —०हस्तोऽसौ किरणाक्षस्त्रिलोचनः ॥

*Śl.* 20. '— ( भक्षयन्तं ) महद्भयम् ॥ २० ॥' इति मतेऽस्माकं पाठः कार्यः।

*Śl.* 21, 22. 'रूपमण्डन'ात्[115] कुत्र कुत्र विशेषः।

(२१) —०वस्त्र० —कुर्याच्चित्र०—। (२२) खड्गं धनुः शरं खेटं श्रीकण्ठं बिभ्रतं भुजैः ॥

*Śl.* 25, 26. अस्माभिरनेकानि 'सदाशिव'ध्यानानि समासादितानि[116]। किन्तु ध्यानमेतत् न दृष्टपूर्वमासीत्। अपरध्यानान्यनुसृत्य संशोधनं क्रियते।

---

*Op. cit.*, which represents the *Rūpamaṇḍana*, in another and somewhat different version, apparently.

116. See the present writer's Monograph, *Sadāśiva worship in early Bengal: A Study in History, Art and Religion. J. P. A. S. B.* (New Series), Vol. XXIX, 1933, No. 1.

(२५) पद्मासनं शिवाच्छायं a—। पञ्चवक्त्रं अभीःशक्ति०—॥ (२६) —०सूत्रञ्च—। इच्छाज्ञान[क्रिया]क्लृप्त b त्रिनेत्रं c ज्ञानतोऽर्णवम् ॥

सदाशिवस्तावत् a "गिरिजाऽभिन्नदेहः," "b इच्छाज्ञानक्रियाशक्ति-त्रयसंक्लृप्तलोचनः," ध्यानान्तरेषु प्राप्यते। तथा 'c ज्ञानन्तु शङ्करादिच्छेत् मोक्षमिच्छेत् जनार्दनात्' इति स्मर्यते, तेन सदाशिवोऽपि 'ज्ञानार्णवः' भवितुमर्हति ॥

*Śl.* 30a. '( विष्णुधर्मोत्तरे ॥ )' इति गोपीनाथपादैरुक्तम् [117]। किन्तु दुर्भाग्य-वशात् भूयशोऽनुसन्धानं कृतवद्भिरस्माभिरेतद् ध्यानं तत्र अन्यत्र वा सर्वं न समुपलब्धम्। कुत्र कुत्रचित् (२७—३०)श्लोकानाम् आभासमात्रं वर्त्तते। तथापि गोपीनाथपादानां वाक्यं प्रामाण्यम्।

*Śl.* 31, 32. 'रूपमण्डने' [118] अपि। कुत्र कुत्र भेदो दृश्यते—

(३१) '—वक्ष्ये उमया—। मातुलिङ्गं—धत्ते—॥' एतदनन्तरं 'रूपमण्डने' श्लोकान्तरं दृश्यते सोऽत्र परित्यक्तो यथा—

'आलिङ्गन्वामहस्तेन नागेन्द्रं द्वितीये करे।
हरस्कन्धे उमाहस्तो दर्पणं द्वितीये करे॥'

(३२ख) 'भृङ्गिरिटि—०न्निर्मांसं नृत्यसंस्थितम् ॥'

*Śl.* 33, 34; 35a. 'कृष्णशङ्कर'ध्याने तथा 'कृष्णकार्त्तिकेय'ध्याने तु ग्रन्थ-स्यैतस्य महद्वैशिष्ट्यम्। नेदम् अन्यत्र कुत्रापि अस्माभिर्दृष्टपूर्वम्।

*Śl.* 36—41. 'मत्स्यपुराण'ाद् [119] विशेषोऽल्प एव। तद्यथा—

(३८)— —दद्याद्वदाभृतः। शङ्खञ्चैवेतरे —॥ (३९) — —मणिभूषणम्। दक्षिणार्धे— —०मर्द्धेन्दुकृतभूषणम् ॥ (४१) — कट्यर्धं कृत्तिवाससम्।

*Śl.* 42, 43; 44—46; 47-48. ध्यानत्रयेष्वेतेषु च ग्रन्थस्य वैशिष्ट्यं वर्त्तते। कुत्र कुत्रापि पाठानां संशोधनानि कार्याणि। तद्यथा—

---

Especially, see, *Appendix* II. शिवरूपवर्णनानि, *Descriptions of Śiva*, pp. 225—242; and *Appendix* VI. *A. Description of Sadāśiva* (*Translation*); *B.* (*Detailed Rituals for Worship and*) *Description of Sadāśiva.* पुराणोक्ता सदाशिवपूजापद्धतिः। *(Translation)*, pp. 253, 54.

117. T. A. G. Rao: *Op. cit.*

118. *Ditto.*

119. *Matsyapurāṇam* (Vaṅgavāsī Ed., Cal.), *Adh.* 260, *Śl.* 21a—27a; 27b is omitted.

( ४२श्लोके ) 'तनुश्चैक-नि०—' (४४) 'ऋ(ज्वा)मुखगतः'[120] ।

(४६) 'एवंविधोऽयं कर्त्तव्यः —०प्रदः ॥' (४८) '(मृ)णालोर्द्ध्वं' इत्युचिताः पाठाः स्युः । कारकाणां क्रमभङ्गश्च परिहर्तव्यः ।

*Śl.* 52, 53 ; 54, 55. 'रूपमण्डने'ऽपि[121] प्रायशः एवंरूपाः सन्ति । टीकाकृद्भिरपपाठाः शोधिताः ।

*Śl.* 56, 57. 'विष्णुधर्मोत्तरे'[122] ध्यानमेतत् यथायथं प्राप्यते ।

*Śl.* 58. अत्रापि ग्रन्थस्य वैशिष्ट्यं वर्त्तते । कृष्णशङ्करयोः संयोगमूर्त्तीनामन्यत्राऽदर्शनात् । मन्ये, ५८ख-श्लोकार्द्धे 'ज्ञेया द्विजन्मनो बुधैः' ॥ इति पाठो भवेत् । तत्र 'द्विज' इत्यक्षरद्वयं तु निश्चितमेव ।

*Śl.* 59, 60. 'शिल्परत्ने' उत्तरभागे, अ० १ श्लो० २० आरभ्य, अनन्तरं, तथा अ० २ श्लो० १३, १४ इत्येते द्रष्टव्याः ।

*Śl.* 65, 66. 'शि० र०' उ०, अ० १ श्लो० ४२ आरभ्य अनन्तरं, च द्रष्टव्याः । तत्र 'वीर्यक' इतिनाम्ना कोऽपि वृक्षो नास्ति । 'वीरिः, वीरः, विरश्च' बिल्वान्तरम् आयुर्वेदीय-( वैद्यक- )निघण्टुषु[123] प्राप्यते । तेनाऽस्माभिः 'वीर्यक'-पाठः प्रामादिको न वा निश्चेतुं नैव शक्यते । अन्यः 'वीरा'-तामलकी-तमालोऽप्यस्ति निघण्टुषु । क्षुपविशेषोऽयं तक्षणकर्मणि अनुपयोगी ।

*Śl.* 73a. 'मृत्युञ्जय-विजय[ौ ] क्रमात् ।' इति पाठः स्यात् ।

*Śl.* 84-86 ; 87-89. 'मयमते' अ० ३३श्लो० ४०—४२, तथा ४३—४५श्लोकाः तुलनीयाः । मन्ये, तस्मादेव ग्रन्थात् एते गृहीताः । तत्र पाठभेदाः—

(८४)—शिवायतम् ।— मानानि ॥ (८६) भूतगङ्गाग्नि०— । —सार्वकामिकं— ॥

*Śl.* 98, 99. 'शि० र०' उ०[124], अ० २ श्लो० ११३—११७क-श्लोकाः ; तथा 'मयमते' अ० ३३-श्लो० ६२ख—६३-श्लोकाः तुलनीयाः । मन्ये, पुस्तकयोरेतयोः श्लोका एते गृहीताः । 'शिल्परत्ने एकोनत्रिंशाध्याये' ( ११३—११७क )श्लोकानां च उल्लेखो दृश्यते ।

---

120. The ऋजु *Rju* and आमुख *Āmukha* are the names of स्थान *poses* and स्था॰क *postures* for images. Cf. *Śilparatnam*, *Bk.* I, *Adh.* 46, *Śl*, 61. 'ऋजु स्यात् संमुखं स्थानम्'.

121. T. A. Gopinatha Rao : *Op. cit.*

122. *Ib.* : *Op. cit.*

123. See **राजनिघण्टसहितो धन्वन्तरीयनिघण्टुः ।** आनन्दाश्रमसंस्कृतग्रन्थावलि, ग्रन्थाङ्क ३३ । शक १८१८ । Also see, **वनौषधिदर्पण ।** अभिनवनिघण्टु । राजवैद्य श्रीविरजाचरण गुप्त काव्यतीर्थ कविभूषणकृत । द्वितीय संस्करण । वङ्गाब्द १३२४ ।

124. Also quoted in T. A. Gopinatha Rao : *Op. cit.*, (but) from (a different version of ) *Śilparatna*, *Adh.* 29.

*Śl.* 132-133. 'मत्स्यपुराणे'[125a] अ० २६२, श्लो० १३—१६क, द्रष्टव्याः।

*Śl.* 134-138. आदर्शपुस्तकं विना यथाशक्ति श्लोकानां पाठशुद्धिः क्रियते, केवलं लिपिशास्त्रं वास्तुशास्त्रं च विचार्य। तद्यथा--

(११६श्लो०) कण[ ]कं सार्धद्वयं भागै [भागै]कञ्चि(कं भि)त्तिका मता।
द्विभागं चान्तरपट्टं कपोता विद्वि(द्धि) सार्धकाः॥ (१३६)
अर्धपंचम(चं) ग्रास(साग्र)पट्टि — ॥ (१३७)
—०पट्टि कार्या कर्णके तु भार्ग(ग)[र्ध]कम्।
— — ? त[त्] म(स)शङ्किते (संज्ञितम्)॥ (१३८)

कपोत[125b] स्तावत् तत्पक्षिविशेषाकारोऽलङ्करणभेदः बन्धविशेषो वा। तस्य वर्णन-व्यवहारादयः वास्तुशास्त्रेषु अनुसन्धेयाः। ग्रन्थमध्ये भूयशः 'त'-कार-'न'-कार-'र'-काराणां परस्परभ्रान्तिरेव अस्माकं पाठोद्धारे मानम्।

Śl. 141-46. 'मत्स्यपुराणे' अ० २६२, ६—१२ श्लोकेभ्यः उद्धृताः एते। विशेषस्तु अल्प एव। तद्ग्रन्थमवलम्ब्य संशोधनानि क्रियन्ते। तद्यथा—

(१४१श्लोके) 'वैरी'पाठः प्रामादिक एव, स्वतो वैरस्यजनकत्वात्। तथा 'मत्स्यपुराणे' वेदी-पाठदर्शनात् 'वेदी'पाठोऽस्माभिरङ्गीक्रियते। '(१४४) रुद्राणीसंतोषप्रिया।'

Śl. 147, 148. 'मत्स्यपुराणे' अ० २६२, १६-१८ श्लोका एते। १९क-श्लोकाध-स्तावत् त्यक्तः तद्यथा—'देवस्य यजनार्थन्तु पीठिका दश कीर्त्तिताः'।

Śl. 149, 150. तत्रैव ग्रन्थे, १९-२० तथा १३-१६ श्लोका एते। 'मयमत'स्य, च, अ० ३४स्थ२, ३श्लोकौ अत्र स्थित—१४९-श्लोकस्य छायामावहतः।

Śl. 151, 152. 'रूपमण्डन'ादुद्धृताः किन्तु तस्मात् प्रथमश्लोकार्धः परित्यक्तः। तद्यथा—

'मुखलिङ्गं त्रिवक्त्रं स्यादेकवक्त्रं चतुर्मुखम्'।
"सन्मुखं चैकवक्त्रं स्यात् त्रिवक्त्रं पृष्ठकेन हि।
— — ०त्तरे। — —०करालं स्यात्प्राच्यां — ॥ १५१ ॥
— — तत्पुरुषं —। — — ॥ १५२ ॥"

Śl. 167b. मन्ये, "वृषभस्य ( विभोरन्ते ) लिङ्गे दृष्टिं नियोजयेत्।" इति पाठः कार्यः।

---

125a. *Matsya-purāṇam* (Vaṅgavāsī Ed., Cal.). *Adh*. 262, *Śl*. 13—16a.

125b. For *Kapota*, कपोत a kind of *pigeon-shaped* ornament or moulding used in Architecture, see P. K. Acharya: *A Dictionary of Hindu Architecture*. *s. v.*

Śl. 168. तथा "पादं जानु— — । स्थाननाशं— ॥" इति पाठः कार्यः ।

Śl. 169. पाठाशुद्धिबहुलस्य श्लोकस्य संशोधनं, प्रतीकस्य वा आदर्शपुस्तकस्य दर्शनं विना सम्यक्तया कर्त्तुं नैव शक्यते । तथापि केवलं लिपिशास्त्रं विचार्य आद्यद्वितीय-पङ्क्तयोरेवं पाठोद्धारः क्रियते—"धात[ा] दिवं प्रति(थोऽ)तः कल्पनेऽस्य रूपं ?

तत्पादयुग्ममगमद्यथां(शौ) हरि[र्ह]रश्च ।"

## सप्तमोऽध्यायः । (Chapter VII.)

अध्यायोऽयमेतस्य ग्रन्थस्य महान् विशेषः । 'जैनहरिवंशा'दौ शासनदेवीप्रभृतीनां वर्णनानि प्राप्यन्ते । तथा 'जेमस् बार्जेस्' [126] प्रमुखाणां 'युरोपीय'पण्डितानां ग्रन्थ-प्रबन्धेषु जैनमूर्त्तीनां वर्णनान्युपलभ्यन्ते । तेनालं पिष्टपेषणेन । बाहुल्यभिया च विरम्यते ।

## अष्टमोऽध्यायः । (Chapter VIII.)

'रूपमण्डने'पि [127] किञ्चिद्भिन्नमेतद्रूपं ध्यानमस्ति । पादमेकं तस्मात् परित्यक्तं च । तद्यथा—

"— गौर्याः — — —०निर्णयम् ।
— — — — — — — — ॥"
'[ अक्षसूत्रं तथा पद्ममभयं च वरं तथा । ]
—०नाश्रिता मूर्त्तिर्गृहे पूज्या श्रिये सदा ॥'

Śl. 3, 4, 5, 7, 10. 'रूपमण्डन'ात् [128] कुत्र कुत्रापि भिन्नानि ध्यानानि । मन्ये, तत्र ( १०ख-श्लोकार्धं ) एवंरूपः पाठो भवितुमर्हति—

'अप्रतीतोद्भवारूपा ( अप्रतिमोद्भवरूपा )— — ॥ १० ॥'

Śl. 13, 14. 'रूपमण्डने' [129] किञ्चिद्भिन्ने ध्याने ।

Śl. 15b, 16, 17b. 'रूपमण्डन'ात् [130] किञ्चिद्भिन्नानि ।

Śl. 18-20. 'रूपमण्डन'ात् [131] कियन्मात्रो विशेषः ।

Śl. 21 ; 22-23 ; 25. 'रूपमण्डने'ऽपि [132] सन्ति । तत्र तु २१श्लोकस्य विषयस्तावद्विनायकः । कारकव्यत्ययश्च कृतः । हेरम्बध्यानन्तु किञ्चिद्भिन्नम् । वक्रतुण्डस्य तावद् ध्याने विशेषो नास्ति ।

Śl. 29 ; 30-34 ; 35. 'रूपमण्डने' [133] ऽपि सन्ति । विशेषेण भेदो नास्ति ।

---

126. For the important Article of James Burgess: *Digambara Jaina Iconography*, see *Ind. Antiq.* XXXII, 459, and *Illustrations of Digambara Jaina Yakshas and Yakshinis, Ind. Antiq.* XXXII, 464.

127—33. Quoted in T. A. Gopinatha Rao: *Op. cit.*

*Śl.* 36-42a. सर्वेऽपि श्लोकाः 'मत्स्यपुराणाद् गृहीताः[134a] अ० २६०, श्लोकाः ४५ख—६१। तथा 'शिल्परत्ने'[134b], उत्तरभागे अ० २९, १२८ख—१३०श्लोकानां कुत्र कुत्रचित् ३६—३८क-श्लोकाः छाया अपि आदधते। 'मत्स्यपुराण'ात् कुत्र कुत्र पाठभेदाः सन्ति। तद्यथा—

'(३६) कमलोदरवर्णाभं— ॥ (३७)—दण्डकैश्चीरकैर्युक्तं—।

स्थापयेत् स्वेष्टनगरे भुजान् द्वादश कारयेत् ॥ (३८)—खर्वटे—। शक्तिः पाशस्तथा खड्गः— ॥

(३९)—स्यादथ चाभयदो—। —केयूर-कटकोज्ज्वलाः ॥ (४०)—प्रसारिता।

(४१)—०वामे स्यात्—। — —०पाशौ—त्वसिः ॥ (४२क) — वापि दक्षिणः स्यात्— ।'

Śl. 43-47b. पञ्चलीलया(जा?) न अस्माभिर्दृष्टपूर्वाः। अत्र, ग्रन्थस्य चान्यद् वैशिष्ट्यम्। 'बृहद्ब्रह्मसंहितायां'[135] कानिचिद् वचनानि सन्ति। तत्र 'ललिता'दिदेवीनाम् उल्लेखः प्राप्यते, न तु तासां नामानि।

Śl. 50 ; 52-58. 'रूपमण्डने'ऽपि[136] सन्ति।

Śl. 61-75a. 'विष्णुधर्मोत्तरे'[137] यथायथमेव सन्ति। तत्र भेदा अकिञ्चित्करा एव तद्यथा—

(६१ख) — षड्भुजा — ॥ (६२) पिङ्गला भूषणोपेता —। — स्रुवं — ॥ (६३क) —कुण्डीं बिभ्रती—। (६४) शुक्लेन्दु०—जूटा शुक्ला—०सुखप्रदा। — वरदा — ॥

(६५क) शूलघण्टा० —। (६६ख) पताका — पात्रं — ॥ (६७) — — घण्टां — कुक्कुटन्त्वधः।

---

134a. *Matsya purāṇam*, *Adh.* 260 ( Vaṅgavāsī Ed., Calcutta).

134b. *Śilparatnam*, TSS. II, *Adh.* 25.

135. नारदपाञ्चरात्रान्तर्गता बृहद्ब्रह्मसंहिता। पाद० २, अ० ४।

तद्यथा—

"योऽहं सा मम लीला तु या लीला सोऽस्म्यहं पुनः।
अन्तरं नैव पश्यामि यथा वै शेषशेषिणोः ॥ १५३ ॥
नित्याश्च शक्तयो ह्यस्या ललिताद्याः सुमङ्गलाः।
अष्टौ नित्यविहारस्य रसज्ञाः कौतुकोज्ज्वलाः ॥ १५४ ॥"

Ānandāśram Skt. Series, No. 68.

136. See T. A. Gopinatha Rao : *Op. cit.*

137. Quoted in Ib. *Op. cit.* (१) कमलमिति क्वां। (२) 'दर्पि— पान—।'। इति 'श्रीतत्त्वनिधि'पाठः। 'विष्णुधर्मोत्तर'पाठः।

——— तीक्ष्णां ——— ॥ (६८ख) — गदिनी — बिभ्रती चाम्बुज० — ॥ (६९) — ०भयान्वामे सा वेयं — । — — महोदरी ॥ (७०ख) — ०भयान्वामे ॥ (७१) — — ०त्यूर्द्ध्व — । कलशं ? — ॥ (७२ख) दंष्ट्रोग्रा — — — ॥ (७३) — कवचं शरम् । अङ्कुशं — [ दक्षिणे ] त्वथ — ॥ — —०र्दण्डं — चेति ।

(७४) — सा शिवरूपा च सिंहगा । — वर्त्तुलत्र्यक्षा — ॥ (७५क) — —०न्विता ।

एतेषां मध्ये ( ६८श्लोके ) चिह्नितपाठावेव समीचीनौ । तथा ( ७२, ७३ )योः चिह्नितपाठाः एवोचिताः । (७३ख) '[दक्षे] चाप्यथ' इत्यपि साधुः पाठोद्धारः ।

Śl. 76. 'विकारणम्' इति पाठं न साधु मन्ये । ( विकरालम् ) इति भवितुमुचित एव ।

Śl. 77b, 78. 'रूपमण्डने'[138a] एवं पाठोऽस्ति । तद्यथा—

"वीरेश्वरश्च — — धनुर्धरः । (॥77b)

वीणाहस्तत्रिशूला ( वीणात्रिशूलहस्तश्च ) ($78^a_2$)

($78^b_2$)मातृणामग्रतो भवेत् ॥

मध्ये च मातरः कार्या अन्ते तेषां विनायकः ॥ (॥78)"

'मत्स्यपुराणे'[138b] अ० २६१, श्लो० ३८ख—३९ एवंरूपाः श्लोकाः सन्ति । यथा—

"विनायकञ्च कुर्वीत मातृणामन्तिके सदा ।

— — — जटाधरः ॥ (77b)

वीणाहस्तस्त्रिशूली च ($78^a_2$)

($78^b_2$)मातॄणां — — ॥"

'अभिलषितार्थचिन्तामणौ'[138c] ३य-प्रकरणे, अ० १, श्लो० ८३७ एवं पाठाः सन्ति । यथा—

"वीरेश्वरो विधातव्यो मातृणामग्रतस्सदा ।

वीणात्रिशूलहस्तश्च वृषारूढो जटाधरः ॥"

तत्र 'वीरेश्वर'स्य कुत्रापि धनुर्बाणधरत्वं न सिध्यति । तथा वीणावादने हस्तद्वयस्यापि उपयोगात् , चतुर्हस्तैर्विशिष्टस्य 'वीरेश्वर'स्य बाणधारणासम्भवाच्च, अस्माकं मते—'धनुर्धरः' 'बाणं' इत्यपपाठौ । तेन श्लोकार्धयोः पाठोद्धारस्तु एवं भवेत्—

(७७ख) 'वीरेश्वरश्च भगवान् — जटाधरः ॥

(७८क) वीणाहस्तस्त्रिशूलञ्च वरं चैव प्रका(श)येत् ।

---

138a. See T. A. Gopinatha Rao : *Op. cit.*

138b. *Matsya-purāṇam* (*Vaṅgavāsī* Ed. Cal.).

138c. *Abhilaṣitārthacintāmaṇi*. MSS. No. 69 (Mysore, 1926). PartI.

Śl. 79; 80a; 81b. 'रूपमण्डने'[139] वर्तन्ते। तत्र (८०क-श्लोके) 'अक्षाब्जवीणापुस्तकं' इति छन्दोऽनुरोधात् समीचीनः पाठः।

Śl. 84b; 85. अक्षपद्मपुस्तकाऽभयाः हि विन्यासभेदैः महालक्ष्मी-महाकाली-महासरस्वतीनामायुधानि। तेन पद्मोत्पलयोरुभयोरेव एकत्र अनुपयोगात् (८४ख-श्लोकार्धे) 'अभयाक्षे' इति पाठो भवितुमुचितः। 'देवीमाहात्म्ये मार्कण्डेयपुराणीये' च देवीत्रयाणां लक्षणानि अनुसन्धेयानि।

Śl. 86—89. 'विष्णुधर्मोत्तरे'[140] ३य-खण्डे अ० ७१ श्लोकाः ८—११ प्रायशो यथायथम् उद्धृताः। तत्र पाठभेदाः यथा—

"(८६-श्लोके) आलीढस्थानसंस्थाना*१ चतुःसिंहे रथे स्थिता॥—(८७) १ खड्गं चर्म च यादव*। बाणचापे च कर्तव्ये*—॥

(८८) स्रुक्स्रुचौ* च तथा कार्यौ — वेदी०—०लु। —०शक्ती च कर्तव्ये—॥ (८९क) हस्तानां — — ०च्छान्तिकरः करः१। — महाभाग* —॥"

" 'विष्णुधर्मोत्तरे'* पाठभेदाः यथा—'(८६ख) —०स्वासनस्था च चतुस्सिंहे—॥ (८७)—खड्गश्चन्द्रश्च यादव! । — शङ्खपद्मे —॥ (८८क) स्रुक्स्रुचौ — तथोदककमण्डलू। (८९ख)—महाभाग! —॥"

'नृसिंहप्रासाद१'पाठभेदाः यथा—'(८६ख) —०स्थानसंस्थाना॥ (८७क) खड्गं चर्म च सर्वदा। (८८क) तथा दिव्यकमण्डलुः। (८९क) भजेच्छान्तिकरोऽवरः'। तेन अस्माक मते, पाठभेदान् सम्यक् विचार्य, एते समीचीनाः पाठोद्धारा यथा—

'(८७)—खड्गं चर्म —। बाणचापे च कर्तव्ये —॥ (८८क) स्रुक्स्रुवौ — थोदकमण्डलुः।

(८९) हस्तानां — करस्तु —। — महाभाग!—॥'

Śl. 90—94. 'विष्णुधर्मोत्तर'ाद्गृहीताः[141] किन्त्वन्तराऽन्तरा श्लोकाश्च केचन परित्यक्ताः। यथा—

(९०) — चण्डी हेमाभा सा —।
त्रिनेत्रा यौवनस्था च — — —
चारुपीनपयोधरा॥ — — —

---

139. See T. A. Gopinatha Rao: *Op. cit.*

140. *Ibid*: *Op. cit.* * (१) Both, quoted in the same. The *VD.* is apparently a different version.

141. Quoted by T. A. Gopinatha Rao: *Op. cit.*

(९१) — — — —बाहुर्विंशतिसंयुता ।
— — शङ्ख —बाणशक्तिपवीनपि ॥
[— — — —]
(९२क)— — सा सदा शुभा ।
[— — — —]
[— — — —]
[— — — —]
(९२ख) —०करस्तम्ब० — — ॥
(९३) — — रक्तभ्रू०— ।
— — — — ॥
(९४) याम्याङ्घ्रयाक्रान्त०— —०ाङ्घ्रयालीढगाह्वरे ।
— — ०शस्त्रेयं चाशेषरिपुनाशिनी ॥

*Sl.* 95—100. 'रूपमण्डन'ाद्गृहीताः[142] किन्त्वन्तराऽन्तरा त्यक्ताः । कुत्र कुत्रचिद् भेदोऽप्यस्ति । तद्यथा—

(९५) —०याः प्रतीहाराान्कथ०— ०क्रमात् ।
वेतालः करटश्चव— — — ॥
(९६) — कङ्कदश्चव — — ।
दंष्ट्राननविकटास्यास्स्फुरद्दशनोद्धला ॥
[— — — —]
(९७) — चैव खट्वाङ्गमूर्ध्वं— । [ ॥ ]
— — —०तोऽपसव्ये करटः पुनः ॥ [ । ]
(९८) —— ०खेटं च — — । [ ॥ ]
वामाप०— — —०नामकः ॥ [ । ]
(९९) तर्जनी वज्राङ्कुशे च दण्डं धूम्रक ईरितः । [ ॥ ]
—०योगेदं —०त्कङ्कदनामकः ॥ [ । ]
(१००) तर्जनी च त्रिशूलं च खट्वाङ्गं दण्ड एव च । [ ॥ ]
— नामभेदेन वामे दक्षे त्रिलोचनः (?) ॥ [ । ]
[— — — — —]

'गोपीनाथ'पादोद्धृतानां 'रूपमण्डनीय'-पाठानां निर्भरयोग्यतया वयंताननुसरामः । तेनास्मन्मते एवंरूपाः नामभेदाः चण्डीप्रतीहाराणाम्—

142. Quoted by T. A. Gopinatha Rao : *Op. cit.*

(९९ख) वेतालः करटश्चैव पिङ्गाक्षो भृकुटिस्तथा ॥

(९६क) धूम्रकः कङ्कदश्चैव रक्ताक्षश्च सुलोचनः ।

*Śl.* 101—106. 'हेमाद्रिव्रतखण्डे'[143] 'विष्णुधर्मोत्तर'ादुद्धृताः । कुत्र कुत्रापि पाठभेदाः सन्ति । केचन श्लोकास्त्यक्ताश्च । तत्र पाठभेदाः—

( १०१क-अर्धश्लोके ) दिव्यरूपाम्बरधरा— । (१०२) पृथक्चतु०—— सिंहासना —। सिंहासनस्थं कर्तव्यं— ॥

( १०३क )—महाभाग !— सा स्थिता ।(१०४) —— तस्याधः— । —०श्रेष्ठ ! —०स्थितम् ॥

(१०९)— —०स्था राजन् — । तस्याश्च द्वौ — द्विज ! ॥ (१०६क) — तत्पृष्ठे कुञ्जरद्वयम् ।

*Śl.* 107, 108. 'विश्वकर्मशास्त्र'ात् समुद्धृत इति प्रतीयते । तत्र भेदोऽप्यस्ति । श्लोकार्धं परित्यक्तं च । तद्यथा—

(१०७क) कोल्लापुरं विनाप्यत्र —०ोच्यते ।(१०८) —०की ततः । वामोर्ध्वे — —॥ [ बिभ्रती मस्तके लिङ्गं पूजनीया विभूतये । ]

*Śl.* 109—117. ध्यानमेतत् प्रायेण 'मत्स्यपुराणीय[145] अ० २६२' 'कात्यायनी'-ध्यानमनुवर्त्तते । सदृशध्यानानि अन्यत्र च दृश्यन्ते, तद्यथा 'अभिलषितार्थचिन्तामणौ'[146] 'मयदीपिकायाम'पि[147] । तेन मूलध्यानस्यास्य सार्वभौमिकता ज्ञायते । पाठभेदप्रदर्शनं पिष्टपेषणमात्रमिति मत्वा तस्मात् विरमामः । केवलं ( १०९ख-श्लोकार्धोक्तस्य ) 'त्रयाणामपि देवानामनुकारानुकारिणी' इति विशेषणं, 'अभिलषितार्थचिन्तामणौ' धृतं 'शिवनारायणात्मिका'-विशेषणं च मनसि आकारयतीति प्रदर्शयामः ।

*Śl.* 118. 'हस्तक'-शब्दस्यार्थस्तावत् पारिभाषिकः । 'करणं' 'मुद्रा' वाऽस्य समानार्थकशब्दौ । विनियोगश्च 'हस्तका'नामभिनये । तेन 'मस्तके'ति पाठो न कदापि अनुमोदनीयः ।

---

143. Hemādri : *Caturvargacintā-maṇi* (Ed. *Bibliotheca Indica*).

144. See T. A. Gopinatha Rao : *Op. cit.*

145. *Matsya-purāṇam. Adh.* 262. (*Vangavāsī* Ed., Cal.).

146. *Abhilaṣitārthacintāmaṇi*. MSS. No. 69 (Mysore, 1926). *Prakaraṇam* 3, *Adh.* 1, *śl.* 803—810.

147. T. A. Gopinatha Rao : *Op. cit.*

*Śl.* 119, 120. 'अभिनयदर्पणे[148] नन्दिकेश्वरविरचिते' प्रथमश्लोको द्विरावृत्तो वर्त्तते। तथा द्वितीयार्धपरिवृत्त्या श्लोकान्तरं वारैकमस्ति। श्लोकद्वयस्यैतस्य उद्धारेण अस्मन्मते दाक्षिणात्यमूलकत्वं 'देवतामूर्त्तिप्रकरण'स्य प्रमाणीभवति, प्रकारान्तरेण।

यथाशक्ति सर्वेषामपि अनेकेषां वा, पाठानां विचारं कृत्वा, ग्रन्थकृतो लिखनरीतिमधिकृत्य किञ्चित् वक्तव्यमस्ति। 'देवतामूर्त्तिप्रकरणं' सङ्कलनमात्रमेव। यथेच्छं हि ग्रन्थकृता पुस्तकान्तरस्थानां ध्यानानां परिवर्त्तनं परिवर्धनं च कृतम्। तन्न तन्त्रोपासना-शास्त्रादिभिरनुमोद्यते समर्थ्यते वा। तेनास्मन्मते शिल्पिनां कृते वर्णनमात्राण्येतानि, न तु ध्यानरूपाणि। तेन च सर्वथा नैतानि प्रत्यक्षरं ग्रहणयोग्यानि।

अन्यदपि वक्तव्यमस्ति—आदर्शपुस्तकं प्रतीको वा भूयशः प्रमादबहुलोऽपपाठपूर्णश्च दृश्यते। मन्ये, द्वितीयस्य आदर्शस्याभावात् पाठोद्धारो न सम्यक्तया सिध्यति।

---

148. Nandikeśvara's *Abhinayadarpaṇam* (Ed., Manomohan Ghosh) CSS. No. 5, *śl.* 37 and 247 ; 36.

# CHAPTER VI

## THE CONTENTS OF THE *DMP*.

It now remains to give a short summary of contents of the work, which consists of eight, 8 chapters, *Adhikāras*.

Chapter I consists of 59, fifty-nine verses. The first section (*śl.* 1—10) deals with *śilā-parīkṣā*, the examination and selection of suitable blocks of stone, timber etc., for the purpose of images (*ślokas* 2—9); the auspicious time for selecting such stone, wood etc. (*śl.* 10). The *pratimā-pramāṇam*, the height of the superior, the medium and the inferior types of images in comparison with the height of (a) the temple, (b) the door, (c) the *sanctum* (*śl.* 21—25); the height of images to be fitly worshipped in dwelling houses or outside dwelling houses, the *lakṣaṇas*, marks of inauspicious images and those of good ones. The omens and portents, *adbhutas* of different types viz., the heavenly *divya*, the atmospheric, *āntarikṣa* and the terrestrial, *bhauma* (*śl.* 36—41); and the effects of the celestial omens on the king (*śl.* 42); the omens of *liṅgas* (*śl.* 43) and their special effects (*śl.* 44); the ominous signs of images and their effects (*śl.* 45—47); other kinds of omens (*śl.* 48, 49); and the effects differently of the various types of disturbances on the living beings (*śl.* 50—54a); the duration of their effects (54b); the propitiation or pacification of these disturbing omens (55, 56) and the effect of the same (57); instructions for commencement of journeys and for the entry of images etc. (58) ?; the astronomical considerations for the installation of images (59).

Chapter II of *DMP*., dealing with the *pratimā-tāla-nirṇaya*, determination of the respective heights for images, consists of 33, thirty-three verses.

The first few verses (1—3) give the units for measurement, which increase in multiples of ten. The highest working unit is the *tāla*.

Images vary in height from one *tāla* to fifteen *tālas* (*śl.* 4-13a); no images should be made of longer proportions. The respective proportions are given, of limbs in images of seven *tālas* (*śl.* 13b-15) in images of seven and a half, 7½ *tālas* (*śl.* 16—18); in images of eight *tālas* (*śl.* 19—21) and in images of eight and a half, 8½ *tālas* (*śl.* 22—24); and lastly in those of nine tālas (*śl.* 25—32).

Chapter III of 28, twenty-eight verses begins with directions for plotting the ground-plan of buildings (*śl.* 1, 2). The respective positions of the different deities in the general plan, *devatā-pada-sthānam,* are next given (*śl.* 3—8). The presiding deities with respective positions in a plan of sixty-four plots, *devatā-dṛṣṭi-sthānam,* are next given (*śl.* 9—21). The directions (of the compass) to which the respective deities should face in temples, are next given (*śl.* 24—27).

Chapter IV consisting of 67, sixty-seven verses, describe images of Brahman and his manifestations (*śl.* 1—7); of his consort (*śl.* 8); of the *Vedas* and *Nṛtyaśāstram*; the position of other auxiliary deities in a temple for Brahman (*śl.* 14, 15); the eight attendants of Brahman (*śl.* 16—20).

The twelve forms of Sūrya are next described (*śl.* 21—34); the position of the subsidiary deities are next given (*śl.* 35—37) and the attendants of Sūrya (*śl.* 38—46).

The nine chief planets, *navagrahas* are described, next (*śl.* 48—58); as also the ten guardians of quarters, *daśa-dik-pālas.*

Chapter V deals wholly with Viṣṇu and consists of 116, one hundred and sixteen verses.

The first few verses (*śl.* 1—6) show the suitability of particular forms of Viṣṇu for particular castes. The conditions, when mutilated images are to be accepted or rejected, are next given (*śl.* 7).

The next section on the twentyfour forms of Viṣṇu, *Caturviṃśati-mūrtayaḥ,* enumerates the distribution of the objects, held in hands, for the various forms (*śl.* 8—13) and the order of distribution (*śl.* 14).

The next is a long section (*śl.* 15—63) on the examination and selection of *śālagrāma* stones, *śālagrāma-śilā-parīkṣā* ; (*śl.* 15) the suitable form and the suitable sizes (*śl.* 16, 17) for stones are given ; as also the unsuitable types (*śl.* 18—20) with certain modifications (*śl.* 21) ; the differences in merit owing to variation in colours (*śl.* 22) ; and the respective names according to variation of colours (*śl.* 23, 24) ; and the proportion of the discus, *cakra-pramāṇam.*

In the next subsection, *cakra[viśeṣa]-lakṣaṇāni,* the particular types of *cakras* are described (*śl.* 26—36) ; the differences in name according to colours and their particular merits (*śl.* 37—40) ; other kinds of *cakras* and their resultant merits in worship (*śl.* 41—43, 45—51) (*śl.* 44) ; the ten *avatāras* of Viṣṇu are described (śl. 52—60) ; the banning of exposure of *cakras* (*śl.* 61) and of the sales etc., of the same (*śl.* 62) ; the glorification of the *Śālagrāma* stone is next given.

In the following section, particular forms of Viṣṇu images are described—Vāmana (*śl.* 69—71) ; Rāma (*śl.* 72a) ; Ananta-Balarāma (*śl.* 75) ; Nṛsiṃha (*śl.* 72—74, 77—82, 83—85) ; Nara-Varāha (*śl.* 76) ; Jalaśāyin (*śl.* 86—90) ; Vaikuṇṭha (*śl.* 91—93) ; Viśvarūpa (*śl.* 94—97) ; Ananta (*śl.* 98—101) ; Trailokyamohana (*śl.* 102—105) ; of Pannagāśana (*śl.* 64—68) and the distribution of auxiliary deities in Viṣṇu Temple (*śl.* 106—109) and the description of Viṣṇu's attendants (*śl.* 110—115).

Chapter VI of *DMP.* is a lengthy one, consisting of 169, one hundred and sixty-nine verses and describes the images of Rudra and the phallus, *liṅga.*

The first few verses give descriptions of Sadyojāta (*śl.* 1, 2) ; of Vāmadeva (*śl.* 3—5) ; of Aghora (*śl.* 6—12) ; of Tatpuruṣa (*śl.* 13) ; of Īśa (*śl.* 14).

Next, are described Mṛtyuñjaya (*śl.* 15, 16) ; Vijaya (*śl.* 17, 18) ; Kiraṇākṣa (*śl.* 19) ; Aghora ? (*Śl.* 20) ; Śrīkaṇṭha (*Śl.* 21, 22) ; Mahādeva (*Śl.* 23, 24), Sadāśiva (*Śl.* 25, 26).

Then are given descriptions, successively, of Ardhanārīśvara (*Śl.* 27—30) ; and Umā-Maheśvara (*Śl.* 31, 32 ) ; Kṛṣṇa-Śaṅkara (*Śl.* 33, 34) ; Kṛṣṇa-Kārtikeya (*Śl.* 35a) ; Śiva-Nārāyaṇa (*Śl.* 36—41) ; Hari-Hara-Pitāmaha (*Śl.* 42, 43) ; (Sūrya ?)Hari-Hara-Pitāmaha (*Śl.* 44—46) ; Candrāṅka-Pitāmaha (*Śl.* 47, 48) ; Caṇḍabhairava (*Śl.* 49—51) ; Virūpākṣa (*Śl.* 52, 53) ; Tryambaka (*Śl.* 54, 55) ; Hari-Hara-mūrti (*Śl.* 56, 57).

From the union of Śaṅkara and Kṛṣṇa, result 32, thirty-two different varieties of images, which are not described, but are to be known from instructions.

The *Lingas* form the subject of an entire lengthy section (*Śl.* 59—152) ; eight different metallic substances for making *phalluses* are first given (*Śl.* 59) ; the proportions of metallic *phalluses* (*Śl.* 60) and their varieties (*Śl.* 61) and *phalluses* of jewels (*Śl.* 62) are given.

The proportions of *phalluses* made of timber (*Śl.* 63) ; their varieties (*Śl.* 64) ; the suitable kinds of timber (*Śl.* 65,66) ; their characteristics (*Śl.* 67) ; the suitable types of building for the various kinds of *phalluses* (*Śl.* 68) are described.

Then, follow, the proportions of the stone *phalluses* (*Śl.* 69, 70) ; their various names (*Śl.* 70—74) ; the proportions of the *phalluses* to the size of the Temples (*Śl.* 75—78) and to the *sanctum* (*Śl.* 79—80) ; the size of the *phallus* (*Śl.* 81, 82) ; the divisions of a phallus (*Śl.* 82, 83).

The *Nāgara-linga*, its three classes and proportions (*Śl.* 84—86) ; the *Drāviḍa-linga*, its classes and proportions (*Śl.* 87—88) ; the *Veśara-lingas* are next described.

The Astrological considerations as regards Temples of the *phalluses* etc. (*Śl.* 90—94) ; the auspicious signs (*Śl.* 95) ; the clock-wise spiral and the colours which are conducive to happiness (*Śl.* 96) ; the method of marking lines on any *phallus* ; the shape of the upper parts of *phalluses* (*Śl.* 98, 99) ; the bad signs of *phalluses* (*Śl.* 100) and the proportions of crystal and wooden *phalluses* (*Śl.* 101) follow, successively.

The next subsection is concerning *Bāṇa-liṅgas*. The places of origin of *Bāṇa phalluses* (śl. 102, 103) ; the selection of *Bāṇa-liṅgas* (śl. 104) ; the bad *Bāṇa-liṅgas* (śl. 105, 106) ; the conditions, when even pieces of stone are sacred (śl. 107) ; the sacredness of *Bāṇas*, from any place whatsoever (śl. 108) ; the shape of *Bāṇas* which give wealth, etc., (śl. 109-110) ; the sacredness of *Bāṇas*, under all conditions (śl. 111—114) ; the merits of installing *Bāṇas* (śl. 115—121) ; the glory of worshipping *Bāṇas* having one to fourteen *asras* (śl. 122) are described, in order.

The characteristics of sacred tanks attached to Śiva shrines (*śl*. 123) ; the merits of taking baths in the same (*śl*. 124a) and the sins for stepping across waters, with which Śiva is washed (*śl*. 124b) ; the procedure of circumbulating sacred shrines of deities (*śl*. 125) and special restrictions with regard to Jaina shrines (*śl*. 126) ; the directions to which the water conduit, *praṇāla*, should face (*śl*. 127) ; the characteristics of pedestals etc., (*śl*. 128, 129) and conduits etc., (*śl*. 129—132 and 150) ; and of sluices (*śl*. 133) are given.

The diverse parts of a *Pīṭha*, base (*śl*. 134—138) ; the directions against making the *liṅga* or *pīṭha* too small or big (*śl*. 139) and defects for these (*śl*. 140) are described.

The varieties of Pedestals (*śl*. 141,142) and the characteristics of the different Pedestals (*śl*. 142—146) and their special qualities (*śl*. 147—148) ; the directions for making Pedestals, to be of the same class with the *phalluses* (*śl*. 149) ; the characteristies of *Mukha-liṅga* (*śl*. 151) and the names of the different faces (*śl*. 152) are described.

Next, are described, Śiva Temples with one door (*śl*. 153, 154); and with four doors (*śl*. 155—157) ; and the Guardians facing the east (*śl*. 158, 159), the south (*śl*. 160, 161), the west (*śl*. 162, 163) and the north (*śl*. 164, 165), respectively ; and lastly, the positions of the animal vehicles, *vāhanas* for deities (*śl*. 166, 167) ; the height of the images, to which, their respective *vāhanas* should look up (*śl*. 168).

Chapter VII, consisting of 74, seventy-four verses gives descriptions of the twentyfour Jaina *Tīrthaṅkaras* and their attendant *yakṣas* and *yakṣiṇīs*. The names of the twenty-four Tīrthaṅkaras (*śl*. 1—3) ; the respective bodily colours (*śl*. 4), their *Dhvajas*, flags (*śl*. 5, 6) and the Lunar mansions, *Bhas* of birth (*śl*. 7—9) for the different Jinas ; and their birth-asterisms, *Rāśis* (*śl*. 10, 11) are given.

Next, follow, the names of the *yakṣas*, that attend upon the service of the *Jinas*, *Jinopāsaka-yakṣas* (*śl*. 12, 13) ; the attendant female deities to the *Jinas*, *Śāsanadevīs* (*śl*. 14—16).

The next subsection deals with descriptions of the *yakṣas* and the *yakṣiṇīs* for each particular Jina, *Jina-yakṣa-jakṣiṇī-mūrtis*—the male and the female attendants for the twenty-four *Jinas* being given in pairs (*śl*. 17—65).

There is a second twelve-handed variety of Cakreśvarī, described (*śl*. 66—68a) ; as also the names for the eight attendants to the *Vītarāga*, the self-controlled one (*śl*. 68b, 69) ; and the characteristics of the eight attendants to Jinendra (*śl*. 70—73).

Chapter VIII and the last containing 112, one-hundred and twelve verses, concerns itself almost wholly with descriptions of female deities, *Devī-mūrti-lakṣaṇas*.

The opening verse (*śl*. 1) gives the general description of the Image Gaurī, *Gaurī-mūrtīnāṃ sāmānya-lakṣaṇam ;* then follow the names of twelve different varieties of Gaurī (*śl*. 2), as well as their descriptions (*śl*. 3—14) ; the deities in a shrine of Gaurī (*śl*. 15—17), and the attendants to Gaurī (*śl*. 18—20) have afterwards been described.

The next section (*śl*. 21—35) describes Gaṇeśa (*śl*. 21) and his different forms, Heramba (*śl*. 22, 23), Gajānana (*śl*. 24), Vakratuṇḍa (*śl*. 25), Ucchiṣṭa-gaṇapati (*śl*. 26), Heramba (*śl*. 27), Kṣipra-gaṇapati (*śl*. 28) ; the deities in a shrine of Gaṇeśa ; the attendants of Gaṇeśa (*śl*. 30—35).

The following section (*śl.* 36—42) deals with Kārtikeya; his twelve-handed form (*śl.* 36—40); the two-handed form (*śl.* 41a) and the four-handed form (*śl.* 41b, 42) are described.

The next section describes (*śl.* 43—46a) the five different forms of an entirely unknown female deity, *Pañcalīlayā* (?) with the special characteristics of each particular form (*śl.* 44—47a).

The next section (*śl.* 47b—58) consists of the group of nine female deities, *Navadurgās*; their names (*śl.* 47b—49a); their individual characteristics (*śl.* 49—58). This is followed by a description of Kṣetrapāla (*śl.* 59, 60).

The next section (*śl.* 61—78) deals with the Mothers, *Mātṛs*—who number eight (*śl.* 61—75), Bhairava (*śl.* 76), Gaṇeśa (*śl.* 76) and Vīreśvara (*śl.* 77-78).

The next section describes the twelve different forms (*śl.* 79—85) of Sarasvatī; their general character (*śl.* 79) and the particular characteristics of each, individually (*śl.* 80—85). The eighteen-handed form of Bhadrakālī is described, next (*śl.* 86—89).

The next section describes the twenty-handed form of Caṇḍī (*śl.* 90—94) and the attendants of Caṇḍī (*śl.* 95—100).

The deity, described next, is Lakṣmī (*śl.* 101—106). This is followed by Mahālakṣmī (*śl.* 107, 108). Then, is given, a description of the deity Kātyāyanī, with ten hands (*śl.* 109—117).

The use of postures and gestures (*śl.* 118); and of the movements of the hands and eyes for the purpose of (dramatic) expression (*śl.* 119); and the special function of the different parts of the body in Dance (*śl.* 120)—form the closing part. The last two (*śl*, 121-122) verses contain the author's apology for preparing the compilation, and the final benediction.

# CONCLUSION

As has been clearly pointed out, the *Devatā-mūrti-prakaraṇam* of *Sūtrabhṛt* Maṇḍana, the *Ātmaja*, son of Śrīkṣetra, is a compilation.

The author has used many Texts which he has freely modified, that is, at his will he altered their readings. Such changes, as far as they concern the *Dhyāna ślokas*, are not authorised by the Tantra or Upāsana Śāstras. We can, therefore, take these verses at best, only as mere descriptions of images, for the guidance of artists and they are not to be taken too rigorously, or to be followed too literally.

The work demonstrates a striking spirit of *rapprochement* or mutual assimilation on the part of the different sects ; even the Jaina deities are allotted a conspicuous place. Thus we have not only the well-known *Hermaphroditic* Umā-Maheśvara and the Ardha-Nārīśvara forms but also such composite forms as the Kṛṣṇa-Śaṅkara, the Kṛṣṇa-Kārtikeya.

Not only, we have such deities as Śiva-Nārāyaṇa, Hari Hara-Pitāmaha, (Sūrya ?)Hari-Hara-Pitāmaha, Candrāṅka-Pitāmaha, Hari-Hara —revealing close admixture of Śiva, Viṣṇu, Brahman, Sūrya and Candra ; but we are told of thirty-two different images formed by the combination of Kṛṣṇa and Śaṅkara—which have not, unfortunately, been described (for fear of prolixity but they must be learnt from Brāhmaṇas). It is, however, doubtful if all the described images were actually worshipped. Sadāśiva Worship seems already to be extinct by the time.

Finally, my thanks are due to the learned Editor and the Publishers of this well-known Series, who invited me to write out this Introduction to the *DMP*. I have tried to do my work, as best as possible, in spite of the limitations of time and resources etc., at my disposal. I shall be highly gratified if it will be of any service to students of the subject.

31st Chaitra, 1341 B. E : }
SANTINIKETAN }

HARIDAS MITRA

# देवतामूर्त्तिप्रकरणस्य

## विषयानुक्रमणी

—ः * ः—

* अत्र पुंवाचकाः शब्दा यक्षाभिधायकाः स्त्रीवाचकाः शासनदेवताभिधायकाः ।

विषयानुक्रमणी समाप्ता ।

# ग्रन्थकर्त्तुर्मङ्गलाचरणम्

[आदौ यः सूत्रधारस्त्रिभुवनरचनासूत्रलक्ष्यस्य(स्व?)रूपो
येनेदं देवदैत्योरगधरणितलं पर्वताकाशरूपम् ।
सृष्टं चित्रं विचित्रं जगदिति सकलं जन्तुवृत्तादिसर्वं
वन्द्योऽसौ सृष्टिकर्त्ता सुरदनुजनरैः सर्पविद्याधराद्यैः ॥]

# देवतामूर्त्तिप्रकरणम्

## प्रथमोऽध्यायः

ॐ नमो ग॰ शाय

[ अथ शिलापरीक्षा ]

धातुरत्नशिलाकाष्ठचित्रलेपसमुद्भवम् ।
यद्रूपं विधिवत्तस्य विधिं वक्ष्यामि वस्तुनः ॥१॥
एकवर्णा घना स्निग्धाऽऽमूलाग्रादार्जवान्विता ।
अजघण्टारवाघोषा सा पुंशिला प्रकीर्त्तिता ॥२॥
स्थूलमूला कृशाग्रा या कांस्यतालसमध्वनिः ।
स्त्रीशिला कृशमूलाऽग्रस्थूला षण्ढेति निःस्वना ॥३॥

---

२ । अजघण्टारवाघोषेति । अजगललम्बिन्या घण्टाया रव इवाऽऽघोषो रवो यस्याः सेत्यर्थः । सा च किङ्किण्यपरपर्याया क्षुद्रा घण्टिका । यच्च मयमते 'गजघण्टारवे'ति (अ० ३३, ८ श्लो० ) पाठस्तस्यापि क्षुद्रघण्टेत्यर्थः, गजगले तादृश्या एव घण्टिकाया बन्धनप्रसिद्धेः । अत्र च किं मयमतीयपाठदर्शनाद् गजघण्टैव लेखकप्रमादादिहाजघण्टात्वमापन्ना, अत्रत्यपाठस्वरसादज-घण्टैव वा मयमते गजघण्टात्वमापन्ना, उतोभयमेव पृथक् प्रमाणमित्यपि च न सुनिर्णेयम् । काश्यपशिल्पे तु "घण्टाध्वनिसमोन्नादे"ति (अ० ४९, ९९ श्लो०) पाठः ।

३ । स्थूलमूलेति । कांस्यतालसमध्वनिरिति कांस्यनिर्मितेन तालेन वाद्यभाण्डविशेषेण समस्तुल्यो ध्वनिर्यस्याः सा । तथाच मयमते—

स्थूलमूला कृशाग्रा या कंसतालसमध्वनिः ।
स्त्रीशिला ... ... ... ॥ इति । (अ० ३३, ९ श्लो०)

कंसं कांस्यञ्च पर्यायशब्दौ । यद्यपि—

तालः करतलेऽङ्गुष्ठमध्यमाभ्याञ्च सम्मिते ।
गीतकालक्रियामाने तालः खड्गादिमुष्टिषु ॥

[ शिलाभेदेन कर्मभेदः ]

## लिङ्गानि प्रतिमा मिश्रं कुर्यात् पुंशिलया बुधः ।
## युञ्ज्यात् स्त्रीशिलया सम्यक् पीठिकाशक्तिमूर्त्तयः ॥४॥

---

द्रुमभेदे करास्फाले तालस्तु हरितालके ।
वाद्यभाण्डे च कांस्यस्य ... ॥

इति विश्वदर्शनात् तालशब्देनैव कांस्यनिर्मितवाद्यविशेषलाभात् कांस्यपदं ( मयमते च कंसपदं ) व्यर्थम्, तथापि 'सम्भेदेनान्यतरवैयर्थ्यमि'ति न्यायात् 'नयनाश्रु' इत्यादिवद् विशेषप्रतिपत्त्यर्थं वा तदुपात्तमिति ज्ञेयम् । स्पष्टमाह काश्यपशिल्पे—

"तालशब्दसमाकारा दीर्घा या सा शिला स्त्रियः" इति ।
(अ० ४९, ९६ श्लो०)

निःस्वनेति । निर्नास्ति स्वनो यस्याः सा निःस्वना शब्दहीना । व्यक्तमाह—काश्यपीये—

"अस्त्रिश्च झर्झरी इ(रू)क्षा स्वरहीना नपुंसका" इति । (अ० ४९,९६ श्लो०)

मयमते त्वविकलोऽयं श्लोकः परिदृश्यते । एवं मिश्राभ्यामाकृतिस्वराभ्यां भेद उक्तः । केवलया आकृत्यापि स्त्रीपुंनपुंसकादिभेदमाह काश्यपः—

चतुरस्रा च वस्वस्रा स्त्रीशिलेति प्रकीर्त्तिता ॥
आयतास्रा च वृत्ता च दशद्वादशकोणका ।
पुंलिङ्गा सा शिला ख्याता सुवृत्ता सा नपुंसका ॥ इति ।
(अ० ४९, ९७-९८ श्लो०)

शिलानां वृद्धाबालायुवत्यादिसंज्ञा, अन्ये च विशेषाः काश्यपशिल्पे (अ० ४९) मयमते (अ० ३३) आग्नेये (अ० ५३) च द्रष्टव्याः ।

४ । लिङ्गं त्रिविधं निष्कलं सकलं मिश्रञ्चेति । तत्र निष्कलं लिङ्गाख्यम्, सकलं प्रतिमा, सा च प्रस्तावाच्छिवस्यैव । मिश्रञ्च तयोर्मिश्रणादुत्पन्नं मुखलिङ्गाख्यम् । तथा चोक्तं मयमते—

निष्कलं सकलं मिश्रं लिङ्गञ्चेति त्रिधा मतम् ।
निष्कलं लिङ्गमित्युक्तं सकलं बेरमुच्यते ॥
मुखलिङ्गं तयोर्मिश्रं लिङ्गार्चाकृतिसन्निभैः ।
बिम्बमूर्त्तिः शरीराभा विश्वमूर्त्तिस्वरूपकैः ॥

षण्ढोपलेन कर्तव्यं (व्ये?) ब्रह्मकूर्मशि(ले त ?) लैस्तथा ।
प्रासादनल(तल ?)कुण्डादि कर्म कुर्याद्विचक्षणः ॥५॥

---

छन्नदेहप्रतिच्छन्दप्रतिमाङ्कैस्तु नामभिः ।
इत्यो देवसमाख्यातः ... ... ॥ (अ० ३३, १-३ श्लो०)

एवं त्रिविधमपि लिङ्गं पुंशिलया कार्यमित्याह—लिङ्गानीति । काश्यपशिल्पे तु 'पुंशिलाभिः कृतं लिङ्गम्' (अ० ४९, ५९ श्लो०) इत्यविशेषेण लिङ्गमात्रोल्लेखः कृतः । व्यक्तमाह मयमते—

"सकलं निष्कलं मिश्रं कुर्यात् पुंशिलया सुधीः" इति ।
(अ० ३३, १० श्लो०)

पीठिकेत्यादि—पीठिका पिण्डिका गौरीपीठमित्यर्थः, न तु पादशिला,

पुंशिलाभिः कृतं लिङ्गं स्त्रीशिलाभिस्तु पिण्डिका ।
नपुंसकशिलाभिस्तु पादाधारं समाचरेत् ॥ (अ० ४९, ५९-६० श्लो०)

इति काश्यपशिल्पे,

बिम्बार्थं पुंशिला ग्राह्या पीठार्थं स्त्रीशिला तथा ।
नपुंसकशिला पादशिलार्थमखिले मता ॥ इति । (अ० १, २९ श्लो०)

शिल्परत्नोत्तरभागे च पादशिलापीठशिलयोर्द्वयोः पृथग्जातीयशिलासाध्यत्वेन निर्देशात् । लौकिकदृष्ट्यापि युक्तमचेतनस्य पादाधारस्यैव क्लीबशिलया घटनम्, योनिपीठस्य च शक्तिस्वरूपस्य स्त्रीशिलया निर्माणमिति । ग्रन्थकृता तु वक्ष्यमाणश्लोके ब्रह्मकूर्मशिलैरित्युक्त्वा पादाधारशिला संगृहीतेति ज्ञेयम् ।

शक्तिमूर्त्तयः स्त्रीदेवताप्रतिमाः । तथा च मयमते—

"युञ्जीयात् स्त्रीशिलाः सम्यक् नारीबेरञ्च पिण्डिका" (अ० ३३, १० श्लो०)

नारीबेरञ्च पिण्डिकेति नारीबेरे स्त्रीप्रतिमायां पिण्डिकायां गौरीपीठे च इत्यर्थः । अत्र मूर्त्तय इति द्वितीयार्थे प्रथमा ।

५ । षण्ढोपलेनेति । नपुंसकशिलया ब्रह्मकूर्मशिले कर्त्तव्ये, तथा प्रासादतलकुण्डादि कर्म च कुर्यादित्यर्थः । एवञ्च 'तथे'त्यर्द्धान्तरितमेकं पदम् । तथा च मयमते—

षण्डोपलेन कर्त्तव्यं ब्रह्मकूर्मशिले तथा ।
नन्द्यावर्त्तशिले वापि कर्त्तव्या तेन चाऽऽत्मना ॥
प्रासादतलकुड्यादिकर्म कुर्याद् विचक्षणः । (अ० ३३, ११-१२ श्लो०)

ब्रह्मकूर्मशिले इति तत्तन्नामकपादाधारशिलाद्वयी । तथा चाऽधस्तादुद्धृतयोः काश्यपशिल्परत्नवचनयोः नपुंसकशिलाकर्त्तव्यतया 'पादाधार' इति 'पादशिलार्थ'मिति च यदुक्तं तस्यैवायं व्यास इति मन्तव्यम् । पादशिला हि प्रतिमाधस्तात् स्थापनीया शिला, तस्याश्च ब्रह्मशिलेति कूर्मशिलेति च द्वौ भेदौ । कूर्मशिलेत्यत्र 'कर्मशिले'त्याग्नेयमात्स्यसमराङ्गणसूत्रधारेषु पाठः । तदेतदुभये अपि शिले उपर्यधःक्रमेण पादयोरधः स्थापनीये इति पुराणादिभ्यः समुपलभ्यते । तथा चाग्नेये—

ब्रह्मभागप्रवेशञ्च ज्ञात्वा लिङ्गस्य चोच्छ्रयम् ।

न्यसेद् ब्रह्मशिलां विद्वान् सम्यक् कर्मशिलोपरि ॥ (अ० ९२, १४ श्लो०)

इति । अत्र च कथं ब्रह्मशिलैवोपरिष्टात् स्थापनीया न कर्मशिला, कर्मशिला चाधस्तादेव स्थापनीया न ब्रह्मशिलेति प्रश्ने तयोरौत्तराधर्यं कारणं परावरत्वमेवेत्युत्तरयिष्यन् स्थापन-परिपाटीमाह मात्स्ये—

अधः कूर्मशिला प्रोक्ता सदा ब्रह्मशिलाऽधिका ।

उपर्य्यवस्थिता तस्या ब्रह्मभागाधिका शिला ॥ (अ० २६६, ९ श्लो०)

इति । अधः कूर्मशिला प्रोक्ता (तस्याः) अधिका ब्रह्मभागाधिका शिला ब्रह्मशिला तस्या उपरि अवस्थितेत्यन्वयः, ब्रह्मभागाधिक्यमेव तस्या उपर्य्यवस्थाने हेतुरिति भावः ।

एवञ्च मूलग्रन्थे 'कर्त्तव्यम् इति, ब्रह्मकूर्मशिलैरि'ति चापपाठौ ; शुद्धः पाठस्तु 'कर्त्तव्ये ब्रह्मकूर्मशिले' इति, मयमते तथा पाठदर्शनात्, कोषादौ शिलार्थकस्य 'शिल'शब्दस्यानुपलम्भा-दर्थासङ्गतेश्च । न हि ब्रह्मशिलया कूर्मशिलया वा किञ्चित् क्रियते अपि तु ते एव क्रियेते इति कर्मकरणयोरविवेक एवात्रासङ्गतिः । तथा चानयोः कर्त्तव्यतामाह—समराङ्गणसूत्रधारे—

याताभिधेक (यावताभ्यधिका ?) ब्रह्मशिला ब्रह्मांशतो भवेत् ।

ताव(त्या ? ता)भ्यधिका कार्य्या तस्याः कर्मशिला बुधैः ॥ इति ।

(अ० ७०, १४० श्लो०)

अन्यत्र च—

"नपुंसकशिलाभिस्तु कर्त्तव्या ब्रह्मणः शिलाः"

इति ब्रह्मशिलाया षण्ढोपलकर्त्तव्यतामुपदिशन् सर्वान् संशयानपनुदति ।

'प्रासादनलकुण्डादी'ति पाठोऽपि प्रामादिक इव प्रतिभाति, अन्यत्र तादृशपाठानुपलम्भा-दर्थासङ्गतेश्च । न च नालमिति पाठः निर्माल्यद्वारलक्षणस्य तस्य पुंशिलया कर्त्तव्यतोपदेशात् । तथा च काश्यपे—

"पुंशिलया तु कर्त्तव्यं नालं तु द्विदलान्वितम्" इति । (अ० ८० १३ श्लो०)

तस्माद् ग्रन्थान्तरसंवादात् 'तल' इत्येव पाठो बन्धनीमध्ये परिकल्पितः ।

यद्यपि 'कुड्यादी'ति मयमते पाठस्तथापि साधकबाधकयुक्त्यभावाद् भवेदपि 'कुण्डादीत्य'पि पाठ इति बुद्ध्या पाठान्तरं नोपकल्पितम् । मयमतेऽपि 'नन्द्यावर्त्तशिले' इत्यपपाठ इव प्रतिभाति, द्वित्वानुपपत्तेः, 'नन्द्यावर्त्तशिला' इति शुद्धः पाठः ।

यथोक्तशिलाभिर्यथोक्तकार्याकरणे दोषमाह काश्यपः—

"कृतञ्च विपरीतं यत्तत् सदा कर्त्तृनाशनम्" (अ० ४९, ६० श्लो०)

विपरीतमिति यदुक्तं तदेव विवृण्वन्नाह शिल्परत्न उत्तरभागे—

स्त्रीशिलाकल्पिते लिङ्गे राष्ट्रं राजा च नश्यति ।

पुंशिलाकल्पिते पीठे लिङ्गे पीठे च षण्डके ॥

[ शिलास्थितिक्रमेण प्रतिमाशिरोविधानम् ]

**प्राक् पश्चाद्दक्षिणे सौम्ये स्थिता भूमौ तु या शिला ।**
**प्रतिमायाः शिरस्तस्याः कुर्यात् पश्चिमदक्षिणे ॥६॥**

---

स्त्रिया पुंसा च भूपीठे कृते स्याद्राष्ट्रनाशनम् ।
एवं विज्ञाय तद्योग्यामानयेदम्बरावृताम् ॥' ( १।२८-२९ )

ध्वनिश्च छेदसमयोत्पन्न इति ज्ञेयम् । तथा च शिल्परत्ने—

पूर्वोत्तरशिरोयुक्ता घण्टानादस्फुलिङ्गवत् ।
छेदे.................. ॥ (अ० १४ । १६-१७ श्लो,)

६ । प्राक् पश्चादिति । या शिला भूमौ प्राक् पश्चात् पूर्वपश्चिमायतत्वेन दक्षिणे सौम्ये दक्षिणोत्तरायतत्वेन च स्थिता शायितेत्यर्थः तस्यास्तन्निर्मितायाा इत्यर्थः, प्रतिमायाः शिरः पश्चिम-दक्षिणे पश्चिमे दक्षिणे च कुर्यात् । प्राक्पश्चादवस्थितायाः शिलाया पश्चिमांशे दक्षिणोत्तराव-स्थितायाः शिलाया दक्षिणांशे शिरः कुर्यादित्यर्थः । यच्च मयमते—

"शिलामूलमवाक् प्रत्यगुदग्रं प्रागुदग्दिशि" (अ० ३३, १८ श्लोः ) इति,

काश्यपे—

प्रागग्रां चोदगग्रां वा शिलां संग्राह्य देशिकः ।
प्रागग्रे पश्चिमं मूलमुदगग्रन्तु दक्षिणे ॥ ( अ० ४९,६१ श्लो, )

इति, पूर्वोद्धृतशिल्परत्नपूर्वभागवचने च ( अः १४, १६ श्लो० ) प्रागुदगग्रत्वमभिहितम्, तत्तु शिलाया ऊर्द्ध्वाधोज्ञानार्थं न तु प्रतिमायाः शिरःपादादिज्ञानार्थम् । एतच्च नैर्ऋतैशानकोणायताया वह्निवाय्वायतायाश्च शिलाया व्यावर्त्तनार्थम् । मयमते तु कोणायताया अपि शिलाया मूलाग्रमाह ।

तथा च—

"नैर्ऋत्यैशानदेशाग्रा वह्न्यग्रा वह्निवायुगा" (अः ३३, १९ श्लो०)

इति । अस्यायमर्थः—नैर्ऋत्यैशानदेशाग्रा नैर्ऋत्यैशानायतनत्वेनावस्थिता शिला ऐशान-देशाग्रा ऐशान्यां दिशि तस्याः शिर इति ऐशानपदस्य क्रियावृत्त्याऽन्वयः कार्यः ।

शिलायाः शिरःपादादिस्थानकथनञ्च प्रतिमायाः शिरःपादादिज्ञानार्थम् । तत्र च ग्रन्थ-कृतोक्तः समाधिः—

"प्रतिमायाः शिरस्तस्याः कुर्यात् पश्चिमदक्षिणे"

इति, यच्च मयमते कोणायताया अपि शिलायाः प्रतिमार्थं ग्राह्यता प्रतिपादिता 'नैर्ऋत्यैशान-देशाग्रा' इत्यादिवचनेन, तच्छिल्परत्नवचनविरोधाच्चिन्त्यमेव ; शिल्परत्नपूर्वभागे दिगायतायाः शिलाया ग्राह्यत्वं कोणायतायाश्च वर्ज्यत्वमाह । तथा च—

स्निग्धा शस्त्रसहा गभीरनिनदा दिश्याहिताग्रा शिला ।
ग्राह्या बिम्बविधौ ... ... ... ॥ इति ।
(अ० १४, ११ श्लो०)

दिश्याहिताग्रेति दिशि आहितम् अर्थादवस्थितम् अग्रं यस्यास्तादृशीत्यर्थः। दिक्-शब्दश्रुत्या जायमानं जनानां कोणभ्रममपनयन् स्पष्टमाह तत्रैव ग्रन्थकारः—

"दुःस्पर्शापदिशं निवेशितशिरोदेशा विवर्ज्या शिला" इति । (श्लो० १०)

अपदिशमिति अन्तरालं कोणमित्यर्थः। तथा च अमरः—

"क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्" इति ।

कोणनिवेशितशिराः शिला वर्ज्येत्यर्थः ।

"कोणशीर्षा शिला त्याज्या भर्त्तुर्दुःखकरी यतः" (अ० १४, ४ श्लो०)

इति च स्पष्टात् स्पष्टतरं तत्रैव ।

ग्रन्थकृता कृतः समाधिस्तु न युक्तिं सहते। तथा हि—पूर्वोक्तैः काश्यपमयशिल्परत्नादिवचनै-रैकमत्येन शिलायाः प्रागुदगग्रत्वं प्रतिपद्यते, एवञ्च प्रागग्रया शिलया प्रागग्रा, उदगग्रया शिलया चोदगग्रैव प्रतिमा युक्तितः करणीयेति किमिति तं पन्थानमुत्सृज्य ग्रन्थकृता नवीन इव पन्थाः समवलम्बितः किं वा तत्र प्रमाणं तेनोपलब्धमिति न जानीमः ।

यद्यप्यस्मत्सूचितेऽर्थे स्फुटं कमपि ग्रन्थान्तरसंवादं नोपलभामहे, तथाऽप्येकत्र दृष्टः शास्त्रार्थो बाधकमन्तरेणान्यत्रापि तथेति न्यायादयमर्थः समर्थयितुं शक्यते। तथा हि, दारवप्रतिमाया उपादानस्य वृक्षस्य यथामूलं यथोर्द्ध्वं यथापार्श्वञ्च प्रतिमाया अपि शिरःपादादिकं कुर्यादित्युप-लभ्यते। तथा च बृहत्संहितायाम्—

लिङ्गं वा प्रतिमा वा यथादिशं यस्मात् ।
तस्माच्चिह्नयितव्या दिशो द्रुमस्योर्द्ध्वमथ वाऽधः ॥ ( अ० ५८, ७ श्लो० )

अस्यायमर्थः—लिङ्गं शिवलिङ्गं वा प्रतिमा अर्चा वा यस्माद् द्रुमवद् वृक्षवत् स्थाप्या तस्माद्धेतोर्द्रुमस्य दिश आशाश्चिह्नयितव्याः, एवमूर्द्ध्वाधरौ भागावपि चिह्नयितव्यौ। अयमर्थः—द्रुमस्य यः पूर्वाभिमुखो भागः स एव प्रतिमायाः पूर्वभागः कार्यः। एवं दक्षिणो दक्षिणः। पश्चिमः पश्चिमः। उत्तरभाग उत्तरभाग एव कार्यः। वृक्षस्य योऽधोभागः स एव प्रतिमाया अधोभागः कार्यः। वृक्षस्य य ऊर्द्ध्वभागः सोऽपि प्रतिमाया ऊर्द्ध्वभागः कार्य इति तद्विवृतौ भट्टोत्पलः। बृहत्संहिताविवृतिकृद्धृतकाश्यपे च—

वृक्षवत् प्रतिमा कार्या प्राग्भागाद्युपलक्षिता ।
पादाः पादेषु कर्तव्याः शीर्षमूर्ध्वे तु कारयेत् ॥ इति ।

[ आकृतितो ग्राह्यशिलाकथनम् ]

## निविडा निर्व्रणा मृद्वी सुगन्धा मधुरा शिला।
## सर्वार्चालिङ्गपीठेषु श्रेष्ठा कान्तियुता च या ॥७॥

---

काश्यपशिल्पे तु—

वृक्षस्य पूर्वभागे तु मुखं पृष्ठन्तु पश्चिमे ।

दक्षिणं सव्यपार्श्वं स्याद्वामपार्श्वं तथोत्तरम् ॥ इति । (अ० ७९, २३ श्लो०)

परं तत्र तत्र शिलाया ऊर्द्धाधःकथनं प्रतिमाया अपि ऊर्द्धाधोनिर्णयाभिप्रायकम्, अन्यथा तदुक्तेरुपयोगो दुरुपपाद एव स्यात्। एवञ्च मयमते शिलाया अधोऽग्रादिकमभिधाय मुखपृष्ठादि-निर्णयार्थम्—

"मुखमुद्धरणेऽधोऽंशमूर्द्धभागं शिरो विदुः"

इति यदुक्तं तदपि निराकुलं सम्पद्यते। इतरथात्र शिलायाः शिरोमुखादिवचनमव्यावर्त्तकं भवेत्। श्लोके 'उद्धरणे' इत्यस्य शिलाहरणे, 'शिर' इत्यस्य च मुखपृष्ठभाग इत्यर्थः। व्यक्तमाह काश्यपशिल्पे—

"अधोभागं मुखं ख्यातं पृष्ठमूर्द्धगतं भवेत्" इति। ( अ० ४९, ६८ श्लो० )

मूलश्लोके पश्चिमादिशिरस्कत्वकथनं शयानशिलाभिप्रायेण। दण्डायमानशिलायास्तु भूमिष्ठोऽंशो मूलम्, ऊर्द्धभागश्चाग्रमिति ज्ञेयम्। तदुक्तं मयमते—

"अग्रमूर्द्धमधो मूलं पाषाणस्य स्थितस्य तु" इति। ( अ० ३३, १८ श्लो० )

७। निविडा सुश्लिष्टाङ्गसन्धिः, निर्व्रणा स्फोटकाकृतिबिन्दुरहिता। बिन्दुमाह काश्यपः—

............त्रिविधा बिन्दुरेव हि।

कृष्णलोहनिभाकारा कृष्णभ्रमरसन्निभा ॥

शिखिपिच्छसमाकारा............ ॥ इति ( अ० ४९, ४६-४७ )

सुगन्धेति स्वभावादेव सुरभिः न त्वौपाधिकगन्धवती। यथाह निन्दितशिलामधिकृत्य काश्यपः—

"वर्षातपाग्निगन्धाञ्च सुकीर्णा क्षारवारिणा" इति ( अ० ४९, ४२ श्लो० )

अथवा वर्षातपाग्निभिरुत्पद्यमानो दुर्गन्ध एव न तु सुगन्ध इति तद्वर्जनमभिहितं काश्यपशिल्पे। सुवर्ण इव पाषाणेऽपि गन्धोद्भेदोऽर्वाग्दृक्परोक्षोऽपि अदृष्टवशात् कदाचिद् भवेदपीति नात्र विकल्पः करणीयः। मधुरा नयनप्रिया सुदृश्येति यावत्।

'............मधुरस्तु रसे विषे'

"मधुरं रसवत् स्वादु प्रियेषु मधुरोऽन्यवत्" ॥ इति विश्वः।

[ त्याज्यशिलाकथनम् ]

विमलं हेमकांस्यादिचिह्नं लोहमयं हि यत् ।
य(त?)थान्यद् विविधं चिह्नं प्रतिमायां भयावहम् ॥८॥

[ वर्णतो ग्राह्यशिलाकथनम् ]

कपोतकुमुदभृङ्गमाषमुद्गासितोपमा ।
पाण्डुरा घृतपद्माभा सर्वार्चासु सुखावहा ॥९॥

---

या च कान्तियुता स्निग्धा शिला सा सर्वार्चालिङ्गपीठेषु सर्वास्वर्चासु प्रतिमासु, सर्वेषु लिङ्गेषु पीठेषु चेत्यर्थः, श्रेष्ठा ।

मृद्वी अरूक्षा, न त्वनायासच्छेद्यत्वप्रयोजककोमलतापरपर्यायमृदुत्ववती । मयमते शिलाया बालायुवत्यादिसंज्ञाप्रस्तावे—

टङ्कघातादिमृद्वी या मन्दपक्वेष्टकोपमा ।
शिला बाला मता तज्ज्ञैः सर्वकर्मसु निन्दिता ॥ (अ० ३३, ४३ श्लो०)

इत्यनेन तादृशशिलाया बालसंज्ञकत्वेन वर्जनीयत्वकथनात् । अस्यार्थः—टङ्कघातादिमृद्वी पाषाणदारणास्त्राघातविषये मृद्वी कोमला तदस्त्रेणानायासच्छेद्या, अत एव मन्दपक्वेष्टकोपमा अल्पपक्वेष्टकतुल्या । यदि च मृद्वीत्यत्र यथाश्रुतार्थग्रहणे आग्रहस्तदा 'टङ्कघातादिमृद्वी'त्यस्य परकृतटङ्काघातेन मृद्वी जर्जरा इत्येवार्थः करणीयः । तदेतत् सर्वं ग्राह्यशिलालक्षणमाह मयमते—

स्निग्धा गम्भीरनिर्घोषा सुगन्धा शीतला मृदुः ।
नविलावयवा तेजःसहिता यौवना शिला ॥
मध्यमा सर्वयोग्या स्यात् सर्वकर्मार्थसिद्धिदा । इति ।
(अ० ३३, १४-१९ श्लो०)

विमलमिति । विमलं विशिष्टमलयुक्तं मलिनमिति यावत्, हेमकांस्यादिचिह्नम् । यथान्यदिति यच्चान्यदित्यर्थः । तथेत्याशङ्कितपाठस्तु निःसन्देहार्थम् । काश्यपशिल्पे—

"रेखाबिन्दुकलङ्कादिसंयुक्तां परिवर्जयेत्" इति । (अ० ४९, ४४ श्लो०)

९ । शिला तावद्वर्णतश्चतुर्विधा—श्वेता, रक्ता, पीता, कृष्णा चेति । तथा च काश्यपशिल्पे—

"श्वेता रक्ता च पीता च कृष्णा चैव चतुर्विधा" इति । (अ० ४९, ३२ श्लो०)

एतासु च ब्राह्मणादिवर्णक्रमेणोपयोगमाह तत्रैव—

"श्वेता रक्ता च पीता च विप्रादीनां क्रमाद् भवेत्" इति । (अ० ४९, ३८ श्लो०)

यच्चात्र पद्ये कृष्णशिलाया वर्जनाभिप्रायकं तदनुपादानं तदपि मसीकृष्णापरम्, तत्रैव—

"कृष्णकृष्णा विनाशाय श्वेतकृष्णा तथैव हि" (अ० ४९, ४९ श्लो०)

[ शिलाद्याहरणक्षणः ]

सुदिने शुभनक्षत्रे शकुने शान्तचेष्टिते ।
प्रतिमागृहकाष्ठादिकर्म कार्यं न चान्यथा ॥१०॥

इति शिलापरीक्षा

---

इत्येकान्तकृष्णाया एव दोषश्रुतेः,

"हरिता कृष्णा शिला ग्राह्या सितवर्णा विशेषतः" इति (अ० ४९, ५० श्लो०)

ईषत्कृष्णाया ग्राह्यत्वविधानाच्च । अग्निपुराणे तु—

"पाण्डरा ह्यरुणा पीता कृष्णा शस्ता तु वर्णिनाम्" (अ० ४३, १२ श्लो०)

इत्यविशेषेण सर्वेषामेव ब्राह्मणादिवर्णानां सर्वाऽप्यरुणपीतादिशिला प्रशस्तेत्याह। इह तु कासाञ्चन कृष्णानां कासाञ्चन पीतानामविशेषेण च श्वेतानां शुभावहत्वमाह—कपोतेत्यादिना। तथा च कपोतादिवत् कृष्णशिला, घृतवत् पद्मवच्च पीतशिला श्वेतशिला च सर्वार्चासु प्रयुक्ता कर्त्तुः सुखमावहतीति श्लोकार्थः।

१०। सुदिन इति। शुभनक्षत्रे कर्त्तुरिति ज्ञेयम्, सुदिने इति सामान्यतोऽभिधाय विशिष्य पुनर्नक्षत्रोपादानस्य फलाभावात्। सुदिनञ्च ज्योतिःशास्त्रादाववलोकनीयम्। विश्लिष्याह काश्यपः—

"सुमासतिथिनक्षत्रलग्नवारे शिलां ग्रहेत्" इति। (अ० ४९, १८ श्लो०)

मयमते च शिलाद्याहरणं प्रकृत्य—

उत्तरायणमासे तु शुक्लपक्षे शुभोदये।
प्रशस्तपक्षनक्षत्रे मुहूर्त्ते करणान्विते ॥ इति। (अ० ३३, १९-२० श्लो०)

शकुने शान्तचेष्टित इति। शकुने शुभाशुभाशंसिनि निमित्ते शान्तचेष्टिते शान्तं सौम्यं कर्मानुकूलमिति यावत् चेष्टितं यत्र तादृशे सति। शकुनमाह काश्यपशिल्पे—

वायसं दक्षिणे वामादागतञ्च तथैव च।
श्येनं वै दक्षिणे वामे गृध्रं मांसेन संयुतम् ॥
कन्यागोदर्शनञ्चैव गावस्त्वावाहनं तथा।
दधिना पूर्णकुम्भञ्च क्षीरकुम्भं तथैव च ॥
पुष्पं पुष्पधृतं वापि सुतवतीयु(वद्यु)वतिस्त्रियः।
अन्नञ्च मांसहास्व (हारञ्च) शिवभक्तिपरायणम् ॥
ज्वालानलञ्च दीपञ्च जलैः पूर्णघटावृतम्।
त(व)राहं च गजं चैव वेण्या चात्यन्तसुन्दरी ॥
शुभान्येतानि भौमानि अशुभं विपरीतकम्।

उल्कापातं दिशां दाहं महावातप्रवर्त्तनम् ।

अशुभान्यन्तरीक्षाणि ... ... ॥ इत्यादि ।

(अ० ४९, २०-२९ श्लो०)

शुभशकुनश्चेद् गच्छेदशुभश्चेन्न गच्छेदित्याशयः । तदुक्तं काश्यपे—

"शुभश्चेद् गमनं कुर्यादशुभश्चेद् विवर्जयेत्" इति । (अ० ४९, २८ श्लो०)

कालातिपाताक्षमे कर्मण्यशुभशकुनदर्शने प्रतिप्रसवमप्याह तत्रैव—

अशुभे त्वग्निमास्तीर्य शिवेनैव शताहुतीः ।

समिदाज्योदनैः कुर्यान्नागान्नं नागभूषणम् ॥

दत्त्वा शिवं नमस्कृत्य गच्छेदाचार्यशिल्पि च । इति ।

(अ० ४९, २९-३० श्लो०)

प्रतिमेति । एतदुपलक्षणम्, लिङ्गपीठाद्युचितशिलाद्याहरणेऽप्येतद् योज्यम् । तथा च काश्यपे—

आचार्यः शिल्पिसंयुक्तः शिलाग्रहणमाचरेत् ।

दिव्यान्तरीक्षभौमानि निमित्तान्युपलक्षयेत् ॥ (अ० ४९, १९ श्लो०)

इति सामान्यतः शिलाहरणमुक्तम् ।

मयमते च—

प्रशस्तपक्षनक्षत्रे मुहूर्त्ते करणान्विते ।

गच्छेल्लिङ्गं समुद्दिश्य वनं चोपवनं गिरिम् ॥

... ... ... ...

निमित्तैः शकुनैर्योग्यैः सह मङ्गलशब्दकैः ॥ इति ।

(अ० ३३, २०-२२ श्लो०)

अत्र लिङ्गमित्युपलक्षणमर्चादीनाम् । वनं चोपवनमिति प्रतिमोचितद्रुमोद्देशकथनम्, गिरिमिति लिङ्गाद्युपयोगिशिलास्थानकथनम् ।

शिलाग्रहणमन्त्रमाह तत्रैव—

ॐ अपक्रामन्तु भूतानि देवताश्च सगुह्यकाः ।

युष्मभ्यन्तु बलिर्भूयात् क्रूराश्च वनदेवताः ॥

कर्मैतत् साधयिष्यामि क्रियतां व[वा ?]स्तुपर्ययः । इति ।

(अ० ३३, २७-२८ श्लो०)

प्रतिमोचितकाष्ठग्रहणे विशेषमाह बृहत्संहितायाम्—

कर्त्तुरनुकूलदिवसे दैवज्ञविशेषिते शुभनिमित्ते ।

मङ्गलशकुनैः प्रास्थानिकैश्च वनसम्प्रवेशः स्यात् ॥ इति ।

[ प्रासादमानेनोर्द्ध्वस्थज्येष्ठप्रतिमालक्षणम् ]

**एकहस्ते तु प्रासादे मूर्त्तिरेकादशाङ्गुला ।**
**दशाङ्गुला ततो वृद्धिर्यावद्धस्तचतुष्टयम् ॥११॥**

[ ऊर्द्ध्वस्थप्रतिमाया मध्यमाधमभेदकथनम् ]

**द्व्यङ्गुला दशहस्तान्ता शतार्द्धान्ताऽङ्गुलस्य च ।**
**अतो विंशदशांशोना मध्यमार्चा कनीयसी ॥१२॥**

---

एवञ्च तत्रैव ग्राह्याग्राह्यवृक्षानभिधाय तदभिमन्त्रणमाह—

अर्चार्थममुकस्य त्वं देवस्य परिकल्पितः ।
नमस्ते वृक्ष पूजेयं विधिवत् संप्रगृह्यताम् ॥
यानीह भूतानि वसन्ति तानि बलिं गृहीत्वा विधिवत् प्रयुक्तम् ।
अन्यत्र वासं परिकल्पयन्तु क्षमन्तु तान्यद्य नमोऽस्तु तेभ्यः ॥ इति

(अ० ५८, १०-११ श्लो०)

गृहकाष्ठाहरणप्रकारोऽप्येतदनुरूपः समराङ्गणसूत्रधारे परिलक्ष्यते । तत्राहरणमन्त्रस्तु—

अपक्रामन्तु भूतानि यानि वृक्षाश्रितानि हि ।
कल्पनं वर्त्तयिष्यामि क्रियतां वासपर्ययः ॥ (अ० १६, २७ श्लो०)

तदेतत् सर्वं शेषतो जिज्ञासुभिः समराङ्गणसूत्रधार-(अ० १६) काश्यपशिल्प-(अ० ४९) मयमत-(अ० ३३) बृहत्संहितासु (५८ वनसम्प्रवेशाध्याये) द्रष्टव्यम् ।

११ । अथ प्रथमं प्रासादमानेन ऊर्द्ध्वस्थायाः ( दण्डायमानायाः ) प्रतिमायाः प्रमाणम् उच्यते—एकहस्त इत्यादिना । एकहस्ते प्रासादे मूर्त्तिरेकादशाङ्गुला भवेत् । ततो हस्तचतुष्टयं यावत् प्रतिहस्ते दशाङ्गुला वृद्धिः । अर्थात्, द्विहस्ते प्रासादे मूर्त्तिरेकविंशत्यङ्गुला, त्रिहस्ते एकत्रिंशदङ्गुला, चतुर्हस्ते एकचत्वारिंशदङ्गुला भवेत् ।

१२ । ततो दशहस्तान्ता द्व्यङ्गुला वृद्धिः, अर्थात् पञ्चहस्तादिदशहस्तान्तप्रासादेषु प्रतिहस्ते द्व्यङ्गुला वृद्धिः, तेन पञ्चहस्तप्रासादे त्रिचत्वारिंशदङ्गुला प्रतिमा, षड्हस्तप्रासादे पञ्चचत्वारिंशदङ्गुला, सप्तहस्ते सप्तचत्वारिंशदङ्गुला, अष्टहस्ते ऊनपञ्चाशदङ्गुला, नवहस्ते एकपञ्चाशदङ्गुला, दशहस्ते त्रिपञ्चाशदङ्गुला प्रतिमा स्यादित्यर्थः ।

शतार्द्धान्ताङ्गुलस्य च—शतार्द्धान्ता शतार्द्धहस्तान्ता वृद्धिरित्यस्य विशेषणम् । वृद्धिरङ्गुलस्य एकाङ्गुलस्य ; एकादशहस्तादिपञ्चाशद्धस्तान्तप्रासादेषु प्रतिहस्ते एकैकाङ्गुला वृद्धिरित्यर्थः । तेन च एकादशहस्तप्रासादे चतुःपञ्चाशदङ्गुला प्रतिमा, द्वादशहस्ते पञ्चपञ्चाशदङ्गुला, त्रयोदशहस्ते

षट्पञ्चाशदङ्गुला, चतुर्दशहस्ते सप्तपञ्चाशदङ्गुला, पञ्चदशहस्ते प्रासादे अष्टपञ्चाशदङ्गुला प्रतिमा। एवंक्रमेण वृद्ध्या पञ्चाशद्धस्तप्रासादे त्रिनवत्यङ्गुला प्रतिमा भवेत्। इत्यूर्द्ध्वस्थाः पञ्चाशत् प्रतिमाः।

अत उक्तमानावधि विंशांशोना विंशेनांशेन न्यूना मध्यमार्चा मध्यमप्रतिमा, दशांशोना दशमांशेन हीना च कनीयसी क्षुद्रतरा अर्चा कथितेति शेषः। एवञ्च एकहस्तप्रासादे एकादशाङ्गुलं ज्येष्ठप्रतिमायाः परिमाणम्, दशाङ्गुलं विंशतिविभक्ताङ्गुलस्योनविंशांशाश्च मध्यमप्रतिमापरिमाणम्, दशाङ्गुलं दशधा विभक्तस्याङ्गुलस्य नवांशाश्च कनिष्ठप्रतिमापरिमाणमिति। एवमन्यास्वपि प्रमाणाधिकप्रतिमासु ज्ञेयम्।

## प्रासादपरिमाणेन ऊर्द्ध्वस्थप्रतिमापरिमाणम्।

| प्रासादस्य हस्तमानम् | | | प्रतिमाया अङ्गुलिमानम् | प्रासादस्य हस्तमानम् | | | प्रतिमाया अङ्गुलिमानम् |
|---|---|---|---|---|---|---|---|
| १ | ... | ... | ११ | २० | ... | ... | ६३ |
| २ | ... | ... | २१ | २१ | ... | ... | ६४ |
| ३ | ... | ... | ३१ | २२ | ... | ... | ६५ |
| ४ | ... | ... | ४१ | २३ | ... | ... | ६६ |
| ५ | ... | ... | ४३ | २४ | ... | ... | ६७ |
| ६ | ... | ... | ४५ | २५ | ... | ... | ६८ |
| ७ | ... | ... | ४७ | २६ | ... | ... | ६९ |
| ८ | ... | ... | ४९ | २७ | ... | ... | ७० |
| ९ | ... | ... | ५१ | २८ | ... | ... | ७१ |
| १० | ... | ... | ५३ | २९ | ... | ... | ७२ |
| ११ | ... | ... | ५४ | ३० | ... | ... | ७३ |
| १२ | ... | ... | ५५ | ३१ | ... | ... | ७४ |
| १३ | ... | ... | ५६ | ३२ | ... | ... | ७५ |
| १४ | ... | ... | ५७ | ३३ | ... | ... | ७६ |
| १५ | ... | ... | ५८ | ३४ | ... | ... | ७७ |
| १६ | ... | ... | ५९ | ३५ | ... | ... | ७८ |
| १७ | ... | ... | ६० | ३६ | ... | ... | ७९ |
| १८ | ... | ... | ६१ | ३७ | ... | ... | ८० |
| १९ | ... | ... | ६२ | ३८ | ... | ... | ८१ |

[ आसनस्थोत्तमप्रतिमापरिमाणम् ]

हस्तादेर्वेदहस्तान्ते षड्वृद्धिः स्यात् षडङ्गुला ।
तदूर्द्ध्वं दशहस्तान्ता त्र्यङ्गुला वृद्धिरिष्यते ।
एकाङ्गुला भवेद् वृद्धिर्यावत् पञ्चाशहस्तकम् ॥१३॥

| प्रासादस्य हस्तमानम् | | | प्रतिमाया अङ्गुलिमानम् | प्रासादस्य हस्तमानम् | | | प्रतिमाया अङ्गुलिमानम् |
|---|---|---|---|---|---|---|---|
| ३९ | ... | ... | ८२ | ४५ | ... | ... | ८८ |
| ४० | ... | ... | ८३ | ४६ | ... | ... | ८९ |
| ४१ | ... | ... | ८४ | ४७ | ... | ... | ९० |
| ४२ | ... | ... | ८५ | ४८ | ... | ... | ९१ |
| ४३ | ... | ... | ८६ | ४९ | ... | ... | ९२ |
| ४४ | ... | ... | ८७ | ५० | ... | ... | ९३ |

१३। इदानीमासनस्थमूर्त्तीनां परिमाणमुच्यते। षडङ्गुला आसनस्था मूर्त्तिः हस्तादे-रेकहस्ताद् वेदहस्तान्ते चतुर्हस्तपर्यन्तप्रासादे षड्वृद्धिः षट् षट् वृद्धिर्यस्याः प्रतिमायास्तादृशी स्यात्। संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवदित्युक्ते अर्थात् एकहस्तप्रासादे मूर्त्तिः षडङ्गुला, द्विहस्तप्रासादे द्वादशाङ्गुला, त्रिहस्ते अष्टादशाङ्गुला, चतुर्हस्ते चतुर्विंशत्यङ्गुला भवेत्। तदूर्द्ध्वं पञ्चहस्तप्रासादमारभ्य दशहस्तान्ता त्र्यङ्गुला वृद्धिरिष्यते। तथा हि—पञ्चहस्त-प्रासादे सप्तविंशत्यङ्गुला मूर्त्तिः, षड्ढस्तप्रासादे त्रिंशदङ्गुला, सप्तहस्ते त्रयस्त्रिंशदङ्गुला, अष्टहस्ते षट्त्रिंशदङ्गुला, नवहस्ते ऊनचत्वारिंशदङ्गुला, दशहस्ते द्विचत्वारिंशदङ्गुला मूर्त्तिर्भवेदित्यर्थः।

ततः पञ्चाशहस्तकं यावत् एकादशहस्तादिपञ्चाशद्धस्तान्तमित्यर्थः, एकाङ्गुला प्रतिहस्ते एकैकाङ्गुला वृद्धिर्भवेत्। तेन एकादशहस्तप्रासादे त्रिचत्वारिंशदङ्गुला मूर्त्तिः, द्वादशहस्ते चतुश्चत्वारिंशदङ्गुला मूर्त्तिः, एवंक्रमेण वृद्ध्या पञ्चाशद्धस्तप्रासादे द्व्यशीत्यङ्गुला मूर्त्तिर्भवेदित्यर्थः। इत्यासनस्था द्वितीयाः प्रतिमाः पञ्चाशत्संख्याकाः।

प्रासादपरिमाणेन आसनस्थप्रतिमापरिमाणम्।

| प्रासादस्य हस्तमानम् | | | प्रतिमाया अङ्गुलिमानम् | प्रासादस्य हस्तमानम् | | | प्रतिमाया अङ्गुलिमानम् |
|---|---|---|---|---|---|---|---|
| १ | ... | ... | ६ | ५ | ... | ... | २७ |
| २ | ... | ... | १२ | ६ | ... | ... | ३० |
| ३ | ... | ... | १८ | ७ | ... | ... | ३३ |
| ४ | ... | ... | २४ | ८ | ... | ... | ३६ |

[ आसनस्थमध्यमाधमप्रतिमापरिमाणम् ]

विंशत्येकाधिका ज्येष्ठा विंशत्योना कनीयसी ।
ऊर्ध्वार्चा प्रथमा प्रोक्ता आसनस्था द्वितीयिका ॥१४॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ९ | ... | ... | ३९ | ३० | ... | ... | ६२ |
| १० | ... | ... | ४२ | ३१ | ... | ... | ६३ |
| ११ | ... | ... | ४३ | ३२ | ... | ... | ६४ |
| १२ | ... | ... | ४४ | ३३ | ... | ... | ६५ |
| १३ | ... | ... | ४५ | ३४ | ... | ... | ६६ |
| १४ | ... | ... | ४६ | ३५ | ... | ... | ६७ |
| १५ | ... | ... | ४७ | ३६ | ... | ... | ६८ |
| १६ | ... | ... | ४८ | ३७ | ... | ... | ६९ |
| १७ | ... | ... | ४९ | ३८ | ... | ... | ७० |
| १८ | ... | ... | ५० | ३९ | ... | ... | ७१ |
| १९ | ... | ... | ५१ | ४० | ... | ... | ७२ |
| २० | ... | ... | ५२ | ४१ | ... | ... | ७३ |
| २१ | ... | ... | ५३ | ४२ | ... | ... | ७४ |
| २२ | ... | ... | ५४ | ४३ | ... | ... | ७५ |
| २३ | ... | ... | ५५ | ४४ | ... | ... | ७६ |
| २४ | ... | ... | ५६ | ४५ | ... | ... | ७७ |
| २५ | ... | ... | ५७ | ४६ | ... | ... | ७८ |
| २६ | ... | ... | ५८ | ४७ | ... | ... | ७९ |
| २७ | ... | ... | ५९ | ४८ | ... | ... | ८० |
| २८ | ... | ... | ६० | ४९ | ... | ... | ८१ |
| २९ | ... | ... | ६१ | ५० | ... | ...(प्रतिमासङ्ख्याः) | ८२ |

१४ । विंशत्येकेति । विंशत्येकत एकविंशत्यङ्गुलाद् अधिका द्वाविंशत्यङ्गुलादिपरिमाणा प्रतिमा ज्येष्ठा । विंशत्योना विंशत्याङ्गुलेन हीना कनीयसी प्रतिमा भवतीत्यर्थः । एवञ्च कण्ठतोऽनुक्तमप्यत्र मध्यमप्रतिमापरिमाणं पारिशेष्यादुन्नेयम् ; तथा हि द्वाविंशत्याद्यङ्गुलपरिमाणा ज्येष्ठा, विंशत्योना कनीयसी, विंशैकविंशत्यङ्गुला च मध्यमेति पर्यवसितोऽर्थः । अयञ्च प्रासाद-मानेन प्रतिमापरिमाणनिर्णयप्रकारो ग्रन्थकृदुपज्ञमेव नान्यत्र शिल्पशास्त्र उपलभ्यते ।

[ द्वारमानेन ज्येष्ठप्रतिमापरिमाणम् ]

**द्वारोच्छ्रयोऽष्टधा कार्यो भागमेकं परित्यजेत् ।**
**सप्तभागं त्रिधा कृत्वा द्विभागा प्रतिमा भवेत् ॥१५॥**

---

१९। पूर्वं प्रासादमानेन प्रतिमामानमभिहितम्, इदानीं प्रासादद्वारमानेनापि तद्व वक्तुं प्रथमं ज्येष्ठप्रतिमापरिमाणमाह—द्वारोच्छ्रय इति। आदौ द्वारस्यौन्नत्यम् अष्टधा विभज्यैकमंशं परित्यज्यावशिष्टान् सप्तांशान् त्रिधा विभज्य द्विभागेन प्रतिमाः कुर्यात्। एकांशेन च पीठिकेत्यनुक्तमप्यत्रोह्यम्। तथा च बृहत्संहितायाम्—

देवागारद्वारस्याष्टांशोनस्य यस्तृतीयोऽंशः ।
तत्पिण्डिकाप्रमाणं प्रतिमा तद्द्विगुणपरिमाणा ॥ इति (अः ५७, ३ श्लो०)
द्वारमानाष्टभागोना प्रतिमा स्यात् सपिण्डिका ।
द्वौ भागौ प्रतिमा तत्र तृतीयांशश्च पिण्डिका ॥ (अः ५९, १६ श्लो०)

इति च। अष्टांशोनस्येति कृताष्टभागस्य द्वारमानस्याष्टमभागेन हीनस्येत्यर्थः। द्वारप्रमाणमाह तत्रैव प्रासादलक्षणमधिकृत्य—

यो विस्तारो भवेद्व यस्य द्विगुणा तत्समुन्नतिः ।
उच्छ्रायाद्व यस्तृतीयांशस्तेन तुल्या कटिः स्मृता ॥
विस्ताराद्धं भवेद्व गर्भो भित्तयोऽन्याः समन्ततः ।
गर्भपादेन विस्तीर्णं द्वारं द्विगुणमुच्छ्रितम् ॥ (अः ५५, १-२ श्लो०)

इति। तथा च दशहस्तविस्तृते प्रासादे गर्भः पञ्चहस्तः गर्भस्य पादेन तुर्यांशेन द्वारविस्तारो भवेदिति सपादहस्तप्रमाणा द्वारस्य विस्तृतिः उन्नतिश्च सार्द्धद्विहस्तपरिमाणा। एवञ्च—द्वासप्ततिहस्तविस्तृते प्रासादे षट्त्रिंशद्धस्तमितो गर्भः, गर्भपादसममानतया च नवहस्ता द्वारस्य विस्तृतिस्तद्द्विगुणोऽष्टादशहस्तश्चोच्छ्रयः तस्य चाऽष्टधा विभक्तस्य एकमंशं षडङ्गुलाधिकहस्तद्वयं परित्यज्य शिष्टानामष्टादशाङ्गुलाधिकपञ्चदशहस्तानां त्रिभागीकृतानां भागद्वयपरिमिता द्वादशाङ्गुलाधिकदशहस्ता प्रतिमा भवेदिति निष्कर्षः। एतच्च 'एकहस्ते तु प्रासादे मूर्त्तिरेकादशाङ्गुले'(११ श्लो०)ति यदुक्तं ततोऽन्यादृशमेवेति मन्तव्यम्, निरुक्तद्वारमानत एकहस्तविस्तृतप्रासादे द्वारस्य षडङ्गलत्वेन यथोक्तभागवशात् प्रतिमाया अष्टाविंशतियवपरिमाणत्वप्रसक्तेः।

समराङ्गणसूत्रधारे तूत्तममध्यमाधममूर्त्तीः प्रकृत्य—

(भव ? तच्च) द्वारं त्रिधा (चत्वा ? भक्त्वा) पीठं भागेन कल्पयेत् ।
(ता ? द्वा) भ्यां (तु) प्रतिमा कार्या ज्येष्ठा (स्या ? यां) मानमीदृशम् ॥
(अः ७०, १४७ श्लो०)

इति यदुत्तमप्रतिमापरिमाणमुक्तं तत् प्रकृतग्रन्थस्य कनिष्ठप्रतिमामानानुरूपम्। तथा कनिष्ठमूर्त्तिपरिमाणे—

[ मध्यमप्रतिमापरिमाणम् ]

द्वारं विभज्य नवधा भागमेकं परित्यजेत् ।
अष्टौ भागांस्त्रिधा कृत्वा द्विभागे प्रतिमा भवेत् ।

[ कनिष्ठप्रतिमापरिमाणम् ]

त्रिभागैर्भाजिते द्वारे द्विभागेऽर्चा प्रकीर्त्तिता ॥१६॥

इति प्रासादद्वारमानेन प्रतिमाप्रमाणम् ।

---

.........हीनायां विदध्याद् द्वारमष्टधा ।
ए(व ? क) मुत्सृज्य शेषेण ****** ॥ (अः ७०, १४९ श्लो०)

इत्यपि यदुक्तं तत्तु प्रक्रान्तश्लोकानुसारीति दृश्यते । एवम् अस्माभिरुपरिष्टात् प्रदर्शयिष्यमाणं तदुक्तमध्यमप्रतिमापरिमाणमपि वक्ष्यमाणमध्यमप्रतिमापरिमाणानुसारीति ज्ञेयम् । न चैवं समराङ्गणसूत्रधारप्रामाण्यात् प्रकृतेऽपि ग्रन्थे वैपरीत्येन अधममध्यमोत्तमप्रतिमापरिमाणलक्षकतया श्लोकानां परिपाटीः स्वीकृत्य तदेकवाक्यता करणीयेति वाच्यम्, बृहत्संहितायां मध्यमादिभेदमनाहत्य केवलमेतच्छ्लोकोक्तपरिमाणस्यैव ग्रहणेनास्यैवोत्तमत्वस्वीकारात् । मत्स्यपुराणेऽपि—

द्वारोच्छ्रयस्य यन्मानमष्टधा तत्तु कारयेत् ।
भागमेकं ततस्त्यक्त्वा परिशिष्टन्तु यद् भवेत् ॥
भागद्वयेन प्रतिमा............ । ( अ० २५८, २४-२५ श्लो० )

इति द्वारमानेनैकमेव प्रतिमापरिमाणमुक्तमिति सर्वं सुसमञ्जसम् ।

१६ । मध्यमाधमप्रतिमापरिमाणमाह—द्वारमिति त्रिभागैरिति च । स्पष्टोऽर्थः । मध्यमप्रतिमालक्षणमाह समराङ्गणसूत्रधारे—

मध्यायां नवधा द्वारं कृ ( ते ? त्वै ) कं भागमुत्सृजेत् ।
शेषान् भागांस्त्रिधा कृत्वा पीठं भागेन कल्पयेत् ॥
अर्चामुभाभ्याम्............ । इति । ( अ० ७०, १४८-१४९ श्लो० )

अधमप्रतिमापरिमाणमप्याह तत्रैव—'हीनायां विदध्याद् द्वारमष्टधे'त्यादि प्रागेवोल्लिखितम् । द्वारप्रमाणायाः प्रतिमाया विनियोगमाह समराङ्गणसूत्रधारे—

'यात्रार्था प्रतिमा द्वारप्रमाणेन विधीयते । इति । ( अ० ७-१४६ )

यात्रार्था उत्सवार्थं निर्मिता ।

द्वारमानेन प्रतिमापरिमाणेऽन्येऽपि विशेषाः समराङ्गणसूत्रधारतो जिज्ञासुभिर्विज्ञेया ।

प्रतिमानां मुखाद्यवयवपरिमाणादिकञ्च मत्स्यपुराण ( अ० २५८ )-बृहत्संहिता ( अ० ५७ )-काश्यपशिल्प ( अ० ५० )-समराङ्गणसूत्रधारादिषु ( अ० ७६ ) द्रष्टव्यम् ।

[ गृहपूज्यायाः प्रतिमायाः परिमाणम् ]

आरभ्यैकाङ्गुलादूर्द्ध्वं पर्यन्ते द्वादशाङ्गुलम्।
गृहेषु प्रतिमा पूज्या नाधिका शस्यते ततः ॥१७॥

[ देवगृहोचितप्रतिमापरिमाणम् ]

तदूर्द्ध्वान्नवहस्तान्ता पूजनीया सुरालये ।

[ बहिरर्चनीयप्रतिमापरिमाणम् ]

दशहस्तादितो याऽर्चा प्रासादेन विनाऽर्चयेत् ॥१८॥

---

१७। इदानीं कुत्र कीदृशी प्रतिमा पूजनीयेति वक्तुं प्रथमं गृहोचितायाः प्रतिमायाः परिमाणमाह—आरभ्येति। एकाङ्गुलादारभ्य उच्छ्रायेण द्वादशाङ्गुलपर्यन्ता प्रतिमा गृहेषु पूज्या। स्पष्टमुक्तं मत्स्यपुराणे—

अङ्गुष्ठपर्वादारभ्य वितस्तिर्यावदेव तु ।
गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधैः ॥ ( अ० २५८, २२ श्लो० )

इति। वितस्तिर्द्वादशाङ्गुलम्।

१८। देवालयपूज्यामाह तदूर्द्ध्वादिति। द्वादशाङ्गुलतोऽष्टहस्तपरिमाणं यावत् प्रतिमा सुरालये पूजनीया। तथा च मात्स्ये—

'आषोडशा तु प्रासादे कर्तव्या नाधिका ततः' इति। ( अ० २५८ २३ )

'आषोडशा' षोडश वितस्तिपर्यन्ता अष्टहस्तपर्यन्तेति यावत्, प्रासाद इति देवालय इत्यर्थः। एतदेकवाक्यताविधित्सयैव 'नवहस्तान्ता' इत्यस्य नव हस्ताः परिमाणं यस्याः सा नवहस्ता, सा अन्ते यस्याः त्रयोदशाङ्गुलाद्यष्टहस्तान्तायाः प्रतिमायाः सा तथेत्यतद्गुणसंविज्ञानव्यधिकरणबहुव्रीहिणा तादृशोऽर्थः कष्टकल्पोऽपि युक्त इत्युत्पश्यामः।

दशहस्तादित इति। दशहस्तायाः प्रतिमाया आदिरादिभूता प्रतिमा ताम् आरभ्य नवहस्तप्रतिमामारभ्येत्यर्थः, न तु दशहस्तप्रतिमामारभ्येति यथाश्रुतार्थः करणीयः, पूर्वोक्तमत्स्यपुराणवचनेन नवहस्तायाः प्रतिमाया अपि प्रासादे पूजननिषेधात्, सम्भवति च तद्वचनेन सहैकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात्। इत्थञ्च—'दशादिकरवृद्ध्या च' (१९) इति वक्ष्यमाणवाक्येन दशहस्तप्रतिमामारभ्य पञ्चचत्वारिंशद्धस्तां यावच्चतुष्क्यां पूजनविधानादियमेकैव नवहस्ता प्रतिमा वर्त्तते, यस्याः पूजास्थानं किमपि नोपदिष्टं ग्रन्थकृता।

इदमत्र मनस्यापतति,—प्रासादेन विनाऽर्चयेदित्यनेन सामान्यत आसां दशहस्तादिप्रतिमानां प्रासादे पूजां निषिध्य क्व तर्हीमाः पूजनीया इत्यपेक्षायां दशादिकरवृद्ध्येति विशेषोऽभिहितो ग्रन्थकृतेति। अत्र च पक्षे 'नवहस्तान्ता' इत्यस्य 'दशहस्तादित' इत्यस्य च यथाश्रुत एवार्थः करणीयः

[ तत्र विशेषः ]

दशादिकरवृद्ध्या च षट्त्रिंशत्प्रतिमाः पृथक् ।
वाणवेदकरान् यावच्चतुःषष्ट्यां(च्चतुष्क्यां?) पूजयेत् सुधीः ॥१९॥

[ देवगृहभित्त्यादिनिर्णयः ]

चतुरस्त्रीकृते क्षेत्रे दशधा प्रविभाजिते ।
चतुर्भागे भवेद् भित्तिः शेषं गर्भगृहं स्मृतम् ॥२०॥

---

स्यादन्यथा नवहस्तप्रतिमाविषये किमपि विधानं न स्यात्तेन च ग्रन्थकृतो न्यूनता प्रसज्येत । यथा-श्रुतार्थपरिग्रहपक्षे तु पूर्वोक्तमत्स्यपुराणवचनव्याकोपो मतान्तरवादेन प्रतिसमाधेय इति दिक् ।

१९ । दशहस्तादिप्रतिमानां पूजास्थानमाह—दशादीति । दशहस्तत आरभ्य वाणवेदकरान् पञ्चचत्वारिंशतं हस्तान् यावत् एकैककरवर्धनाजाताः पृथक् षट्त्रिंशतं प्रतिमाः चतुष्क्यां बहिश्चतुरस्रदेशे पुष्करिण्याकारनिर्जलचतुरस्रखाते वा पूजयेदित्यर्थः । तथा च दशहस्तैकादशहस्त-द्वादशहस्तादिक्रमेण पञ्चचत्वारिंशद्धस्तां यावद् गृहाद् बहिश्चतुरस्रप्रदेशे पूजयेत् । भवति च दशहस्तां प्रतिमां मेरुत्वेन कल्पयतः पञ्चचत्वारिंशद्धस्ता प्रतिमा षट्त्रिंशी ।

एताश्च पञ्चचत्वारिंशद्धस्तान्ताः प्रतिमाः पूर्ववज्ज्यैष्ठ्यादिकं भजन्ते । तथा हि—निरुक्त-प्रमाणाः प्रतिमाः ज्येष्ठाः, स्वमानस्य तृतीयभागोना मध्यमा अर्द्धोनाश्च कनिष्ठा इति । तदेतत् सविशेषमाह समराङ्गणसूत्रधारे—

आकाशे (?) प्रतिमा ( येष्टा ? ज्येष्ठा ) चत्वारिंशच्च पञ्च च ।
हस्तान् कार्या त्रिभागोना मध्या हीना तदर्द्धतः ॥ (अ० ७० १४५—१४६ श्लो०)

इति । इत ऊर्द्ध्वं प्रतिमाया विधानं नास्तीति इयमेव बृहत्तरा प्रतिमा ।

बृहत्संहितायां चतुर्हस्तावधिकप्रतिमाया एव शुभदायकत्वमुक्तम्—

सौम्या तु हस्तमात्रा वसुदा हस्तद्वयोच्छ्रिता प्रतिमा ।
क्षेमसुभिक्षाय भवेत्त्रिचतुर्हस्तप्रमाणा या ॥ इति । ( अ० ५७, ४९ श्लो० )

अत्रादर्शे चतुःषष्ट्यामिति प्रामादिकः पाठः, छन्दोभङ्गदोषादर्थासङ्गतेश्च । अस्ति च समानतन्त्रे ग्रन्थकृतः कृतौ रूपमण्डने प्रायेणैतत्समानानुपूर्वीकः श्लोकः, तत्र च 'चतुष्काम्' इति पाठ उपलभ्यते । छन्दःशुद्धोऽप्ययं पाठोऽपपाठ एव मन्यतेऽर्थदारिद्र्यात्, तस्मात् पूर्वदर्शितसमराङ्गण-सूत्रधारवचनैकार्थ्यात् रूपमण्डनीयचतुष्कशब्देन साम्यबाहुल्याच्च प्राङ्गणादिसमानार्थकं 'चतुष्क्याम्' इति पदं शुद्धपाठत्वेन कल्पितमस्माभिरिति ज्ञेयम् ।

२० । इदानीं गर्भगृहप्रमाणेन प्रतिमापरिमाणं वक्तुमादौ गर्भगृहप्रमाणमाह—चतुरस्त्रीकृत इति । अन्यथैव भित्त्यादिविधानमाह बृहत्संहितायाम्, तच्च पूर्वं प्रदर्शितम् ।

[ गर्भगेहप्रमाणेन ज्येष्ठादिप्रतिमाकथनम् ]

**गर्भगेहत्रिभागेण ज्येष्ठाऽर्चा कथिता बुधैः ।**
**मध्यमा च दशांशेन(शोना) पञ्चांशेना(शोना) कनीयसी ॥२१॥**
**सप्तांशे गर्भगेहे तु द्वौ भागौ परिवर्जयेत् ।**
**पञ्चभागो भवेद्देवः शयनस्थः सुखावहः ॥२२॥**
**अष्टलोहमयी मूर्त्तिः शैलरत्नमयी तथा ।**
**श्रेष्ठवृक्षमयी वाऽपि प्रवालादिमयी शुभा ॥२३॥**

---

२१। गर्भेत्यादि। त्रिभागीकृतस्य गर्भगेहस्य भागेनैकेन कृता अर्चा ज्येष्ठा, षोडशधा विभक्तस्य गर्भगृहस्य दशांशोना अर्थात् सार्द्धपादप्रमाणा प्रतिमा मध्यमा ; तथा पञ्चांशोना प्रतिमा कनीयसी कनिष्ठा इत्यर्थः।

अत्र यद्यपि 'त्रिभागेण' इति शुद्धपाठसमीपचर्यया 'दशांशेन' इत्यत्राप्यसन्दिग्धत्वेन प्रतीयमानः पाठः परिवृत्तिबुद्धिं विलुम्पति, तथापि 'पञ्चांशेना' इति विकृतपाठदर्शनात्तस्य च प्रकृत्यनुसन्धितृतया 'पञ्चांशोना' इति पाठः प्रथमतः शुद्धत्वेन बुद्धिमारोहति, ततश्च मध्यमत्वादिक्रमान्यथानुपपत्त्या सर्वत्रैव 'ऊना' इति पाठः सम्यक्तया प्रतिभातीति स एवास्माभिरनुसृतः। क्रमानुपपत्तिस्तु—

अङ्गुष्ठपर्वादारभ्य वितस्तिर्यावदेव तु ।
गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधैः ॥

इत्यादिवचनादूनप्रमाणाया एव प्रतिमाया ज्यैष्ठं प्रतीयते, प्रमाणाधिकायास्तु कानिष्ठ्यम्। इत्थञ्च गर्भगृहदशांशेन निर्मिता प्रतिमा प्रमाणाधिकेति तस्याः कानिष्ठ्ये प्राप्ते, पञ्चांशेन निर्मिता तूनप्रमाणेति तस्या अपि मध्यमत्वे प्राप्ते तदुभयविपरीतं प्रमाणाधिकायाः प्रतिमाया माध्यमिकत्वमूनप्रमाणायाश्च कानिष्ठ्यम् उपदिशन् यथाश्रुतः पाठः क्रमदुःस्थ इति हेयपक्ष एव निक्षेप्तव्यः।

तदेतत् सर्वं विस्पष्टमुक्तं स्वयं ग्रन्थकारेण तदीयरूपमण्डने—

तृतीयांशेन गर्भस्य प्रासादे प्रतिमोत्तमा ।
मध्यमा स्वदशांशोना पञ्चांशोना कनीयसी ॥ इति

२३। अष्टलोहबिम्बानि, यथा—

सौवर्णं राजतं ताम्रं पैत्तलं कांस्यमायसम् ।
सैसकं त्र्यापुषञ्चेति लौहं बिम्बं तथाऽष्टधा ॥

बिम्बरत्नानि, यथा—

स्फटिकं पद्मरागञ्च वज्रं नीलं हिरण्मयम् ।
वैदूर्यं विद्रुमं पुष्पं रत्नबिम्बं तथाऽष्टधा ॥

**अतीताब्दशता या स्यान्मूर्त्तिः स्थाप्या महत्तमैः ।**
**खण्डिता स्फुटिताप्यर्च्या अन्यथा दुःखदायिका ॥२४॥**

---

स्फटिकं सूर्यकान्तञ्च चन्द्रकान्तमिति त्रिधा ।
स्फटिकस्यैव भेदाः स्युः काममोक्षार्थदाः क्रमात् ॥
श्रियं कामं तथाऽऽरोग्यमृद्धिं पुत्रं जयं सुखम् ।
लभते पद्मरागादिबिम्बानां क्रमशोऽर्चनात् ॥

बिम्बवृक्षा, यथा—

चन्दनं देवदारुश्च शमीपिप्पलशिंशपाः ।
खदिरासनमालूरमधूका वकुलस्तथा ॥
पद्मकं कर्णिकारञ्च विप्रादीनां त्रयं त्रयम् ।
क्रमाद्दारवबिम्बानां विज्ञेयास्तरवः शुभाः ॥

२४। इदानीं जीर्णोद्धारविधिं संक्षेपेण कथयिष्यन् आदौ जीर्णत्वेऽप्यपरित्याज्यां प्रतिमामाह—अतीताब्दशतेत्यादि। महत्तमैर्महापुरुषैः स्थाप्या स्थापनयोग्या या मूर्त्तिः देवताबिम्बम् अतीताब्दशता विगतशतवर्षा सती खण्डिता भग्ना, स्फुटिता विदीर्णापि सा अर्च्या पूजनीया, अन्यथा नोचेत् पूजिता स्यात् दुःखदायिका अशुभप्रदा भवेदिति शेषः। शतस्य वर्षाणामपगमे यदि प्रतिमा भग्ना स्फुटिता वा स्यात्, तथापि तां पूजयेदित्युक्तमनेन।

व्यक्तिविशेषप्रतिष्ठितानां मूर्त्तीनामत्याज्यतामाह शिवलिङ्गमधिकृत्याग्निपुराणम्—

असुरैर्मुनिभिर्गोत्रैस्तन्त्रविद्भिः प्रतिष्ठितम् ।
जीर्णं वाऽप्यथवा भग्नं विधिनापि न चालयेत् ॥ (अ० १०३, १९ श्लो०)

भङ्गविशेषे ग्राह्याग्राह्यत्वमुक्तं ग्रन्थकारेण तस्यैव रूपमण्डने—

अङ्गप्रत्यङ्गभग्नां तु मूर्त्तिं धीमान् विसर्जयेत् ।
नखाभरणमालास्त्रभग्नां तां न विसर्जयेत् ॥ इति ।

शुक्रनीतिसारे च

देवालये मानहीनां मूर्त्तिं भग्नां न धारयेत् ।

अग्निपुराणेऽपि सप्तषष्टितमाध्याये—

जीर्णोद्धारविधिं वक्ष्ये भूपितां स्नपयेद् गुरुः ।
अचलां विन्यसेद् गेहे अतिजीर्णां परित्यजेत् ॥ १ ॥
व्यङ्गां भग्नाञ्च शैलाढ्यां न्यसेदन्याञ्च पूर्ववत् ।
संहारविधिना तत्र तत्त्वान् संहृत्य देशिकः ॥ २ ॥
सहस्रं नारसिंहेन हुत्वा तामुद्धरेद् गुरुः ।
दारवीं दारयेद् वह्नौ शैलजां प्रक्षिपेज्जले ॥ ३ ॥

धातुरत्नविलेपोत्था व्यङ्गाः संस्कारयोग्यकाः ।
काष्ठपाषाणजा भग्नाः संस्काराहा न देवताः ॥२५॥

[ बहिरायतनस्थाप्या देवताः ]

भैरवः शस्यते लोके प्रत्यायतनसंस्थितः ।
न मूलायतने कार्यो भैरवस्तु भयङ्करः ।
नारसिंहो वराहो वा तथान्येऽपि भयङ्कराः ॥२६॥

[ अशुभप्रतिमालक्षणम् ]

नाधिकाङ्गा न हीनाङ्गाः कर्तव्या देवताः क्वचित् ।

---

धातुजां रत्नजां वापि अगाधे वा जलेऽम्बुधौ ।
यानमारोप्य जीर्णाङ्गां छाद्य वस्त्रादिना नयेत् ॥ ४ ॥
वादित्रैः प्रक्षिपेत्तोये गुरवे दक्षिणां ददेत् ।
यत्प्रमाणा च यद्द्रव्या तन्मानां स्थापयेद्दिने ।
कूपवापीतडागादेर्जीर्णोद्धारे महाफलम् ॥ ५ ॥

शिल्परत्ने च— दोषे लघुतरे बिम्बं नैव त्याज्यं कदाचन ।
बाहुच्छेदे करच्छेदे पादच्छेदे तथैव च ॥
तथैव स्फुटिते भिन्ने यस्मिन्नवयवे गते ।
वैरूप्यं जायते यस्य तत्त्याज्यं प्रायशो भवेत् ॥
अङ्गुल्यादिपरिच्छेदे बन्धनं शस्यते बुधैः ।
महादोषसमायुक्ते सान्निध्यं लक्ष्यते यदि ।
तथैव बद्ध्वा संशोध्य प्रायश्चित्तं समाचरेत् ॥

२६ । भैरव इत्यादि । भैरवो कालभैरवो वटुकभैरवस्त्रिपुरभैरवश्च महादेवस्य मूर्त्तिविशेषः, प्रत्यायतनसंस्थितः वास्तुबहिर्वाटीस्थः शस्यते प्रशस्तो भवति, बहिरावास एव स्थापनीय इत्यर्थः । मूलायतने न कार्यो न स्थापनीयः । नारसिंहो वराहो वा तथा अन्येऽपि भयङ्करा देवता मूलायतने न कार्याः । तदुक्तं मत्स्यपुराणे समानानुपूर्व्या—

भैरवः शस्यते लोके प्रत्यायतनसंस्थितः ।
न मूलायतने कार्यो भैरवस्तु भयङ्करः ॥
नारसिंहो वराहो वा तथान्येऽपि भयङ्कराः ॥ इति । (२५९अ० १४-१५ श्लो०)

स्वामिनं घातयेन्न्यूचना करालवदना तथा ।
अधिका शिल्पिनं हन्ति कृशा चैवार्थनाशिनी ॥२७॥
वक्रनासातिदुःखाय संक्षिप्ताङ्गा भयङ्करी ।
चिपिटा दुःखशोकाय आधिपत्यविनाशिनी ॥२८॥
दुःखदा हीनवक्त्रा तु पाणिपादकृशा तथा ।
हीनाङ्गा हीनजङ्घा च भ्रमोन्मादकरी नृणाम् ॥२९॥
शुष्कवक्त्रा तु राजानं कटिहीना च या भवेत् ।
पाणिपादविहीनायां जायते नरको महान् ॥३०॥
जङ्घाहीना तु या त्वर्चा शत्रु-कल्याणकारिणी ।
पुत्रमित्रविनाशाय हीना वक्षःस्थलेन या ॥३१॥

---

२७-३१ । एते पञ्च श्लोकाः सर्वात्मना मत्स्यपुराणीय (अ० २५९, १६-२० श्लो०)-श्लोक-पञ्चकमनुकुर्वते । यच्च क्वचित् कश्चिद् वर्णभेदोऽस्ति तन्मात्रं प्रदर्श्यते—'आधिपत्यविनाशिनी' (२८ श्लो०) इत्यत्र मात्स्ये 'अनेत्रा नेत्रनाशिनी' (१८ श्लो०) इति पाठः, एवं 'पाणिपादविहीनायां' ( ३० श्लो ) इत्यत्र 'पाणिपादविहीनो यो' ( १९ श्लो० ) इति पाठः । 'जङ्घाहीनदेवतार्चा' ( ३१ श्लो० ) इत्यत्र 'जङ्घाजानुविहीना च' ( २० श्लो० ) इति पाठः । समराङ्गणसूत्रधारे—

निहन्ति कारकं रौद्रा दीनरूपा च शिल्पिनम् ।
कृशा व्या ( धि ? धिं ) विनाशञ्च कुर्यात् कारयितुः सदा ॥
कृशोदरी तु दुर्भिक्षं विरूपा चानपत्यताम् ॥ ( अ० ७७, ७-८ श्लो० )

इत्यन्यदेव फलं तत्तदङ्गविकृतायाः प्रतिमायाः प्राह । तथा बृहत्संहितायाम्—

नृपभयमत्यङ्गतायां हीनाङ्गायामकल्यता कर्त्तुः ।
शातोदर्यां क्षुद्भयमर्थविनाशः कृशाङ्गायाम् ।
मरणन्तु सक्षतायां शस्त्रनिपातेन निर्दिशेत् कर्त्तुः ॥ ( अ, ५७, ५-५१ )

इति । परमत्र दृष्टयवस्थानादिभेदेनाप्यशुभप्रतिमालक्षणमुक्तम् । यथा—

वामावनता पत्नीं दक्षिणविनता हिनस्त्यायुः ।
अन्धत्वमूर्द्ध्वदृष्ट्या करोति चिन्तामधोमुखी दृष्टिः ॥
( अ० ५७, ५१-५२ श्लो० ) इति ।

पीठयान-परीवारध्वंसे सति यथाक्रमम् ।
स्थानवाहनभृत्यानां नाशो भवति निश्चितम् ॥३२॥
प्रतिमा काष्ठलेपाश्मदण्डचित्रादिसंग्रहे ।
मानाधिक-परीवाररहिता नैव पूज्यते ॥३३॥
अनेत्री नेत्रनाशाय स्वल्पा स्याद् भोगवर्जिता ।
अर्थहृत् प्रतिमोत्ताना चिन्ताहेतुरधोमुखी ॥३४॥

[ शुभप्रतिमालक्षणम् ]

सम्पूर्णावयवा या स्यादायुर्लक्ष्मीप्रदा सदा ।
एवं लक्षणमासाद्य कर्तव्या देवता बुधैः ॥३५॥

[ अथाद्भुतम् ]

यानत्रेरुत्पातान् गर्गः प्रोवाच तानहं वक्ष्ये ।
तेषां सङ्क्षेपोऽयं प्रकृतेरन्यत्वमुत्पातः ॥ ३६ ॥

---

३२ । पीठयानेत्यादि । प्रतिमायाः पीठस्य यानस्य परीवारस्य च ध्वंसे नाशे सति कर्तुरपि यथाक्रमं स्थानवाहनभृत्यानां निश्चितं नाशो भवति । तथा च पीठध्वंसे स्थाननाशः, यानध्वंसे वाहननाशः, परीवारध्वंसे च भृत्यनाशो भवतीत्यर्थः ।

३३ । प्रतिमेति । काष्ठादिनिर्मितप्रतिमानां संग्रहे इत्यर्थः । मानाधिकेति । पूर्वं प्रतिमाया यन्मानमुक्तं ततोऽधिकपरिमाणा, परीवाररहिता यस्याः प्रतिमाया यावन्तः परीवाराः शास्त्रदृष्टास्ततोऽल्पपरीवारविशिष्टा, ततश्चानयोः कर्मधारयः । अथवा मध्यमणिन्यायेन परीवार-पदस्योभयत्रान्वयः, तथा च मानाधिकपरीवारा परीवाररहिता चेत्यायातम् ; एवञ्च—यस्याः प्रतिमायाः परीवाराः संख्यातो दैर्घ्यादितश्च यथानिर्दिष्टपरिमाणाधिकपरिमाणवन्तः, यस्याश्चै-कान्ततः परीवारा एव न सन्ति, ते उभे अपि नैव पूजयेदित्यर्थः ।

३५ । सम्पूर्णावयवेति । तथा च मात्स्ये—

सम्पूर्णावयवा या तु आयुर्लक्ष्मीप्रदा सदा ।
एवं लक्षणमासाद्य कर्तव्यः परमेश्वरः॥ ( अ० २५९, २१-२२ श्लो० )

इति किञ्चिद्भिन्नानुपूर्व्याऽयं श्लोकः । परमेश्वरो देवप्रतिमा ।

३६ । यानत्रेरिति । यानुत्पातान् गर्गो वृद्धगर्गः अत्रेः समीपे प्रोवाचेत्यन्वयः । तथा च मत्स्यपुराणे मनोरद्भुतशान्त्यादिपृच्छायां मत्स्यवचनम्—

अपचारेण नराणामुपसर्गः पापसञ्चयाद् भवति ।
संसूचयन्त्यतिदिशान्तरिक्षभौमां तथोत्पातः ॥३७॥
मनुजानामपचारादपरक्ता देवताः सृजन्त्येतान् ।
तत्प्रतिघाताय नृपः शान्तिं राष्ट्रे प्रयुञ्जीत ॥ ३८ ॥

[ दिव्याद्भुतम् ]

दिव्यं ग्रहर्क्षवैकृतम्··· ··· ···

[ आन्तरिक्षाद्भुतम् ]

··· ··· ···उल्कानिर्घातपवनपरिवेशाः ।
गन्धर्वपुर(पुरपुर?)न्दरचापांसि(पादि?) यदान्तरिक्षं तत् ॥३९॥

---

अत्र ते वर्णयिष्यामि यदुवाच महातपाः ।
अत्रये वृद्धगर्गस्तु सर्वधर्मभृतां वरः ॥ (अ० २२९, २श्लो० )

इति । तेषाम् अद्भुतानां सङ्क्षेपः समासेन संग्रहस्तु प्रकृतेरन्यत्वं स्वभावस्यान्यथाभावः वैपरीत्यमिति यावत् ।

तथा च बृहत्संहिताविवृतौ उत्पलभट्टधृतसमाससंहितायाम्—

यः प्रकृतिविपर्यासः सर्वः संक्षेपतः स उत्पातः ।
क्षितिगगनदिव्यजातो यथोत्तरं गुरुतरो भवति ॥ इति ।

३७। संसूचयन्तीति । सर्वाङ्गक्षतमिदं श्लोकार्द्धं कथं प्रतिक्रियेतेति पर्याकुलैरस्माभिर्मूले संशोधनप्रयासः परित्यक्तः । परमर्थग्रहार्थं संवादिप्रमाणमुद्ध्रियते । तथा च बृहत्संहितायां यथोक्तपूर्वार्द्धात् परम्—

'संसूचयन्ति दिव्यान्तरिक्षभौमास्त उत्पाताः' ( अ० ४९, २ श्लो० )।

इति प्रकृतार्द्धसमार्थकः पाठः । 'नराणाम् अपचारेण पापसञ्चयो भवति पापसञ्चयादुपसर्गा उपद्रवाः । तथा च गर्गः—

अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्मतः ।
नरापचारान्नियतमुपसर्गः प्रवर्त्तते ॥ इति ।

ततो दिव्यान्तरिक्षभौमा उत्पाताः तान् उपसर्गान् संसूचयन्ति ।' इति तद्विवृतौ उत्पलभट्टाः ।

३९। इदानीमुत्पातान् विभजन् दिव्यस्वरूपमाह—दिव्यमिति । ग्रहाणाम् आदित्या-

[ भौमाद्भुतम् ]

**भौमं चरस्थिरभवं… … …**

[ एषां शान्तिनिवर्त्तनीयत्वानिवर्त्तनीयत्वविकल्पः ]

**तच्छान्तिभिराहतं शममुपैति ।**

**नाभसमुपैति मृदुतां शमीत न दिव्यं वदन्त्येके ॥४०॥**

---

दीनाम् ऋक्षाणाम् अश्विन्यादिनक्षत्राणां यद् वैकृतम् अन्यथाभावस्तद् दिव्यम् अद्भुतमिति शेषः । अत्र प्रकृतोऽप्युत्पातो लिङ्गभेदाद् 'दिव्येन' न सम्बध्यते एवमुत्तरत्रापि । यद्वा वैकृतमेवात्र विशेष्यम् , ग्रहर्क्षकृतं यद् वैकृतं तद् दिव्यमित्यर्थः ।

आन्तरिक्षमाह—उल्केत्यादि । उल्कास्वरूपमाह बृहत्संहितायाम्—

'दिवि भुक्तशुभफलानां पततां रूपाणि यानि तान्युल्काः' ( अ० ३३, १ श्लो० ) इति । केचित् पुनर्लोकानां शुभाशुभसूचनाय लोकपालास्तान्यस्त्राण्येवोल्का इत्याहुः । तथा चोत्पल-भट्टधृतगर्गः—

स्वास्त्राणि संसृजन्त्येते शुभाशुभनिवेदिनः ।
लोकपाला महात्मानो लोकानां ज्वलितानि तु ॥ इति ।

निर्घात इति । निर्घातमाह बृहत्संहिताविवृतौ उत्पलभट्टधृतगर्गः—

यदाऽन्तरिक्षे बलवान् मारुतो मरुताहतः ।
पतत्यधः स निर्घातो भवेदनिलसम्भवः ॥ इति ।

पवनो विकृतो वायुः । परिवेश इति । तत्स्वरूपमाह बृहत्संहितायाम्—

सम्मूर्च्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः ।
नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेशाः ॥ इति ।

गन्धर्वपुरम् आकाशे दृश्यमानं पुराकृति प्रसिद्धम् । इन्द्रचापम् आकाशे दृश्यमानं धनुराकृति चिह्नम् । तथा च बृहत्संहितायाम्—

सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे ।
वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः ॥ इति ।

प्रकारान्तरमाह उत्पलभट्टधृतकाश्यपः—

अनन्तकुलजाता ये पन्नगाः कामरूपिणः ।
तेषां निश्वाससम्भूतमिन्द्रचापं प्रचक्षते ॥ इति ।

एते यत् तदान्तरिक्षम् अद्भुतमिति । गन्धर्वपुरन्दरेत्यत्र एकं 'पुर'पदं लेखकप्रमादात् पतितमिति प्रतिभाति । 'चापांसी'त्यप्यपपाठः ।

४० । भौममुत्पातमाह—भौममिति । चरस्थिरभवमिति चरेभ्यः स्थिरेभ्यश्च वस्तुभ्यो

**दिव्यमपि शममुपैति प्रभूतकनकान्नगोमहीदानैः ।**
**रुद्रायतने भूमेर्गोर्दानात् कोटिहोमाच्च ॥ ४१ ॥**

---

भवतीति तादृशं यत् तद् भौमम् । उत्पलभट्टस्तु बृहत्संहितायाम्—'चराणां वस्तूनां स्थैर्यं स्थिराणां चरत्वं तदुद्भवम्' इत्याह ।

भौमनाभसयोः शान्तिकर्मनिवर्त्यत्वमाह—तदिति । तद् भौमम् अद्भुतं शान्तिभिः शान्तिकर्मभिराहतं निवारितं सत् शमं शान्तिमुपैति । नाभसम् आन्तरिक्षम् अद्भुतं शान्तिभिराहतमित्येव, मृदुतां मन्दीभावम् उपैति । अत्र मृदुतामुपैतीत्यनेन भौमं यथा शाम्येन्न तथा नाभसमित्यायाति ।

दिव्योत्पातस्य शान्तिनिवर्त्यत्वे विकल्पमाह—नेति । दिव्यं न शान्तिमुपैति न वा मृदुतां यातीत्येके महर्षयो वदन्ति ।

तथा चोत्पलभट्टधृतकाश्यपः—

भौमं शान्तिहतं नाशमुपगच्छति मार्दवम् ।
नाभसं न शमं याति दिव्यमुत्पातदर्शनम् ॥ इति ।

अत्र 'शमीते'त्यपपाठः आदादिकस्य शमधातोरभावात् । शाम्यतीति पाठो बृहत्संहितायाम् ।

प्रसङ्गादत्र दिव्याद्यद्भुतमधिकृत्य मत्स्यपुराणे यदुक्तं तदुद्ध्रियते—

ग्रहर्क्षवैकृतं दिव्यमान्तरिक्षं निबोध मे ।
उल्कापातो दिशां दाहः परिवेशस्तथैव च ॥
गन्धर्वनगरञ्चैव वृष्टिश्च विकृता तु या ।
एवमादीनि लोकेऽस्मिन्नान्तरिक्षं विनिर्दिशेत् ॥
चरस्थिरभवो भौमो भूकम्पश्चापि भूमिजः ।
जलाशयानां वैकृत्यं भौमं तदपि कीर्त्तितम् ॥ इति ।
(अ० २२९, ६-९ श्लो०)

४१ । एवं दिव्यस्य शाम्यत्वाशाम्यत्वे विकल्प्य सम्प्रति स्वमतमाह—दिव्यमपीति । अत्रापिः सम्भावनायाम् इत्यहं सम्भावयामीत्यर्थः । यद्वापिः समुच्चये, प्रभूततत्तद्द्रव्यदानैर्न केवलं भौमं नाभसञ्च शान्तिमुपेतः परं दिव्यमपि शान्तिमुपैतीत्यर्थः ।

रुद्रायतन इति शिवालये । 'भूमेर्गोर्दानादि'त्यपपाठः पूर्वं गोमहीदानस्योक्तत्वात् । यद्वा पूर्वं स्थानानियमेन प्रभूतगवादिदानव्यवस्था कृता, परतश्च स्थानविशेषे अल्पाया अपि भूमेरेकस्या अपि गोर्दानमभिहितमिति पूर्वार्द्धे प्रभूतपदोपादानादपरार्द्धे भूमेरिति गोरिति चैकवचनोपादानादवगम्यते । 'रुद्रायतने भूमौ गोदोहादि'ति पाठो बृहत्संहितासम्मतः । 'भूमौ गोदोहश्च पात्रं विना भूमौ गोः स्तनं निष्पीड्य दुग्धोत्सर्गं' इति शब्दकल्पद्रुमः ।

[ दैवोत्पाते राज्ञो विशेषः ]

आत्मसुतकोशवाहनपुरदारपुरोहितेषु लोके च ।
पाकमुपयाति दैवं परिकल्पितमष्टधा नृपतेः ॥ ४२ ॥

[ लिङ्गादिवैकृतं तत्फलञ्च ]

अनिमित्तचलनभङ्ग-स्वेदाश्रुनिपातजल्पनाद्यानि ।
लिङ्गार्चायतनानां नाशाय नरेशदेशानाम् ॥ ४३ ॥

---

४२। अत्र दैवोत्पाते राज्ञः फलस्य व्यापकतामाह—आत्मेति। यद्वा येऽत्र प्रकरणे उक्तास्तेषां राजन्येव फलपाक इति स्थिते तत्सम्बन्धितया के के फलभागिनः स्युरित्यपेक्षायामाह—आत्मेति। कस्योत्पातस्य कुत कीदृशः फलपाके इत्युपरिष्टाद् वक्ष्यते। नृपतेरिति सर्वत्र सम्बध्यते। तथा च नृपतेरात्मनि शरीरे सुते पुत्रे कोषे धनागारे वाहनेषु हस्त्यश्वादिषु पुरे नगरे दारेषु भार्यासु पुरोहिते आचार्ये लोके प्रजासु चेत्यष्टधा अष्टप्रकारेण परिकल्पितं दैवमद्भुतं पाकं याति फलं ददाति। 'लोके जनपदे' इत्युत्पलभट्टः (अ० ४५, ७ श्लो०)। व्यक्तमाह मत्स्यपुराणे—

राज्ञः शरीरे लोके च पुरदारे पुरोहिते ।
पाकमायाति पुत्रेषु तथा वै कोषवाहने ॥ (अ० २२९, १३ श्लो०)

अत्र दैवोत्पात एवायं राज्ञः फलविशेष उक्तः, पूर्वोक्तमत्स्यपुराणवचने तु एवंविधफलस्यौत्पातसाधारण्यमिति विशेषः। एतेन प्राकृतजनविषय उत्पातः प्रातिस्विकफल इत्यवधेयम्।

४३। चरस्थिरभवमिति यत् स्थिरस्य चरधर्माक्रान्तिलक्षणं भौममद्भुतम् उत्पलभट्टव्याख्यास्वरसात् पूर्वमुक्तं तदेव विव्रियते—अनिमित्तेत्यादिना। अथवान्यदेवेदं पूर्वोक्तेभ्य उत्पातेभ्यो लिङ्गादि वैकृतं नामेति तदाह—अनिमित्तेत्यादिना लिङ्गं शैवम्, अर्चा देवप्रतिमा आयतनं सिद्धं देवस्थानम् एषाम् अनिमित्तं चलनादिप्रयोजकवाय्वभिघातादिकारणं विनेत्यर्थः। चलनं कम्पः, निपातः पतनम्, जल्पनम् असम्बद्धोक्तिः। आद्यग्रहणाद् वमनं प्रसर्पणञ्चेत्युत्पलभट्टः। एतानि नरेशस्य राज्ञः देशस्य जनपदस्य च नाशाय भवन्ति।

यद्यपि 'द्वन्द्वात् पूर्वं परं वा यच्छ्रूयते तल्लभते प्रत्येकमभिसम्बन्धमि'ति न्यायाद् द्वन्द्वस्थचलनादिसर्वपदार्थैः सहैवानिमित्तमित्यस्यान्वयो न्याय्यस्तथापि सामर्थ्याच्चलनभङ्गनिपातैरेवान्वयो न त्वितरैरपि, तेषां तदन्वयेऽसामर्थ्यात्, न ह्यस्ति कारणं लिङ्गादीनां स्वेदाश्रुजल्पनेषु किमपि, येन तद्व्यावृत्तये अनिमित्ततया तानि विशेष्येरन्नित्यवधेयम्।

[ तत्र विशेषः ]

स्वदेशध्वंसस्फोटे भवेत्तथा··· ··· ··· ।
स्थानाच्चलने भङ्गं देशस्य विनिर्द्दिशेत् प्राज्ञः ॥ ४४ ॥

[ अर्चावैकृतं तत्फलञ्च ]

नर्त्तनं जल्पनं हास्यमुन्मीलननिमीलने ।
देवा यत्र प्रकुर्वन्ति तत्र विद्यान्महद् भयम् ॥ ४५ ॥
रोदने नर्त्तने हास्ये देवतानां प्रसर्पणे ।
महद् भयं विजानीयात् षण्मासत्रि(सात्त्रि?)गुणं परम् ॥४६॥
धूमज्वालां रजो भस्म यदा मुञ्चन्ति देवताः ।
राजा तदा च म्रियते प्रसूते च धनक्षयम् ॥४७॥

---

४४। 'नाशाय नरेशदेशानामि'त्युक्तम्, इदानीं केन कस्य नाश इति विषयविभागमाह—स्वदेशेत्यादि। स्फोटे भङ्गे स्वदेशध्वंसो भवेत्। अत्र लेखकप्रमादाद् ग्रन्थस्य कियांश्चन भागः पतितः।

४५। नर्त्तनमिति। उन्मीलनं नेत्रप्रसारणम्, निमीलनं नेत्रसङ्कोचः, यद्वा अङ्गानाम् आकुञ्चनप्रसारणे।

४६। रोदन इति। षण्मासत्रिगुणमिति। शान्तौ अकृतायां षण्मासात् परं भयं त्रिगुणं भवेदित्यर्थः, तथा च 'षण्मासात् त्रिगुण'मिति शुद्धः पाठः।

एतच्चिन्त्यम्,—एतेषामुत्पातानाम् अष्टसु मासेष्वतीतेषु फलपाकश्रवणात् कथं षट्सु मासेष्वतीतेष्वेव भयानां त्रैगुण्यं सम्भवदुक्तिकं स्यात्। तथा च बृहत्संहितायाम्—

"मासैश्चाप्यष्टाभिः सर्वेषामेव फलपाकः"। इति। (अ० ४९, १४ श्लो०)

एवञ्च इदमत्र कथञ्चित् समाधानम्—अत्र सङ्कोचवृत्त्या सर्वशब्दस्य देवतार्चाकृतोत्पातेतरपरत्वाभ्युपगमात् तथाविधोत्पातस्य सद्यःफलदत्वेन 'षण्मासात् त्रिगुणं परमि'ति सङ्गच्छते।

अत्रेदं श्लोकद्वयं प्रायेण समानार्थकमिति स्थूणानिखननन्यायेन वा, पूर्वत्र भयस्य देशविषयकत्वाङ्गीकारादुत्तरत्र च राजविषयकत्वाङ्गीकाराद्वा कथञ्चित् पौनरुक्त्यनिरासः कर्त्तव्यः।

४७। धूमज्वालामिति। धूमं ज्वालाञ्चेत्यर्थः। ज्वाला चाग्निशिखा। तदेतत् सर्वं सविशेषमाह मत्स्यपुराणे—

[ अन्यानि वैकृतानि ]

भूमिर्यदा नभो याति विशेद् वसुन्धरां नभः ।
दृश्यन्ते चान्तरा देवास्तथा राजबधो भवेत् ॥४८॥
देवतायात्राशकटाक्षचक्रयुगकेतुभङ्गपतनानि ।
सम्पर्यासनसादनसङ्गाश्च न देशनृपशुभदाः ॥४९॥

---

देवतार्चाः प्रनृत्यन्ति वेपन्ते प्रज्वलन्ति च ।
वमन्त्यग्निं तथा धूमं स्नेहं रक्तं तथा वसाम् ॥
आरटन्ति रुदन्त्येताः प्रस्विद्यन्ति हसन्ति च ।
उत्तिष्ठन्ति निषीदन्ति प्रधावन्ति धमन्ति च ॥
भुञ्जते विक्षिपन्ते वा कोशप्रहरणध्वजान् ।
अवाङ्मुखा वै भवन्ति स्थानात् स्थानं भ्रमन्ति च ॥
एवमाद्या हि दृश्यन्ते विकाराः सहसोत्थिताः ।
लिङ्गायतनविप्रेषु तत्र वासं न रोचयेत् ॥
राज्ञो वा व्यसनं तत्र स च देशो विनश्यति । (अ० २३०, १–५ श्लो०)

इति । सहसेति अनिमित्तमित्यर्थः । विशेषस्तु—प्रकृते लिङ्गार्चायतनानामित्युक्तम् अत्र लिङ्गार्चायतनविप्राणामिति ।

अत्रेदमवधेयम्—यद्ययं स्थिरस्य चरधर्माक्रान्तिलक्षणो भौम उत्पातः, यदि वा विशिष्ट एव कश्चिदुत्पातः स्यादुभयथापि विप्रेष्विति न सङ्गच्छते । न हि विप्रः स्थिरो येन तस्य चरधर्मं नर्त्तनादिकमौत्पातिकं भवेत् । विशिष्टोऽपि न सम्भवेत् तादृशोत्पातस्य क्वाप्यश्रवणात् । तस्मादत्र वृक्षेष्विति पाठो युज्यते न वेति सुधीभिश्चिन्तनीयम् । अस्ति हि स्थिराणां वृक्षाणां चरधर्मस्य नर्त्तनादेः प्राप्तिरूप उत्पातो बृहत्संहितादौ निरूपितः । तथा च बृहत्संहितायां वृक्षवैकृतं प्रकृत्य—

'हसने देशध्वंसं रुदिते च व्याधिबाहुल्यम्'
'धूमस्तस्मिन् ज्वालाथवा भवेन्नृपबधायैव'
सर्पत्सु तरुषु जल्पत्सु वापि जनसंक्षयो विनिर्दिष्टः'

( अ० ४५, २५, २९, ३० श्लो० )

इति तत्र तत्र अर्चादिवदेव वृक्षाणामपि तत्तद्वैकृते दोष उक्तः ।

४९ । देवतायात्रेत्यादि । देवतायात्रायां देवतोत्सवे शकटस्य प्रकृतोत्सवनिर्वाहार्थं समाहृतस्येत्यर्थः । अक्षस्य चक्रमध्यवर्त्तिदण्डस्य च, शकटाक्षस्येत्येकं पदं वा, चक्रस्य, युगस्य वाहन-

( उत्पातविशेषस्य प्राणिविशेषे फलदायकत्वम् )

ऋषिधर्मपितृब्रह्मप्रोद्भूतवैकृतं द्विजातीनाम् ।
यद्रुद्रलोकपालोद्भवं पशूनामनिष्टं तत् ॥ ५० ॥
गुरुसितशनैश्चरोत्थं पुरोधसां विष्णुजञ्च लोकानाम् ।
स्कन्दविशाखसमुत्थं माङ्गलिकानां (कं न?) नरेन्द्राणाम् ॥५१॥
वेदव्यासे मन्त्रिणि विनायके वैकृतं चमूनाथे ।
धातरि सविश्वकर्मणि लोकाभावाय निर्दिष्टम् ॥५२॥
देवकुमारकुमारीवनिताप्रख्येषु (प्रैष्येषु?) वैकृतं यत् स्यात् ।
तत्रश्यतेः (तन्नरपतेः?) कुमारकुमारिकास्त्री-
परिजनाभा(ना?)म् ॥५३॥
रक्षःपिशाचगुह्यकनागानामेव (मेवमेव?) निर्दिष्टम् ।

---

द्वयोजककाष्ठस्य , केतोश्च भङ्गः स्फोटनानि पतनानि वा । तथा सम्पर्यासनम् एतेषामेव विपर्यासः अक्षस्थाने युगस्य युगस्थाने चक्रस्येत्यादिरूपं विपरिवर्तनमित्यर्थः, सादनं विशरणं सहसैव जर्जरीभावः, सङ्ग आसञ्जनं गमनप्रतिबन्धकीभूतः परस्परसंश्लेषः ; एते न देशस्य नृपस्य च शुभदाः । दैवतयात्रेति पाठो बृहत्संहितायाम् ( अ० ४९, ९ श्लो० ) ।

५०। पूर्वं लिङ्गार्चायतनानामित्युक्तम्, 'नर्तनं जल्पनं हास्यम्' इत्यादिना च देववैकृते सामान्यतो 'भयं भवेद्' इति चोक्तम् । सम्प्रति कस्यार्चाया वैकृते कस्यानिष्टमिति विशिष्य वक्तुमाह—ऋषिधर्मेत्यादि । धर्मो देवविशेषः, पितरः प्रसिद्धा भूतजनाः कुत्रचित् लेपमयाः क्रियन्ते ; एतेषामर्चासु यत् प्रोद्भूतं वैकृतं तद् द्विजातीनामनिष्टम् अशुभप्रदम् ।

यच्च रुद्रस्य लोकपालानामिन्द्रादीनां च वैकृतं तत् पशूनां राज्ञो वाहनीभूतानामनिष्टमित्यर्थः ।

५१। द्विजातीनामित्युक्तम्, तत्रापि पुरोधसां विशेषमाह—गुर्विति । सितः शुक्रः । एतेषु यद् वैकृतं तत् पुरोधसामित्यर्थः । स्कन्दः कार्त्तिकेयः, विशाखो देवविशेषः ; एतयोरुद्भूतं वैकृतं नरेन्द्राणां न माङ्गलिकम् ।

५२। वेदव्यासे वैकृतं मन्त्रिणि, विनायके वैकृतं चमूनाथे राज्ञः सेनापतौ अनिष्टजनकम् ।

५३। देवकुमारेत्यादि । देवकुमारे यद् वैकृतं तन्नृपकुमारे, एवं कुमारीवनिताप्रैष्येष्वपि बोध्यम् ।

[ उत्पातानां फलकालः ]

मासैश्चाप्यष्टाभिः सर्वेषामेव फलपाकः ॥५४॥

[ एतेषां शान्तिः ]

बुद्ध्वा देवविकारं शुचिः पुरोधास्त्र्यहोषितः स्नातः ।
स्नानकुस्तु(सु?)मानुलेपनवस्त्रैरभ्यर्च्चयेत् प्रतिमाम् ॥ ५५ ॥
मधुपर्केण पुरोधा भक्ष्यैर्बलिभिश्च विधिवदुपतिष्ठेत् ।
स्थालीपाकं जुहुयाद् विधिवन्मन्त्रैश्च तल्लिङ्गैः ॥ ५६ ॥

[ शान्तिफलम् ]

इति विबुधविचा(का?)रे शान्तयः सप्तरात्रं
द्विजविबुधगणार्चा गीतनृत्योत्सवाश्च ।
विधिवदवनिपालैर्ये ( र्यैः ? ) प्रयुक्ता न तेषां
भवति दुरितपाको दक्षिणाभिश्च रुद्धः ॥५७॥

---

५४ । रक्षःपिशाचेत्यादि । एवमेवेति । एतदुक्तं भवति—यथा देवकुमारादौ प्रोद्भूतं वैकृतं नृपस्य कुमारादौ अनिष्टजनकम् एवं रक्षःपिशाचगुह्यकनागानां पुत्रादावपि प्रोद्भूतं वैकृतं नृपस्य पुत्रादावनिष्टसाधनमित्यर्थः ।

मासैश्चाप्यष्टाभिरिति । सर्वेषामेव वैकृतानाम् अष्टाभिर्मासैः फलपाको भवतीत्यर्थः । अष्टाभिर्मासैरित्यपवर्गे तृतीया, तथा चाष्टमासाभ्यन्तर एवाद्भुतानि फलमुपदर्शयन्तीत्यर्थः । एवञ्च पूर्वं 'षण्मासात्त्रिगुणं परम्' ( ४७ ) इति यदुक्तं तदपि साधु सङ्गच्छते । मत्स्यपुराणे—

'त्रिभिर्वर्षैस्तथा ज्ञेयं सुमहद् भयकारकम्' ( अ० २२९, १२श्लो० )

इति वर्षत्रयाभ्यन्तरे फलपाककाल उक्तः । अत एवोत्पलभट्टोऽपि 'अष्टाभिर्मासैरि'त्यस्य अष्टाभिर्मासैरतीतैरित्यर्थमाह ( बृहत्संहिता, अ० ४५, १४ श्लो० ) ।

५५ । इदानीम् उत्पातानां शान्तिमाह—बुद्ध्वेति । स्नानं स्नानीयं जलम् । त्र्यहोषित- स्त्र्यहोपोषितः दिनत्रयं कृतोपवास इत्यर्थः । प्रतिमाम् उत्पन्नविकाराम् ।

५६ । मधुपर्केणेति । स्थालीपाकं चरुं तल्लिङ्गैस्तत्तद्देवतानुमापकैर्मन्त्रैस्तत्तद्देवताया हवनमन्त्रैर्जुहुयात् ।

५७ । शान्तिफलं शान्त्यवधिञ्चाह—इतीति । विबुधविकारे देवकृतोत्पाते जाते

वत्सेनात्रिमुखे कुर्याद् यात्राद्वारे च वास्तुनः ।
प्रवेशे प्रतिमादीनां गुर्विणीनां विशेषतः ॥५८॥

---

सतीत्यर्थः, इति पूर्वोक्तप्रकारेण सप्तरात्रं सप्ताहं शान्तयः, तथा द्विजविबुधगणार्चा द्विजदेवगणपूजा गीतनृत्योत्सवाश्च यैरवनिपालैः विधिवत् प्रयुक्तास्तेषां दुरितपाक उत्पातजनितानिष्टफलं न भवति, दक्षिणाभिः एतत्कार्याङ्गभूतदक्षिणाप्रदानादिभिश्च रुद्धो निवारितो भवतीत्यर्थः ।

एतदन्त उत्पाताध्यायः सर्वथा बृहत्संहितीयोत्पाताध्यायानुरूपः ( बृहत्संहिता अ० ४५ ) । केवलं पञ्चचत्वारिंशश्लोकादूनपञ्चाशश्लोकान्तोऽंशस्तत्र न दृश्यते ।

५८ । वत्से इत्यादि । तथा विकृतपाठः श्लोकोऽयं यथास्य प्रकरणमपि न सुविज्ञानम् । एवमपि द्वारादिपददर्शनात् सन्निवेशविशेषाच्च द्वारसम्बन्ध्येवायं श्लोक इत्यस्माकं प्रतिभा । दृश्यते हि प्रधानद्वारस्य तैस्तैर्वेधे कर्त्तुरशुभादिवर्णनम् । तथा च बृहत्संहितायाम्—

मार्गतरुकोणकूपस्तम्भभ्रमविद्धमशुभदं द्वारम् ।
उच्छ्रायाद् द्विगुणमितां त्यक्त्वा भूमिं न दोषाय ॥ इति । (अ० ५२, ७४ श्लो०)

अस्यार्थः—मार्गः पन्थाः, तरुर्वृक्षः, कोणोऽस्त्रिः, कूपस्तम्भौ प्रसिद्धौ, भ्रमो जलनिर्गमनप्रदेशः । एतैः सम्मुखैर्द्वारं विद्धमशुभदम् । कियति दूरे स्थितो वेधने न दुष्टफलदो भवतीत्याह—उच्छ्रायादिति । यावान् द्वारस्य उच्छ्राय उच्चत्वं तद्द्विगुणप्रमाणां भूमिं त्यक्त्वा बहिः स्थिता दोषायैव एते दोषा न भवन्ति इत्युत्पलभट्टः । मयमते—

वृक्षकर्णावधःस्थूणकूपविद्धं तथैव च ॥
देवायतनविद्धञ्च विधिविद्धं तथैव च ।
वल्मीकभस्मविद्धञ्च शिरामर्मादिविद्धकम् ॥ इति । (अ० ३०, ३८-३९ श्लो०)

विधिविद्धमिति ब्रह्मणा विद्धमित्यर्थः, स च वास्तुमध्यस्थो वा प्रतिमात्मा वा । शिल्परत्ने च—

मार्गकूपतरुस्तम्भकोणपीडमशोभनम् ।
मुख्यद्वारस्य देवानां नराणाञ्च विशेषतः ॥ इति । (पूर्व० अ० २२, २१-२२ श्लो०)

एवञ्च—

वृक्षे नाभिमुखे कुर्याद् यात्राद्वारञ्च वास्तुनः ।

इति पूर्वार्द्धे कृतशुद्धिः पाठः । उत्तरार्द्धं समानम् । तथा चायमर्थः—वृक्षे अभिमुखे सम्मुखवर्त्तिनि सति, प्रतिमादीनां विशेषतो गुर्विणीनां प्रवेशे गृहे च अभिमुखे सति वास्तुनो यात्राद्वारं प्रधानं द्वारं न कुर्यात् । प्रविशन्त्यस्मिन्निति प्रवेशो गृहम् । प्रतिमादीनामित्यादिपदादनुक्तानां

नक्षत्रयोनिश्च षडष्टकश्च वर्गाष्टकं नाडिगतश्च ऋक्षम् ।
देवादिऋक्षाणि विशोपकाश्च(?) एते विलोक्याः प्रतिमाविधाने ॥५६॥

इति श्रीक्षेत्रात्मजसूत्रभृन्मण्डनविरचिते वास्तुशास्त्रे देवतामूर्त्तिप्रकरणे
शिलापरीक्षाप्रतिमाप्रमाणगुण-दोषाद्भुताधिकारो नाम
प्रथमोऽध्यायः ।

---

स्तम्भादितत्तद्वस्तूनां ग्रहणम् । एतच्चातिसाहसेन यथाज्ञानमभ्युह्य समुपस्थापितमस्माभि-र्व्याख्यानम्, निर्णये तु पाठकाः प्रमाणम् । रूपमण्डने तु—

वत्सेनाभिमुखे कुर्याद् यात्रां द्वारञ्च वास्तुनः ।
प्रवेशप्रतिमादीनां गुर्विणीनां विशेषतः ॥ (अ० १, १७ श्लो० )

इति विशेषः ।

५९ । नक्षत्रयोनिश्चेत्यादि । नक्षत्रयोनिः योनिवैरम्, देवादिऋक्षाणि देवनरराक्षसगणनक्षत्राणि विशोपकाश्च प्रतिमाविधाने देवतामूर्त्तिगठनकाल इत्यर्थः, एते नक्षत्रयोन्यादयः, विलोक्या विचार्या इत्यर्थः । अत्र विशोपकाश्चेति किं शुद्धः पाठः किं वापपाठस्तदपि निर्णेतुमसमर्थैरस्माभिस्तूष्णी-मास्यते ।

नक्षत्रयोनिविचारः—कर्मकर्त्तुः कर्मदिनस्य च नक्षत्रयोः परस्परं योनिगतशत्रुतां नक्षत्रयोनि-वैरमुच्यते । प्रतिमागठनस्य शुभदिनकरणे नक्षत्रयोनिवैरं दोषावहम् । अत्र कर्मदिननक्षत्रं प्रतिमाया जन्मनक्षत्रं ज्ञेयम् । एवमन्यत्रापि ।

| | | | |
|---|---|---|---|
| अश्विन्याः— | अश्वयोनिः | ज्येष्ठायाः— | हरिणयोनिः |
| शतभिषायाः— | ,, | अनुराधायाः— | ,, |
| स्वात्याः— | महिषयोनिः | आर्द्रायाः— | श्वयोनिः |
| हस्तायाः— | ,, | मूलायाः— | ,, |
| पूर्वभाद्रपदस्य— | सिंहयोनिः | उत्तरफल्गुन्याः— | गोयोनिः |
| धनिष्ठायाः— | ,, | उत्तरभाद्रपदस्य— | ,, |
| भरण्याः— | हस्तियोनिः | चित्रायाः— | व्याघ्रयोनिः |
| रेवत्याः— | ,, | विशाखायाः— | ,, |
| कृत्तिकायाः— | मेषयोनिः | अश्लेषायाः— | विडालयोनिः |
| पुष्यायाः— | ,, | पुनर्वसोः— | ,, |
| पूर्वाषाढायाः— | वानरयोनिः | मघायाः— | मूषिकयोनिः |
| श्रवणायाः— | ,, | पूर्वफल्गुन्याः— | ,, |
| रोहिण्याः— | सर्पयोनिः | अभिजितः— | नकुलयोनिः |
| मृगशिरसः— | ,, | उत्तराषाढायाः— | ,, |

गोव्याघ्रयोः हस्तिसिंहयोः अश्वमहिषयोः श्वहरिणयोः नकुलसर्पयोः वानरमेषयोः विडालमूषिकयोः परस्परं वैरम् अन्यदपि लोकाचारतो वैरम् अवगच्छेत्। एकयोनिश्चेच्छुभम्, भिन्नयोनिश्चेत् मध्यमम्, उक्तरूपगणनया वैरयोनिश्चेदशुभं फलं भवेत्। इति।

षडष्टकविचारः—

कर्मकर्त्तुर्जन्मराशिमपेक्ष्य कर्मदिनराशिश्चेत् षष्ठो वाऽष्टमः स्यात् तदा षडष्टकदोषो भवेत्, अत इमौ राशी त्याज्यौ।

| मेषः | वृषः | मिथुनः | कर्कटः | सिंहः | कन्या | तुला | वृश्चिकः | धनुः | मकरः | कुम्भः | मीनः |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |

कर्त्तुर्मेषराशिः कर्मयोग्यो राशिः कन्या तुला वा; अत्र कर्त्तुर्जन्मराशेर्मेषात् कर्मदिनस्य कन्याराशिः षष्ठस्तुलाराशिरष्टमः, अतः षडष्टकदोषाद्द्वावपि त्याज्यौ इत्यादि।

वर्गाष्टकगणनानियमः—

रविश्चन्द्रो मङ्गलो बुधः बृहस्पतिः शुक्रः शनिर्लग्नश्चेति वर्गाष्टकम्। वर्गाष्टकगणनाकाले राशिचक्राष्टकं पृथग् विलिख्य तेषां मध्ये यथाक्रमं रव्यादि लग्नान्तं वर्गाष्टकं लिखेत्। जन्मकाले राशिचक्रे कथिता ग्रहा लग्नश्च यत्र यत्र राशौ वर्त्तमानास्तेषाम् एकैकस्यावस्थितिस्थानाद् पृथङ्निर्दिष्टे राशिचक्राष्टके अधोलिखितप्रकारेण रेखा बिन्दूंश्च पातयेत्।

प्रथमतो रवेर्वर्गाष्टकगणनाभिलाषश्चेद् रविर्यस्मिन् राशौ वर्त्तमानस्तत्र, तस्माद्द्वितीय-चतुर्थ-सप्तमाष्टमनवमदशमैकादशराशिषु एकैकां रेखां पातयेत्। तथा चन्द्रमङ्गलादीनां यत्र यत्र रेखाः पातयितव्या उपरिष्टान्निरूपितैरङ्कैस्तत् सुधीभिरवगन्तव्यम्।

## ग्रहाणां वर्गाष्टकरेखाचक्राणि

| सूर्याष्टवर्ग रेखाः ४८ | चन्द्राष्टवर्ग रेखाः ४९ |
|---|---|
| रविः १।२।४।७।८।९।१०।११ | रविः ३।६।७।८।१०।११ |
| चन्द्रः ३।६।१०।११ | चन्द्रः १।३।६।७।१०।११ |
| मङ्गलः १।२।४।७।८।९।१०।११ | मङ्गलः २।३।५।६।९।१०।११ |
| बुधः ३।५।६।९।१०।११।१२ | बुधः १।३।४।५।७।८।१०।११ |
| गुरुः ५।६।९।११ | गुरुः १।४।७।८।१०।११।१२ |
| शुक्रः ६।७।१२ | शुक्रः ३।४।५।७।९।१०।११ |
| शनिः १।२।४।७।८।९।१०।११ | शनिः ३।५।६।११ |
| लग्नः ३।४।६।१०।११।१२ | लग्नः ३।६।१०।११ |

**कुजाष्टवर्ग रेखाः ३९**

रविः ३।५।६।१०।११

चन्द्रः ३।६।११

मङ्गलः १।२।४।७।८।१०।११

बुधः ३।५।६।११

गुरुः ६।१०।११।१२

शुक्रः ६।८।११।१२

शनिः १।४।७।८।९।१०।११

लग्नः १।३।६।१०।११

**बुधाष्टवर्ग रेखाः ३९**

रविः ५।६।९।११।१२

चन्द्रः २।४।६।८।१०।११

मङ्गलः १।२।४।७।८।९।१०।११

बुधः १।३।५।६।९।१०।११।१२

गुरुः ६।८।११।१२

शुक्रः १।२।३।४।५।८।९।११

शनिः

लग्नः

**गुर्वष्टवर्ग रेखाः ५६**

रविः १।२।३।४।७।९।१०।११

चन्द्रः २।५।७।९।११

मङ्गलः १।२।४।७।८।१०।११

बुधः १।२।४।५।६।९।१०।११

गुरुः १।२।३।४।७।८।१०।११

शुक्रः २।५।६।९।१०।११

शनिः ३।५।६।११

लग्नः १।२।४।५।६।७।९।१०।११

**शुक्राष्टवर्ग रेखाः ५२**

रविः ८।११।१२

चन्द्रः १।२।३।४।५।८।९।११।१२

मङ्गलः ३।५।६।९।११।१२

बुधः ३।५।६।९।११

गुरुः ५।८।९।१०।११

शुक्रः १।२।३।४।५।८।९।१०।११

शनिः ३।४।५।८।९।१०।११

लग्नः १।२।३।४।५।८।९।११

**शन्यष्टवर्ग रेखाः ३९**

रविः १।२।४।७।८।१०।११

चन्द्रः ३।६।११

मङ्गलः ३।५।६।१०।११।१२

बुधः ६।८।९।१०।११।१२

गुरुः ५।६।११।१२

शुक्रः ६।११।१२

शनिः ३।५।६।११

लग्नः १।३।४।६।१०।११

**लग्नाष्टवर्ग रेखाः ४९**

रविः ३।४।६।१०।११।१२

चन्द्रः ३।६।१०।११।१२

मङ्गलः १।३।६।१०।११

बुधः १।२।४।६।८।१०।११

गुरुः १।२।४।५।६।७।९।१०।११

शुक्रः १।२।३।४।५।८।९

शनिः १।३।४।६।१०।११

लग्नः ३।६।१०।११

पराशरीयहोरायां लग्नरेखाः ४९

ग्रन्थान्तरे ३७

उपर्युक्तनियमेन रेखापाताद् ग्रहाणां शुद्धिमशुद्धिञ्च निर्णयेत्। वर्गाष्टके केनोपायेन ग्रहाणां शुद्ध्यशुद्धिविचारं फलनिर्णयञ्च कुर्यात् तदिदानीमुच्यते। दशाफलं सुविचारसाध्यम्, महाष्टवर्गाष्टवर्गफलन्तु न तथाविधम्, एतद् गणितागतमित्यव्यर्थम्; गणना चेदभ्रान्ता स्यात् तदष्टवर्गनिरूपितफलमवश्यमेव घटेत।

अष्टवर्गे ग्रहाणां शुद्ध्यशुद्धिविचारः फलनिर्णयश्च।

यस्य ग्रहस्याष्टवर्गे येषु येषु राशिषु पञ्चभ्यः अष्टौ यावत् फलरेखास्तिष्ठन्ति, स ग्रहस्तेषु तेषु राशिषु क्रमशः शुभफलवर्द्धको भवति। चतस्रो रेखा यदि तिष्ठन्ति, तदा समफलप्रदः; तिस्रो द्वौ एका वा रेखा तिष्ठति चेत् क्रमेणाशुभफलस्य वर्द्धको भवति। रेखाभावे अर्थादष्टशून्यत्वे, तद्राशौ तु सातिशयमशुभं ददाति। अतो यस्य ग्रहस्याष्टवर्गं गणयेत् स ग्रहो यस्मिन् गृहे स्थास्यति तद्गृहे यदि चतस्रस्तदधिका वा रेखास्तिष्ठन्ति तदाऽसौ ग्रहः शुद्धः शुभफलप्रदश्चेति जानीयात्। किञ्च—गृहे यस्मिन् रेखाचतुष्टयस्य न्यूनता भवेत् तद्राशिगतश्चेदशुद्धस्तथाऽशुभफलप्रदश्च। ग्रहगणो वर्गाष्टके विशुद्धः सन् यद्युपचयगतो भवेत्; अर्थाज्जन्मराशेर्वा जन्मलग्नाद्वा तृतीय-षष्ठदशमैकादशस्थानगतः स्यात्, अथवा मित्रगृहगतः किंवा उच्चस्थानगतो भवेत्, तदासौ ग्रहश्चातीव शुभदायको भवेत्। किञ्च ग्रहगणोऽशुद्धो भवन् यद्यपचयस्थानगतो भवेत् अर्थात् तृतीयषष्ठदशमैकादशान् विना अन्यराशिगतः स्यात्, शत्रुराशौ नीचराशौ वाऽवतिष्ठते तदातिशयमशुभप्रदो भवेत्। यत्र यत्र राशौ ग्रहा वर्गाष्टके शुभदा गोचरे तत्तद्राशिषु आगच्छन्तस्तात्कालिकशुभदा भवन्ति। तत् स्थानं चेज्जन्मराशितस्तस्य ग्रहस्य गोचरनिर्दिष्टशुभस्थानं भवेत् तदा शुभफलवर्द्धकः स्यात्, तस्य राशेर्जन्मलग्नात् प्रभृति यो भावस्तेन तद्भावोत्थफलं तद्भावनिर्दिष्टञ्च भ्रातृपित्रादीनां तात्कालिकशुभसौख्यं कल्पनीयम्। दृष्टान्तो यथा—

रवेरष्टवर्गे मिथुनराशौ फलरेखाः षड् भवन्ति; तदवस्थायां रविश्चेन्मिथुनराशिस्थः अर्थादाषाढमासे विशेषशुभसूचको भवेत्। यत् कर्मणि रविशुद्धेरावश्यकम् आषाढमासे तत् कर्मारम्भेण शुभफलं सुनिश्चितम्।

यावती यावती रेखा ग्रहाणामष्टवर्गके।
तावतीं द्विगुणीकृत्य चाष्टाभिः परिशोधयेत्॥ १॥
अष्टोपरि भवेद्रेखा अष्टाभ्यन्तरबिन्दवः।
अष्टाभिश्च समो यत्र समस्तत्र निगद्यते॥ २॥

पूर्वोक्तनियमानुसारेण प्रत्येकराशौ यावद्रेखापातो भवेत् ता रेखा द्विगुणीकृत्य ततोऽष्टौ वियोजयेत्, ततो यावदवशिष्टं भवेत्, तावदङ्कं तत्तद्राशिषु रक्षेत्। यद्यद्राशिषु द्विगुणितरेखासमष्टिरष्टाभ्यो न्यूना भवेयुः तत्तद्राशिषु अष्टसंख्यातो यावती न्यूना भवेत् तावतो बिन्दून् स्थापयेत् यद्यद्राशिषु द्विगुणितरेखासमष्टिरष्टौ भवेयुस्तस्मिन् राशौ समं लिखेत्।

### बिन्दुपातस्य रेखापातस्य च नियमः

शून्ये तु बिन्दवश्चाष्टौ रेखैके रसबिन्दवः ।
चत्वारो बिन्दवो युग्मे द्विबिन्दू रामरेखके ॥ ३ ॥
समो रेखाचतुर्थे तु पञ्चके नेत्ररेखके ।
षड्रेखासु चतू रेखाः सप्तमे रसरेखिकाः ॥ ४ ॥

पूर्वोक्तप्रकारेण द्विगुणितरेखासमष्टिकादष्टौ वियोजयेत् । तेन शून्येऽवशिष्टे बिन्द्वष्टकं रक्षेत् । एकरेखायामवशिष्टायां बिन्दुषट्कम्, रेखाद्वये बिन्दुचतुष्टयम्, रेखात्रये बिन्दुद्वयं रक्षेत् ; रेखाचतुष्टये स्थिते समो भवेत् ; रेखापञ्चके रेखाद्वयम्, रेखाषट्के रेखाचतुष्टयम्, रेखासप्तके रेखाषट्कं भवेत् ।

इत्थं रेखाबिन्दुपातेन फलं विचार्यम् ।

रेखाभिस्तु शुभं ज्ञेयं बिन्दुभिरशुभं फलम् ।
यत्र रेखा न बिन्दुश्च तत् समं परिकीर्त्तितम् ॥ ५ ॥

### रेखायोगेण बिन्दुयोगेन वा ग्रहाणां फलम्

स्वोच्चमित्रादिवर्गस्थाः केन्द्रादिबलसंयुताः ।
अनिष्टफलदाः सर्वे स्वल्पबिन्दुयुता यदि ॥ ६ ॥
दुष्टस्थानस्थिता ये च ये च नीचारिभांशगाः ।
ते सर्वे शुभदा नित्यमधिबिन्दुयुता यदि ॥ ७ ॥
दिनेशमुख्यग्रहवर्गकेषु यदा शनिः शून्यगृहं प्रयातः ।
करोति पित्रादिकभावजानामतीव रोगारिभयाकुलानि ॥ ८ ॥

एतेषामर्थः—उच्चस्थो मित्रादिवर्गगतः केन्द्रादिस्थो वा बलवान् ग्रहो वर्गाष्टकचक्रे एकादिस्वल्पबिन्दुयुक्तराशिस्थ एकादिस्वल्परेखायुक्तराशिस्थो वा चेदनिष्टफलप्रदः ।

षडादिदुःस्थानस्थो नीचराशिनवांशस्थः शत्रुक्षेत्रनवांशस्थो वा नितरां दुर्बलोऽपि ग्रहः बिन्दुयुक्तराशिस्थो रेखायुक्तराशिस्थो वाचेत् शुभफलप्रदः ।

रव्यादिग्रहाणामष्टवर्गे रेखाहीनेऽष्टशून्ययुक्ते वा राशौ शनिर्गोचरवृत्त्या गतश्चेत् तद्राशिनिर्दिष्टभावफलस्यानिष्टम्, रोगम्, शत्रुवृद्धिम्, तथा भयाकुलत्वादिकम्, तद्भावनिर्दिष्टञ्च पितृभ्रात्रादीनामपि तद्रूपमशुभं परिकल्पयेत् । अष्टवर्गे रव्यादिग्रहाणां विशेषफलं ग्रन्थबाहुल्यभयादिह परित्यक्तं ज्योतिषग्रन्थे तदनुसन्धेयम् ।

## नाडीगतऋक्ष—( नाडीवेध- ) विचारः—

नाड्यस्तिस्रः ; प्राङ्नाडी, मध्यनाडी, पृष्ठनाडी च ।

प्राङ्नाडीस्थनक्षत्राणि—

१ ६ ७ १२ १३ १८ १९ २४ २५
अश्विनी, आर्द्रा, पुनर्वसुः, उत्तरफल्गुनी, हस्ता, ज्येष्ठा, मूला, शतभिषा, पूर्वभाद्रपदश्च ।

मध्यनाडीस्थनक्षत्राणि—

२ ५ ८ ११ १४ १७ २० २३
भरणी, मृगशिराः, पुष्या, पूर्वफल्गुनी, चित्रा, अनुराधा, पूर्वाषाढा, धनिष्ठा,
२६
उत्तरभाद्रपदश्च ।

पृष्ठनाडीस्थनक्षत्राणि—

३ ४ ९ १० १५ १६ २१ २२ २७
कृत्तिका, रोहिणी, अश्लेषा, मघा, स्वाती, विशाखा, उत्तराषाढा, श्रवणा, रेवती च

एकं त्रिनाडीचक्रं विलिख्य तत्र नाडीवेधविचारं कुर्यात् । यदि कर्त्तुः कर्मदिनस्य च नक्षत्रमेकनाडीस्थं भवेत्तदा नाडीवेधदोषो भवति । नाडीवेधदोषगते नक्षत्रे प्रतिमाघटनं निषिद्धम् ।

प्रतिप्रसवः—

एकराश्यादियोगे तु नाडीदोषो न विद्यते ।

कर्त्तुः कर्मदिनस्य च सत्येकराशौ दोषोऽसौ न स्यात् । इत्यादि ।

त्रिनाडीचक्रम् ।

| आद्यनाडी | मध्यनाडी | पृष्ठनाडी |
|---|---|---|
| १ | २ | ३ |
| ६ | ५ | ४ |
| ७ | ८ | ९ |
| १२ | ११ | १० |
| १३ | १४ | १५ |
| १८ | १७ | १६ |
| १९ | २० | २१ |
| २४ | २३ | २२ |
| २५ | २६ | २७ |

## देवादित्रय( गण- )विचार :—

गणस्त्रिविधः, देवगणः, नरगणः, राक्षसगणश्च। जन्मनक्षत्रेण जातकस्य गणो निरूप्यते। तद् यथा—

हस्ता, स्वाती, मृगशिराः, अश्विनी, श्रवणा, पुष्या, रेवती, अनुराधा, पुनर्वसुः।

एषु जातो देवगणः।

आर्द्रा, रोहिणी, उत्तरफल्गुनी, उत्तराषाढा, उत्तरभाद्रपदम्, भरणी, पूर्वफल्गुनी, पूर्वाषाढा पूर्वभाद्रपदम्।

एषु जातो नरगणः।

ज्येष्ठा, अश्लेषा, विशाखा, मूला, शतभिषा, धनिष्ठा, कृत्तिका, चित्रा, मघा।

एषु जातो राक्षसगणः।

यस्मिन् नक्षत्रे प्रतिमा निर्मीयते तत् प्रतिमाया जन्मनक्षत्रम्। तेन च नक्षत्रेण प्रतिमाया गणनिरूपणं स्यात्। कर्मकर्त्तुर्गणेन सह प्रतिमागणमिलनदिवसे प्रतिमाघटनं कुर्यात्। मिलनञ्च वक्ष्यमाणरीत्या ज्ञेयम्।

गणशुभाशुभकथनम्

स्वजातौ परमा प्रीतिर्मध्यमा देवमानुषे।  
देवाछरे विरोधश्च मृत्युर्मानुषराक्षसे॥ इति

---

# द्वितीयोऽध्यायः

[ माननिर्णयः ]

छाया रेणु(श्च?) बालाग्र-लिक्ष-यूका यवोऽङ्गुलः ।
क्रमाद्दशगुणं मानं ज(जि?)नसंख्यैः करा(रोऽ?)ङ्गुलैः ॥१॥

१। छायेति। एतेषां छायाद्यङ्गुलान्तानां सप्तानां पदार्थानां यथोत्तरं दशगुणं मानमित्यर्थः। तथा च—छायाया दशगुणं रेणोर्मानम्, रेणोर्दशगुणं बालाग्रस्य केशकोटेर्मानम्, ततो दशगुणं लिक्षस्य, ततो दशगुणं यूकस्य, ततो दशगुणं यवस्य, ततो दशगुणञ्चाङ्गुलस्य मानमिति स्पष्टार्थः।

अत्र छायापदार्थनिर्णयो दुष्करः, क्वापि तादृशार्थकपाठानुपलब्धेः। बृहत्संहितायाम्—

परमाणुरजोबालाग्रलिक्षयूकं यवोऽङ्गुलं चेति।
अष्टगुणानि यथोत्तरमङ्गुलमेकं भवति संख्या॥ (अ० ५७, २ श्लो०)

इति छायास्थाने परमाणुपदमाह। अन्यत्र परमाणुस्वरूपमुक्तम्—

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः।
प्रथमं तत् प्रमाणानां परमाणुं प्रचक्षते॥ इति।

तस्मादत्र छायापदं परमाणुसमानार्थकमिति प्रतीमः। रेणुश्चान्यत्र रजःपदेन व्यपदिष्टस्त्रसरेणुरूपः। तथा च शिल्परत्नपूर्वभागे मानमधिकृत्य—

परमाणुरिति प्रोक्तो योगिनां दृष्टिगोचरः।
त्रसरेणुरष्टभिः स्यात्तैरेव परमाणुभिः॥
तदष्टभिस्तु बालाग्रं लीक्षा बालाग्रकाष्टभिः। इति (अ० २, १-२ श्लो०)

एतदपि स्मृत्यन्तरविरुद्धम्, 'अणुर्द्वौ परमाणू स्यात् त्रसरेणुस्त्रयः स्मृतः' (स्क-३, अ० ११, श्लो० ५) इति भागवतीयात्।

यव इति यवोदरम्; तथा च शब्दकल्पद्रुमधृत-लीलावत्याम्—

'यवोदरैरङ्गुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः। इति।

शिल्परत्नपूर्वभागेऽपि 'यवोदरैः षड्गुणैर्वा' इत्युक्तम्। शब्दकल्पद्रुमे तिथ्यादितत्त्वधृत-कालिकापुराणमपि—

यवानां तण्डुलैरेवमङ्गुलं चाष्टभिर्भवेत्।
अदीर्घयोजितैः ... ... ॥ इत्याह।

क्रमाद्दशगुणमिति । एतच्चिन्त्यम्, पूर्वोद्धृतबृहत्संहितादिवचनेष्वष्टभिः परमाणुभी रज इत्यादिक्रमेणाष्टगुणवृद्धेरेव श्रवणात् । शिल्परत्नपूर्वभागे—

यवोदरैः षड्गुणैर्वा सप्तभिर्वाऽधमादिकम् ।
क्रमादष्टगुणैर्वाऽथ मानाङ्गुलमिति स्मृतम् ॥ (अ० २, ३ श्लो०)

इति मानविकल्पमुपदर्शयताऽपि तद्ग्रन्थकृता दशगुणस्यानुल्लेखात् । एतेनैतन्मतसम्मतश्चतुर्विंशत्यङ्गुलकः करः क्रमादष्टगुणमानस्वीकर्त्तृमते षडङ्गुलेनाधिको भवतीति ज्ञेयम् । तथा च एकस्मिन्नङ्गुले यवद्वयवृद्ध्या चतुर्विंशत्यामङ्गुलेषु अष्टचत्वारिंशद्यववृद्धिर्नियता, ते चाष्टचत्वारिंशद् यवाः षडङ्गुलम् इति तेन सह मिलनात्त्रिंशदङ्गुलः करो भवति । सत्यपि प्रकारविरोधे नेदमपि करमानमप्रमाणम्, तथा च शिल्परत्नपूर्वभागे—

अङ्गुलत्रितया मुष्टिर्वितस्तिर्द्वादशाङ्गुलिः ।
तद्द्वयं हस्तमुद्दिष्टं तच्च किष्कुरिति स्मृतम् ।
एकैकाङ्गुलवृद्ध्याऽतो भवन्त्यष्टौ कराः स्फुटम् ॥
प्राजापत्यं धनुर्मुष्टिश्चापग्रहमतः परम् ।
प्राच्यां वैदेहकं नाम्ना वैपुल्यञ्च प्रकीर्त्तितम् ।
इत्थमेकोत्तरत्रिंशदङ्गुलान्ताः कराः स्मृताः ॥ (अ० २, ९-११ श्लो०)

इत्येकत्रिंशदङ्गुलान्तमपि करमाह । तस्मान्मतान्तरमिदम् इति ज्ञेयम् ।

जिनसंख्यैरिति । जिनाश्चतुर्विंशतिः, चतुर्विंशत्याऽङ्गुलैः करो हस्त इत्यर्थः । तथा च बृहत्संहितायाम् ( अ० ५७, २श्लो० ) उत्पलभट्टधृतवचनम्—

तस्माद् रजः कचाग्रञ्च लिक्षा यूका यवोऽङ्गुलम् ।
क्रमादष्टगुणं ज्ञेयं जिनसंख्याङ्गुलैः करः ॥ इति ।

तस्मादिति परमाणोः, तस्यैव तत्र प्रकृतत्वात् । अङ्गुलस्य च मानाङ्गुलं मात्राङ्गुलम् इति द्वौ भेदौ । अधस्ताद् यदुक्तं तन्मानाङ्गुलम् । मात्राङ्गुलमुक्तं शिल्परत्नपूर्वभागे—

तत्कर्त्तुर्दक्षिणकरमध्यमामध्यपर्वणः ।
दैर्घ्यं मात्राङ्गुलं श्रेष्ठं नीचं तद्व्याससम्मितम् ॥ इति ( अ० २, ८ श्लो० )

अस्यार्थः—कर्त्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलेर्मध्यपर्वणो यद् दैर्घ्यं तच्छ्रेष्ठं मात्राङ्गुलम्, तस्यैव मध्यपर्वणो विस्तारसम्मितञ्च कनिष्ठं मात्राङ्गुलम् इति । अनयोश्च कर्मभेदे विनियोगभेदमाह तत्रैव—

मानाङ्गुलैः केवलमेव कुर्याद् देवालयादीनि गृहाणि वा नृणाम् ।
कुण्डादिकानामथ मण्डलानां सर्वत्र मात्राङ्गुलमिष्यते बुधैः ॥ इति (अ० २,१७श्लो०)

अत्र 'देवालयादीनि' इत्यादिपदाद्देवप्रतिमानामपि ग्रहणम् । काश्यपशिल्पेऽपि—

'मानाङ्गुलन्तु वा प्रोक्तं पुरप्रासादमानकम्' ( अ० ५०, ३७ श्लो० )

इत्युक्तम् ।

तस्याङ्गुलप्रमाणेन द्व्यङ्गुलं गोलकं भवेत् ।
कला च तत्समा प्रोक्ता द्वाभ्यां तु भागमे(ए?)व च ॥ २ ॥

[ तालमानकथनम् ]

एभिरेव त्रिभिर्भागैस्तालमानं प्रकीर्तितम् ।
एकतालादि वक्ष्यामि यथा भवति नान्यथा ॥ ३ ॥

---

क्वचिच्च मानाङ्गुलं प्रतिमापरिमाणेनापि निर्णीयते । तथा च—

'स्वैरङ्गुलप्रमाणैर्द्वादश विस्तीर्णमायतञ्च मुखम्' ( अ० ५७, ४ श्लो० )

इत्यादिबृहत्संहितावचने 'स्वै'रित्यस्य विवरणप्रसङ्गेनोक्तमुत्पलभट्टैः—"यस्मात् काष्ठात् पाषाणादिकाद्वा प्रतिमा क्रियते तद्दैर्घ्यं पीठप्रमाणविवर्जितं द्वादशभागविभक्तं कृत्वा तत्रैको भागो नवधा कार्यः, सोऽङ्गुलसंज्ञा भवति । यस्मादष्टाधिकमङ्गुलशतं प्रतिमाप्रमाणं वक्ष्यति (अ० ५७, ३० श्लो० ) । प्रतिमायाः 'स्वैरात्मीयैरङ्गुलप्रमाणैः'" इत्यलं प्रसङ्गादागतस्य प्रपञ्चनेन ।

२ । तस्येति । असमर्थमपीदं पदमगतिकतया 'अङ्गुलप्रमाणेने'त्यस्यैकदेशेनाङ्गुलपदेन सामानाधिकरण्येनान्वीयते । तथा च तस्य प्रक्रान्तस्याङ्गुलस्य प्रमाणेनेत्यर्थः । तत्समेति गोलकसमा इति । द्व्यङ्गुलमानेत्यर्थः । द्वाभ्यामिति कलाभ्यां गोलकाभ्यां वा भागो भवति, अतस्तस्य चतुरङ्गुलं मानमित्यर्थः । तदुक्तं समराङ्गणसूत्रधारे—

द्व्यङ्गुलो गोलको ज्ञेयः कलां वा तां प्रचक्षते ।
द्वे कले गोलकौ ( वाहौ ? वा द्वौ ) भागो मानेन तेन तु ॥ ( अ० ७५, ३ श्लो० )

३ । एभिरिति । एतादृशैर्भागैस्तालमानम् एकतालस्य परिमाणं भवतीति शेषः । एवञ्च द्वादशभिरङ्गुलैरेकस्तालो भवतीत्यर्थः । तदुक्तं शुक्रनीतिसारे—

स्वस्वमुष्टेश्चतुर्थोऽंशो ह्यङ्गुलं परिकीर्त्तितम् ।
तदङ्गुलैर्द्वादशभिर्भवेत्तालस्य दीर्घता ॥ इति । ( अ० ४, प्र० ४, ८२ श्लो० )

इदमत्र विवेचनीयम्—द्वादशाङ्गुलं तालस्य परिमाणमिति स्थिते दशतालप्रतिमा विंशत्यधिकशताङ्गुलपरिमाणा भवति । दशतालप्रतिमा च—

दशतालः स्मृतो रामो बलिर्वैरोचनिस्तथा ।
वराहो नारसिंहश्च ... ... ॥ ( अ० २५९, १-२ श्लो० )

इत्येनेन मत्स्यपुराणे उक्ता, ग्रन्थकृता चोपरिष्टात्—

दशतालैर्भवेद्रामो बलिर्वैरोचन(नि ? )स्तथा ।
सिद्धाश्चैव जितेन्द्राश्च ऊर्ध्वास्ते च प्रकीर्त्तिताः ॥ ( अ० २, ९ श्लो० )

इत्यनेन वक्ष्यते । एषामङ्गुलीसंख्याऽप्युक्ता बृहत्संहितायाम्—

दशरथतनयो रामो बलिश्च वैरोचनिः शतं विंशम् ।
द्वादशहान्या शेषाः प्रवरसमन्यूनपरिमाणाः ॥ इति ( अ० ५७, ३० श्लो० )

एवञ्च रामादीनां प्रमाणं दश तालास्ते च विंशत्यधिकं शतमङ्गुलय इत्यायातम्। एतेन—

'उत्तमं दशतालं स्याच्चतुर्विंशच्छताङ्गुलम्'

( शि० उ० ४ अ० ३७ श्लो०, काश्यप० ५० अ० ७७ श्लो० )

इति यच्छिल्परत्न-काश्यपशिल्पयोरुक्तं तच्चिन्त्यम्। एतन्मते तालादीनामुत्तममध्यमाधमभेदेन त्रैविध्यमुक्तम्, तथा च काश्यपशिल्पे पूर्वोद्धृतादर्द्धात् परम्—

मध्यमं दशतालं स्याद् भानुपङ्क्त्यङ्गुलं भवेत्।
कलाधिकशताङ्गुल्यमधमं दशतालकम्।
सद्द्वादशशतं भागं नवतालोत्तमं भवेत्॥
अष्टोत्तरशतांशन्तु मध्यमं नवतालकम्।
कन्यसं नवतालं स्याद् द्वेधा( स्याद्वेदा )धिकशतं भवेत्॥
तालं प्रत्येवमेवं तु क्रमाद् वेदाङ्गुलं हरम् ( अ० ५०, ७७-८० श्लो० )

इत्युक्तम्। शिल्परत्नोत्तरभागेऽपि यथोक्तार्थकादर्द्धत्रितयात् परम्—

'तालं प्रत्येवमेवन्तु क्रमाद् वेदांशहानितः' ( अ० ४, ३८ श्लो० )

इत्युक्त्वा सर्वेषामेव तालानां चतुश्चतुरङ्गुलहान्या उत्तममध्यमाधमत्वं प्रतिपादितम्। तत्र मत्स्यपुराणे यद्दशतालप्रमाणत्वमुक्तं रामादीनां तन्मध्यमं दशतालमादायैवेत्यभ्युपगमेन जातेऽपि कथञ्चित् समाधाने, बृहत्संहितायां 'द्वादशहान्ये'( अ० ५७, ३० श्लो० )त्यादि यदुक्तं तेन त्वसामञ्जस्यं दुष्परिहरमेव। 'द्वादशहान्ये'त्यादिपरार्द्धस्य त्वयमर्थः—शेषा अन्याः प्रतिमा द्वादशहान्या द्वादशकद्वादशकहीनत्वेन प्रवरसमन्यूनपरिमाणा भवन्ति। विंशत्यधिकादङ्गुल-शताद् द्वादशाङ्गुलान्यपास्याष्टाधिकं शतमङ्गुलानां प्रतिमा प्रधाना भवति। ततोऽपि द्वादशक-मपास्य षण्णवत्यङ्गुलसमा मध्यमा प्रतिमा, ततोऽपि द्वादशकमपास्य चतुरशीत्यङ्गुला न्यूनपरिमाणा प्रतिमा भवतीत्यर्थः, एवमेवोत्पलभट्टाः। एतच्च परिमाणं काश्यपशिल्पादिमते मध्यमनवतालादि-सप्ततालान्तप्रतिमाया इति ज्ञेयम्, मध्यमनवतालस्याष्टाधिकशताङ्गुलत्वादन्ते सप्ततालस्य चतुर-शीत्यङ्गुलत्वाच्च। परं सप्तभिस्तालैर्देवप्रतिमाया विधानं नोपलभ्यते, तैः 'पिशाचाः सप्तमेन तु' ( अ० ५०, ८७ श्लो० ) इत्यादिना पिशाचानामेव काश्यपशिल्पे कर्तव्यतोपदेशात्। समराङ्गण-सूत्रधारेऽपि—

देवादीनां शरीरं स्याद् विस्तारेणाष्टभागिकम्।
त्रिंशद्भागायतं चैतद् विदध्याच्चित्रशास्त्रवित्॥

इति भागमानेन यत् प्रतिमाया मानमुक्तम्, तेनाऽपि विंशत्यधिकशताङ्गुलमेव प्रतिमायाः परिमाणं भवति, भागस्य चातुराङ्गुल्याभिधानात्, बृहत्संहितायाञ्च देवप्रतिमाया एव चतुरशीत्यङ्गुल-मानायाः कनीयस्त्वकथनाच्च।

[ तालमानेन मूर्त्तीनां कर्तव्यता ]

कीर्ति(कूर्म?)मुखं त(ता?)लमुखं द्वाभ्यां प्रोक्ता त्रिहङ्गमाः।
त्रितालैः कुञ्जरा ज्ञेया वेदतालैस्तुरङ्गमाः ॥ ४ ॥

---

यच्च शिल्परत्न-काश्यपशिल्पयोः 'क्रमाद् वेदाङ्गुलं हरम्' 'क्रमाद् वेदांशहानितः' इत्यादिना सर्वत्रैव ताले चतुरङ्गुलहान्या प्रतिमाया उत्तमादित्वमतिदिष्टम्, तदपि नवतालविश्रान्तमिति प्रतीयते । नवतालस्यैव कण्ठत उत्तमादित्वकथनात् । कियद्भिर्वा किंविधैर्वा उत्तमादिभेदभिन्नैस्तालैः कस्य प्रतिमा कार्येत्यपेक्षायामपि त्रिधा भिन्नैर्नवतालैः प्रतिमाविधानस्योक्तत्वाद् अष्टतालैः पुनरेकविधैरेव तद्विधानस्याभिहितत्वाच्च । किञ्च—यद्येवं सर्वत्र ताले वेदांशहान्योत्तमादिभेदः कल्प्येत तदैकतालेऽपि तथात्वप्राप्तेर्मध्यममेकतालमष्टाङ्गुलम् अधमञ्चैकतालं चतुरङ्गुलं भवेदिति पूर्वोक्तम्—

'तदङ्गुलैर्द्वादशभिर्भवेत्तालस्य दीर्घता'

इति वचनं व्यर्थमेव स्यात् । न चैतदप्युत्तमैकतालपरमिति कल्पने नार्थक्षतिरिति वाच्यम्, तादृशकल्पने मानाभावात् । न च 'वेदांशहानितः' इत्यादिवचनमेव तत्र मानमित्यपि वाच्यम्, तस्य नवतालपार्यन्तिकत्वस्वीकारेऽपि क्षत्यभावादिति दिक् ।

४ । कीर्तीति । तालमुखमिति तालानां मुखम् आद्यावयव एकताल इत्यर्थः, यत्र तथाभूतं कूर्ममुखं भवेदित्यर्थः । 'एकतालन्तु कूर्मकम्' इति काश्यपशिल्पे ( अ० ५०, ८९ श्लो० ), 'तालात् कूर्माकृतिर्हरि'रिति शिल्परत्नोत्तरभागे च ( अ० ४, ५० श्लो० ) अविशेषेण कूर्मस्यैव विधानादत्राङ्गविशेषकल्पना निष्प्रमाणान्तराऽपि युक्तिसहेति 'कूर्ममुख'मिति पाठान्तरं कल्पितम् । तथा हि यदत्र प्रकरणे तालेन प्रमाणमभिहितं तद् दैर्घ्यमभिप्रेत्य, आयामस्तु ग्रन्थान्तरादवगम्यते । तथा च समराङ्गणसूत्रधारे दशतालमूर्त्तिं प्रकृत्य भागमानेनोक्तम्—

देवादीनां शरीरं स्याद् विस्तारेणाष्टभागिकम् ।
त्रिंशद्भागायतं चैतद् विदध्याच्चित्रशास्त्रवित् ॥ ( अ० ७९, ४-५ श्लो० ) ।

इति । भागश्चतुरङ्गुलम् । एवञ्च गोलाकृतेः कूर्मस्य तालेन दैर्घ्यकथनापेक्षया दीर्घाकृतेस्तन्मुखस्य तदुक्तिर्युक्तिबाहुल्यं भजत इति साध्वियं पाठकल्पना । यद्वा—कूर्मस्य मुखमिव मुखं यस्येति विग्रहात् कूर्मावतारी हरिरित्यर्थः पूर्वोद्धृतशिल्परत्नवचनप्रामाण्यादवसेयः ।

न च—

'कूर्मावतारिणं देवं कमठाकृतिमालिखेत्' ( अ० २९, १२३ श्लो० )

इति शिल्परत्नोत्तरभागीयपद्यदर्शनात् कूर्मावतारस्य हरेः सर्वाण्येवाङ्गानि कूर्मसदृशानीति कथं मुखमेव कूर्माकृतीत्युच्यते इति वाच्यम्, अत्र सामान्येन विशेषो लक्षणीयः, तथा च मुखपदमत्रावयवसामान्ये लाक्षणिकमिति न काचिदनुपपत्तिः । अत्र मूले बिन्दू अपि प्रामादिकाविति ज्ञेयम्, प्रक्रमात्

कुब्जाश्च पञ्चभिस्तालैरुपविष्टो जनस्तथा ।
उपविष्टाः प्रकर्तव्या ब्रह्मविष्णुशिवा वृषः ॥ ५ ॥
शूकरं पञ्चतालैश्च षट्तालं स्याद् विनायकम् ।
मध्यमं शूकरं ज्ञेयं वृषभञ्च तथैव हि ।
मनुजाः सप्तभिस्तालैर्वृषभं शूकरन्तथा ॥ ६ ॥
अष्टाभिः पार्वती प्रोक्ता मातरश्च तथैव हि ।
दुर्गा लीला महालक्ष्मील(र्ल?)क्ष्मीर्या तु सरस्वती ॥७॥
कालिन्दी चैव सावित्री नदा(नन्दा?) पद्मावती तथा ।
कात्यायनी समाख्याता भगवत्यष्टकाल(ताल?)का ॥८॥
नवतालैर्भवेद् विष्णुर्ब्रह्मात्मा देवतास्तथा ।

---

कर्मणि प्रत्ययस्यैव स्वारसिकत्वेन 'कीर्त्तिमुखस्तालमुखो' इति पाठस्यैव भाव्यत्वात्। एवमिहाहमहमिकयैव बिन्दुविसर्गयोर्व्यत्ययस्तत्र तत्र समुल्लसन् पाठकैः स्वयं विचार्यः। रूपमण्डने तालमधिकृत्य—'ग्रासवक्त्रमेकभागे द्वौ पक्षी कुञ्जरास्त्रयः' इत्येतत्समानार्थं पद्यमाह।

अत्र कियद्भिस्तालैः के के कर्त्तव्या इत्यत्र शिल्पशास्त्रकृतां बहवो मतभेदा दृश्यन्ते, ते च प्रभूतस्थानसव्यपेक्षा इति सर्वमनुद्धृत्याष्टालत एकतालान्ता विलोमेन काश्यपशिल्पादुद्ध्रियन्ते, एतेषामेवात्राधिक्येनोपयोगित्वात्। अत्र चादर्शप्राप्तमशुद्धं पाठमपहाय सम्पादकैः कृतशुद्धयः पाठा उद्ध्रियन्ते—

अष्टतालेन साध्यांस्तु पिशाचाः सप्तमेन तु ।
रसतालेन कुब्जांस्तु कारयेद्देशिकोत्तमः ॥
पञ्चतालोक्तमानेन वित्तेशं कारयेद् बुधः ।
तन्मध्यमाधमेनैव सर्वभूतगणान् कुरु ॥
बालन्तु वेदतालेन त्रितालेनैव कारयेत् ।
द्वितालं किन्नरञ्चैव एकतालन्तु कूर्मकम् ॥ इति । (अ० ५०, ८७-८९ श्लो०)

६ । मध्यममिति । प्रथमार्द्धे पञ्चतालकर्त्तव्यत्वेन यः शूकर उद्दिष्टः स मध्यम इति ज्ञेयः नोत्तमो नापि वाऽधमः । एवं तृतीयार्द्धे सप्ततालकर्त्तव्यत्वेन यो वृषभ उद्दिष्टः सोऽपि मध्यम एवेत्यर्थः । सप्ततालकर्त्तव्यस्तृतीयशूकरश्च मध्यमेतर इति व्याख्येयम्, अन्यथा पौनरुक्त्यापत्तेः । वृषभशूकरयोः साप्ततालिकत्वकथनं मतान्तरेणेति ज्ञेयम् ।

दशतालैर्भवेद्रामो बलिर्वैरोचन(नि?)स्तथा ।
सिद्धाश्चैव जितेन्द्राश्च ऊर्द्ध्वास्ते च प्रकीर्तिताः ॥ ९ ॥
ताला एकादश स्कन्दो हनुमांश्चण्डिका तथा ।
भूतानाञ्च समस्तानामेष तालः प्रकीर्तितः ॥ १० ॥
ताला द्वादश वेताला राक्षसाश्च त्रयोदश ।
पिशाचाः क्रूरकर्माणः शस्यन्ते मुकुटैर्विना ॥ ११ ॥
तालाश्चतुर्दश प्रोक्ता दैत्येन्द्रा मुकुटैर्युताः ।
तिथ्या समानतालैश्च भृगुरूपं प्रकारयेत् ॥ १२ ॥
अत ऊर्द्ध्वं न कर्तव्यं प्रमाणं कथयाम्यतः ।

[ तालानुसारेणावयवमानम्, तत्र सप्ततालेऽवयवमाननिरूपणम् ]

सप्ततालं प्रवक्ष्यामि केशान्ते च त्रिमात्रकम् ॥ १३ ॥

---

१०—१२ । एकादशादिपञ्चदशान्तास्ताला नान्यत्रोपलभ्यन्ते ।

रूपमण्डने तु—

'कलांशाः क्रूरदेवाः स्युरत ऊर्द्ध्वं न कारयेत्' । ( अ० १, २३ श्लो० )

इत्यनेन षोडश तालाः क्रूरदेवानां मानमित्युक्तम् । यच्च काश्यपशिल्पे—

एकादिनवहस्तान्तं नवधा हस्तमानकम् ।
तालादिनवतालान्तं तथा नवविधं भवेत् ॥ ( अ० ५०, ३४ श्लो० )

इति नवतालान्तं तालमानमुक्तं तत्तु सामान्यत इति ज्ञेयम् । एवञ्च सत्यामपि पूर्वार्द्धे हस्तमानस्य नवधात्वोक्तौ यत् पूर्वम्—

दशादिकरवृद्ध्या तु षट्त्रिंशत् प्रतिमाः पृथक् ।
बाणवेदकरान् यावच्चतुष्क्यां पूजयेत् सुधीः ॥ ( अ० १, १९ श्लो० )

इत्युक्तम्, तस्यापि विशेषान्तःपातान्नासामञ्जस्यमिति ध्येयम् ।

१३ । इदानीं कियत्तालानां प्रतिमानां कियन्त्यङ्गमानानीति वक्तुमादौ सप्ततालप्रतिमाया अङ्गमानमाह—सप्ततालमिति । रूपमण्डने तु षट्तालप्रतिमाया अप्यङ्गविभाग उक्तः ; तथा च—

मुखं तालद्वयं तस्य जठरं तत्समं भवेत् ।
गुह्यं वेदाङ्गुलम् ऊरू सप्त जङ्घा च तत्समा ॥

वक्त्रं तालप्रमाणञ्च ग्रीवा स्यादङ्गुलत्रयम् ।
सार्द्धसप्ताङ्गुलं वक्षो मध्यं नवभिरङ्गुलैः ॥ १४ ॥
सप्तसार्द्ध( ?)नाभिमेढ्रमूरू अष्टादश स्मृताः ।
जान्वङ्गुलत्रयं प्रोक्तं जङ्घे अष्टादशाङ्गुले ।
पादोत्सेधन्त्रि(त्रि ?)मात्रन्तु(स्तु ?) मनुजाः सप्ततालये(के ?)॥१५॥

[ मध्यमसप्ततालेऽवयवमाननिरूपणम् ]

सप्तसार्द्धं प्रवक्ष्यामि तालं मङ्गल-शुक्रयोः ।
बुधसौर्योस्तथा ज्ञेयं केशान्तश्च त्रिमात्रकम् ॥ १६ ॥
वक्त्रं द्वादशमात्रन्तु ग्रीवा चैव त्रिमात्र(त्रि ?)का ।
दशमात्रं भवेद् वक्षो नाभिमेढ्रं तथोदरम् ॥ १७ ॥
अष्टादश भवेदूरू(रुः ?) जानु मात्रात्रयं स्मृतम् ।
अष्टादशाङ्गुलौ ग्रन्थी ग्रहाणामङ्गुलौ पदौ ॥ १८ ॥

[ अष्टतालेऽवयवमानम् ]

अष्टतालं प्रवक्ष्यामि देव्याश्चण्डस्य(ण्ड्याश्च ?) लक्षणम् ।
मात्रात्रयं स्यात् केशान्तं वक्त्रञ्च द्वादशाङ्गुलम् ॥ १९ ॥
ग्रीवा च अ(त्र्य ?)ङ्गुला कार्या हृदयं नवभिस्तथा ।
मध्यं द्वादशमात्रं स्यान्नाभिमेढ्रं नवाङ्गुले ॥ २० ॥
एकविंशद् भवेदूरू(रुः ?) जानु चैव गुणाङ्गुलम् ।
जङ्घाऽङ्गुलैकविंशत्या पादमूलं गुणाङ्गुलम् ॥ २१ ॥

---

गुणाङ्गुलं भवेज्जानु पादः कार्यो गुणाङ्गुलः ।
रसतालमिति प्रोक्तम्........... ॥ इति ( अ० १, २४-२९ श्लो० )

शिल्परत्नोत्तरभागे च दशादिचतुस्तालान्तप्रतिमाया अङ्गविभागः प्रदर्शित इति विशेषः ।

१६ । सप्तसार्द्धमिति मध्यमसप्ततालमित्यर्थः ; तत्प्रमाणञ्चैतन्मते नवत्यङ्गुलम्, मतान्तरे त्वष्टाशीत्यङ्गुलमिति ज्ञेयम् । प्रकरणेऽस्मिन् मात्राभागादिशब्दोऽङ्गुलमानबोधकः ।

[ मध्यमाष्टतालेऽवयवमानम् ]

अष्टसार्द्धं प्रवक्ष्यामि गीष्पतेस्ताललक्षणम् ।
केशान्तश्च त्रिमात्रन्तु वक्त्रं स्याद्द्वादशाङ्गुलम् ॥२२॥
ग्रीवा च अ(त्र्य?)ङ्गुला कार्या हृदयं नवभिस्तथा ।
त्रयोदश भवेन्मध्यं तालेन नाभिमेढ्रके ॥२३॥
द्वाविंशत्या भवेदूरुर्जानु चैव त्रिमात्रकम् ।
जङ्घे ऊरुसमे प्रोक्ते त्र्यङ्गुलः पाद एव च ॥२४॥

[ नवमतालेऽवयवमानम् ]

नवतालं प्रवक्ष्यामि ब्रह्माद्या देवता यथा ।
केशान्तश्च त्रिमात्रन्तु कर्तव्यं देवरूपकम् ॥२५॥
यावन्मानो भवेत्तालो विभजेद्द्विभागकैः ।
सूर्य(१२)राम(२)दशा(२०)र्का(१२)ब्धि (४)वसु(८)जैन(२४)
युगा(४)र्हताः(२४) ॥२६॥
वेदा(४) वक्त्रगलौ वक्षो नाभिस्तूदरगुह्यकम् ।
तथोरू जानुनी जङ्घे चरणौ च यथाक्रमे(क्रमम्) ॥२७॥
विस्तरस्तेन(विस्तारः स्तन)गर्भे च द्वादशाङ्गुलमीरितम् ।
तद्बाह्ये वेदवेदांशे कक्षे एकान्तरे ततः ॥२८॥
सप्तसप्ताङ्गुलौ बाहू दीर्घ(दैर्घ्ये) स्यात् षोडशाङ्गुलौ ।
करोऽष्टादशमात्रे(त्रः?) च विस्तरे(विस्तारो)ऽग्रे गुणाङ्गुलः ॥२९॥
दीर्घे सूर्याङ्गुलः पार्ष्णिर्विस्तरे पञ्चमात्रकः ।
नाभिः सूर्याङ्गुलो व्यासे कटिः प्रोक्ता जिनाङ्गुला ॥३०॥

---

२८—२९। स्तनगर्भे स्तनयोरन्तरे। ईरितं कथितम्। तद्बाह्ये स्तनगर्भाद् बहिः कक्षे कक्षद्वयं वेदवेदांशे अष्टाङ्गुले। तत एकान्तरे एकमात्राव्यवधाने बाहू सप्तसप्ताङ्गुलौ विस्तारे एकः सप्ताङ्गुलस्तथा अन्यश्च सप्ताङ्गुलः। करमानान्तरमाह—करोऽष्टादशमात्रः, अग्रे अग्रस्य विस्तारः गुणाङ्गुलः षडङ्गुलः।

मूल एकादशोरू स्याद् जङ्घा प्रान्ते युगाङ्गुला ।
चतुर्दशाङ्गुलः पादस्ततोऽर्द्ध(स्तदूर्ध्वे) च युगाङ्गुलः ॥३१॥
कक्षः स्कन्धस्तदूर्द्ध्वे तु कर्त्तव्यश्चाष्टमात्रकः ।
ग्रीवा चाष्टाङ्गुला व्यासे पादः प्रोक्तः षडङ्गुलः ॥३२॥
जानाति नानाविधरूपभावं श्रीविश्वकर्मा सुरसूत्रधारः ।
ऊर्द्ध्वाण्डजस्वेदजरायुजाढ्यं स विश्वरूपं सुखहेतवेऽस्तु ॥३३॥

इति श्रीक्षेत्रात्मजसूत्रभृन्मण्डनविरचिते वास्तुशास्त्रे रूपावतारे देवतामूर्त्तिप्रकरणे प्रतिमातालनिर्णयाधिकारो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

३० । पुनरपि करमानान्तरमाह—दीर्घ इति । पाणिर्दैर्घ्ये सूर्याङ्गुलः द्वादशाङ्गुलः, विस्तारे पञ्चमात्रकः पञ्चाङ्गुलः । व्यासे विस्तारे जिनाङ्गुला चतुर्विंशत्यङ्गुला ।

३१—३२ । ऊरुप्रमाणमाह—मूल इति । ऊरुमूलमेकादशाङ्गुलं स्यादित्यर्थः । जङ्घा प्रान्ते युगाङ्गुला चतुरङ्गुला । पादश्चतुर्दशाङ्गुलः, तदूर्द्ध्वे युगाङ्गुलः, कक्षश्च युगाङ्गुलः । तदूर्द्ध्वे तु अष्टमात्रकः स्कन्धः कर्त्तव्यः ।

३४ । अत्र य इत्यध्याहार्यम् , नानाविधरूपभावम् ऊर्द्ध्वाण्डजस्वेदजरायुजाढ्यं विश्वस्य रूपं यो जानाति स सुखहेतवेऽस्त्वित्यन्वयः । ऊर्द्ध्व उपरिस्था उद्भिद इत्यर्थः, ते च अण्डानि च तेभ्यो जायन्ते इत्यूर्द्ध्वाण्डजाः ; 'द्वन्द्वात् पूर्वं परं वा यत् श्रूयते तल्लभते प्रत्येकमभिसम्बन्धमिति न्यायाद् उद्भिजा अण्डजाश्चेत्यर्थः ।

# तृतीयोऽध्यायः



[ अथ देवतापदस्थानम् ]

त्रिःसप्तांशे कृते माने ब्रह्मांशे सूत्रमध्यमे ।
कृत्वा षडंशकं तच्च चामेध्यंशं (वामे द्व्यंशं?) व्यपोह्य च ॥१॥
तन्मानमग्रतो नीत्वा प्रागुदग्रातत् (प्रागुदग्गत ?) सूत्रकम् ।
तद् ब्रह्मसूत्रमित्युक्तं तत् सूत्रं शिवमध्यगम् ॥२॥

---

१-२। इदानीं देवतापदस्थानं वक्तुं लिङ्गस्थानोपयोगि ब्रह्मसूत्रमाह—त्रिःसप्तांश इति द्वाभ्याम्। सूत्रमध्यमे वास्तुमध्यभागे ब्रह्मांशे तदंशमाश्रित्येत्यर्थः, माने द्वारमाने त्रिःसप्तांशे कृते एकविंशत्या भागैर्विभक्ते भागफलं यन्मानं भवतीत्यर्थः, तत् षडंशकं कृत्वा वामे वामतो द्व्यंशं व्यपोह्य परित्यज्य, अग्रतो दक्षिणत इत्यर्थः तत् तादृशं मानं द्व्यंशमिति यावत्ः, नीत्वा अपनीय प्रागुदग्गतसूत्रकं पूर्वदिग्गतसूत्रम् उत्तरदिग्गतसूत्रं वा यद् वर्त्तते तद् ब्रह्मसूत्रमित्यर्थः। तथा च मयमते—

त्रिःसप्तांशे कृते द्वारे ब्राह्मेंऽशे मध्यमे भवेत् ।
कृत्वा षडंशकं तच्च वामे द्व्यंशं व्यपोह्य च ॥
तदंशमग्रं नीत्वा तु प्रागुदग्गतसूत्रकम् ।
तद् ब्रह्मसूत्रमित्युक्तं तत् सूत्रं शिवमध्यमम् ॥ (अ० ३३, ३८-४० श्लो०)

इति। मत्स्यपुराणे तु—द्वारमानमेकविंशत्या विभज्य विभक्तानामेकविंशतिभागानामर्द्धं पुनस्त्रिधा विभजेत्; ततस्तस्य भागत्रयस्य वामदक्षिणयोर्भागद्वयं विहाय मध्यभागे ब्रह्मस्थानं कल्पयेदित्युक्तम्। तथा च—

द्वारं विभज्य पूर्वन्तु एकविंशतिभागिकम् ।
ततो मध्यगतं ज्ञात्वा ब्रह्मसूत्रं प्रकल्पयेत् ॥
तस्यार्द्धन्तु त्रिधा कृत्वा भागञ्चोत्तरतस्त्यजेत् ।
एवं दक्षिणतस्त्यक्त्वा ब्रह्मस्थानं प्रकल्पयेत् ॥ ( अ० २६३, ५-६ श्लो० )

इति। ततश्च मयमतीयपाठदर्शनाद् यदस्माभि'र्वामे द्व्यंशम्' इति पाठः शुद्धत्वेन कल्पितस्तन्मतान्तरमिति कृत्वेति ज्ञातव्यम्। 'वामे चांशम्' इति पाठस्त्वक्षरसंवादाभावात् स्वसमानतन्त्रान्तरासम्मतेश्च न गृहीतः। अन्यच्च—मत्स्यपुराणे ब्रह्मसूत्रस्य हेयांशयोश्च यन्मानमुक्तम् अत्र च तेषां तद्द्विगुणं मानमुक्तमिति दृश्यते। तच्च 'वामे द्व्यंशम्' इति पाठ एवोपपन्नं भवति, न तु

मध्ये यद् ब्रह्मणः सूत्रं तस्य वामे शिवस्य च ।
तन्मध्ये वैष्णवं सूत्रं तत्सूत्रे(त्रं ?) सार्वदैवतम् ॥३॥
मध्ये त्रि(त्रै ?)पुरुषे रुद्र आदौ ब्रह्माऽन्तगो हरिः ।
क्रमेण सौख्यदा एव विपरीता भयावहाः ॥४॥
रुद्रः हरिरब्धः.............................. ।
तत्तुल्या च उमा देवी सुखदा सर्वकामदा ॥५॥
भाग एकोनपञ्चाशद् गर्भार्द्धं मितितो भजेत् ।
गर्भांशो ब्रह्मसंस्थान(नं ?) दैवं भागाष्टकं ततः ॥६॥

---

'वामे चांशम्' इति पाठे । तथा हि—मत्स्यपुराणोक्तक्रमेण एकविंशतिधा विभक्तस्य द्वारस्यार्द्धे त्रिधा कृते सार्द्धत्रयो भागा भवन्ति, एवं प्रकृतग्रन्थोक्तक्रमेण—एकविंशतिधाऽशितस्य द्वारस्य समग्रस्य षड्भिर्विभागेऽपि त एवांशा भवन्ति । ततश्चार्द्धात् सार्द्धत्रिभागं त्यजतः समग्रात् सप्तांशत्यागो गणितागमानुगत्या नार्थान्तरकोटिमारोहतीति, मूले द्व्यंशत्यागो मात्स्ये चैकांशत्यागो वस्तुगत्या एक एवेति न काचिद् विप्रतिपत्तिः । एवं ब्रह्मस्थानेऽपि द्वैगुण्यादि ज्ञेयम् ।

तत् सूत्रमिति । तद् ब्रह्मसूत्रम्, शिवमध्यगम्—शिवो मध्यगो यस्य तादृशम्, तन्मध्ये लिङ्गं स्थापयेदित्यर्थः, वक्ष्यति च स्वयमेव 'ब्रह्मांशे लिङ्गमैश्वरम्' (५४ पृ० ८ श्लो०) इति ।

३ । मध्य इति । मध्ये यद् ब्रह्मणः सूत्रं पूर्वमुक्तम्, तस्य वामे वामभागे व्यपोहितद्व्यंशे इत्यर्थः, शिवस्य सूत्रं भवेत्, तन्मध्ये दक्षिणे इत्यर्थः, वैष्णवं सूत्रं भवेत्, तत् सूत्रञ्च सार्वदैवतं सर्वदेवतास्थानम् । वक्ष्यति च—'दैवांशे ब्रह्मविष्ण्वंशाः सर्वे देवाश्च' (७ श्लो०) इति ।

४ । मध्य इति । त्रैपुरुषे ब्रह्मविष्णुरुद्राणामाश्रयभूते सूत्रे, यद्वा त्रिषु पुरुषेषु मध्ये, रुद्रस्तत्सूत्रस्य मध्ये भवेत्, आदौ ब्रह्मा भवेत्, हरिश्चान्तगो भवेत् ।

क्रमेणेति । एवंक्रमेण वर्त्तमाना एते सौख्यदा भवन्ति, विपरीताश्च भयमावहन्तीत्यर्थः । तथा च समराङ्गणसूत्रधारे—

स्थापयेत् ( पुरुषत्रया ? ) शि ( वा ? वं ) मध्ये निवेशयेत् ।
ब्रह्माणं दक्षिणेनास्य वामतः पुरुषोत्तमम् ॥
अन्यथा स्थापनादेषां प्रत्यवायो महान् भवेत् । ( अ० ७०, १४१-१४२ श्लो० )

इति । अस्फुटार्थाऽपीयमर्द्धत्रयी प्रकृतोपयोगिनीत्यत्र नास्ति नः स्तोकोऽपि संशयः ।

५ । रुद्र इत्यादि । खण्डितत्वाद् दुर्ज्ञेयोऽस्यार्थः ।

६-८ । गर्भमानेन देवानां स्थानमाह—भाग इति । अत्र च भागा इत्युचितोऽपि पाठो

मानुषं (षः ?) षोडशांशः स्याच्चतुर्विंशत् पिशाचकः ।
दैवांशे ब्रह्मविष्ण्वंशाः सर्वे देवाश्च मानुषे ॥७॥
मातरो यक्षगन्धर्वा रक्षा(क्षो ?)भूतसुरादयः ।
स्थाप्याः पैशाचकेऽंशे ते ब्रह्मांशे लिङ्गमैश्वरम् ॥८॥

इति देवतापदस्थानम्

## अथ देवतादृष्टिस्थानम्

द्वारादयोऽष्टधा कर्म (कार्या ?) एकैकांशोऽष्टधा पुनः ।
चतुःषष्टिविभागेषु विषमेषु शुभा दृशः ॥९॥

---

भजेदिति क्रियानिष्ठैकत्वव्यपेक्षया न कृतः, आमूलं शोधितश्च वैरस्यमावहेदित्यवधेयम् । मितितो मानेन एकोनपञ्चाशद् भागो गर्भार्द्धं भजेत्, गर्भार्द्धम् एकोनपञ्चाशता भागैर्विभजेदित्यर्थः । तत्र गर्भांशो मध्यम एकांशो ब्रह्मसंस्थानं ब्रह्मांशः, ततोऽष्टौ भागा देवानाम्, षोडश भागा मानुषाणाम्, चतुर्विंशतिर्भागाः पिशाचानामिति समुदिता एकोनपञ्चाशद् भागाः ।

लिङ्गस्य प्राधान्यात् पश्चान्निर्देशमभिप्रेत्य ब्रह्मांशमपहायैव दैवांशमाह—दैवांश इति । ब्रह्मविष्ण्वंशास्तत्परीवाराः सर्वे देवाश्च दैवांशे स्थाप्याः । अत्र 'सर्वे देवाश्च' इत्युक्तत्वाद्वक्ष्यमाणे भूतसुरादय इत्यत्र सुरपदं देवयोनिपरम्, तथा च ये तावदत्रोक्तास्ते तदितरे च देवयोनय इत्यर्थः । मानुषे अंशे मातरः स्थाप्याः, पैशाचकेऽंशे यक्षगन्धर्वादयः स्थाप्या इत्यर्थः ।

ब्रह्मांश इति । ऐश्वरं लिङ्गं शिवलिङ्गम्, एतदुपलक्षणं प्रतिष्ठाप्यदेवतार्चामात्रमित्यर्थः । तथा चाऽऽग्नेये—

पिण्डिकास्थापनार्थन्तु गर्भाकारन्तु सप्तधा ।
विभजेद् ब्रह्मभागे तु प्रतिमां स्थापयेद् बुधः ॥
देवमानुषपैशाचभागेषु न कदाचन । ( अ० ६०, १-२ श्लो० )

इत्यविशेषेण ब्रह्मभागे प्रतिमास्थापनं देवादिभागानाञ्च तत्कर्मणि निन्दनीयत्वमुक्तम् । अत्र च देवादिषु कस्य कियन्तो भागा इति न विशिष्योक्तम् । यदि च 'सप्तधे'त्यस्य वीप्सार्थत्वमङ्गीकृत्य एकोनपञ्चाशदित्यर्थलाभाय 'सप्तसप्तधे'ति व्याक्रियेत, तदा प्रकृतग्रन्थानुगृहीता विभागरीतिस्तत्राप्यादरणीया स्यादिति विभावनीयम् । इति देवतापदस्थानव्याख्या ।

९ । देवानां दृष्टिस्थानं वक्तुं द्वारविभागमाह—द्वारादय इति । अत्राऽऽदिपदग्राह्यं किमिति जानाति तत्रभवान् सूत्रभृन्मण्डन एव । चतुःषष्टिविभागेषु मध्ये विषमेषु भागेषु दृशो दृष्टयः शुभाः ।

त्रयोविंशतिपर्यन्तमेकादि विषमांशके ।
स्थाप्या उ(न्यु ?)दुम्बरादूर्ध्वं शिवलिङ्गानि धीमता ॥१०॥
पञ्चविंशे मुखं लिङ्गं द्वेऽ(द्व्य ?)धिके जलशायिनः ।
धनदस्य द्व्याधिक्ये मातृणां तद्द्व्याधिके ॥११॥
वृ(य ?)त्ताणां दृक् त्रयस्त्रिंशे पञ्चत्रिंशे वराहदृक् ।
सप्तत्रिंश उमेशस्य बौद्धस्य तद्द्व्याधिके ॥१२॥
एकाधिचत्वारिंशे तु स(ा ?)वित्र्या ब्रह्मणो दृशः ।
दुर्वाससो द्व्याधिक्ये नारदागस्त्ययोरपि ॥१३॥
पञ्चवेदपदांशे तु लक्ष्मीनारायणस्य च ।
द्व्याधिक्ये विधेर्धातुः सरस्वत्या द्व्याधिके ॥१४॥
सारदांशे गणेशस्य द्व्यधिकेऽब्जासनस्य च ।
हरसिद्धिस्त्रिपञ्चांशे कर्तव्या सर्वकामदः (दा ?) ॥१५॥
ऊर्ध्वार्चादृष्टिसंस्थानं ब्रह्मविष्णुजिनार्कयः ।
पञ्चपञ्चाशद्भागे स्याद्रौद्री तस्माद्द्व्याधिके ॥ १६ ॥

---

१० । शिवलिङ्गदृष्टिस्थानमाह—त्रयोविंशतीत्यादि । एकादित्रयोविंशतिपर्यन्तं विषमांशके एक-त्रि-पञ्च-सप्तेत्याद्ययुग्मांशे, उदुम्बराद् देहल्या ऊर्ध्वं शिवलिङ्गानि स्थाप्यानि, यथा तत्तद्युग्मांशे लिङ्गानां दृष्टिः स्यात्तथा तानि स्थापयेदित्यर्थः ।

११ । मुखं लिङ्गमिति लिङ्गविशेषः । द्व्यधिके इति सप्तविंशे । द्व्याधिके ऊनत्रिंशे । तद्द्व्याधिक इत्येकत्रिंशे ।

१२ । तद्द्व्याधिके ऊनचत्वारिंशे ।

१३ । एकाधिचत्वारिंशे इत्येकचत्वारिंशे । द्व्याधिक्ये इति त्रिचत्वारिंशे ।

१४ । पञ्चवेदपदांशे पञ्चचत्वारिंशांशे ।

१५ । सारदांश इति । सारदा दुर्गा लक्ष्मया तत्पीठस्थानानि, तन्मिते अंशे एकपञ्चाशांश इत्यर्थः । त्रिपञ्चांश इति त्रिपञ्चाशांशे, अयञ्चांशोऽब्जासनहरसिद्ध्योः साधारण इति ज्ञेयम्, 'द्व्यधिकेऽब्जासनस्य' इत्यनेन त्रिपञ्चाशांशेऽब्जासनस्य दृष्टेरुक्तत्वात् ।

चण्ड्या एकोनषष्ट्यंशे भैरवी तद्द्वयाधिके ।
वेतालस्य त्रिषष्ट्यंशे पदं शून्यं तदर्द्ध(दूर्द्ध?)तः ॥ १७ ॥
लिङ्गाग्रे नैव कर्त्तव्या ह्यर्चारूपेण देवताः ।
प्रभानष्टा नभोगा य(श्च?) यथा तारा दिवाकरे ॥ १८ ॥
शिवस्याग्रे शिवं कुर्याद् ब्रह्माणं ब्रह्मणोऽग्रतः ।
विष्णौ विष्णुः(ष्णुं?) जिने जैनं सूर्ये सूर्यमनुक्रमात् ॥१६॥
मातरश्चण्डिकाग्रे स्युर्यत्ताः वेतालादिभैरवः ।
स्वे स्वे स्थाने सुराः स्थाप्या ये यस्यापि हितावहाः ॥ २० ॥
ब्रह्मविष्ण्वोरेकनाभिर्जि(र्जि?)ने दोषो न विद्यते ।
शिवाग्रे चान्यदेवस्य दृष्टिवेधे महद् भयम् ॥ २१ ॥
ब्रह्मा विष्णुः शशी सूर्य इन्द्रः स्कन्दो हुताशनः ।
दिक्पाला लोकपालाश्च ग्रहा मातृगण(णा?)स्तथा ॥२२॥

---

१७। भैरवीति भैरवस्य दृष्टिः। पदमिति। तदूर्द्ध्वतः त्रिषष्ठ्यंशात् परतः शून्यं पदं दृष्टिस्थानं भवति, विषमद्वारांशस्य त्रिषष्ठ्यंश एव निःशेषितत्वात् ।

१८। लिङ्गाग्र इति। लिङ्गाग्रे शिवलिङ्गाग्रे अर्चारूपेण प्रतिमारूपेण देवता न स्थाप्याः। एतच्च, 'शिवस्याग्रे शिवं कुर्यात्' इति वक्ष्यमाणविधेरपवादकम्, लिङ्गाग्रे शिवप्रतिमामपि न कुर्यादित्यर्थः। एवञ्च शिवस्याग्रे शिवं कुर्यादित्यस्यायमर्थः—शिवस्य लिङ्गस्याग्रे शिवं शिवलिङ्गम्, शिवस्य प्रतिमाया अग्रे च शिवप्रतिमां कुर्यादिति ।

प्रभानष्टेति। लिङ्गाग्रे अर्चारूपेण देवताः कृताश्चेत् प्रभानष्टा नष्टप्रभा भवन्ति। अत्र दृष्टान्तमाह—नभोगेति। यथा दिवाकरे उदिते नभोगा नभःस्थास्तारा नष्टप्रभा भवन्ति तद्वदित्यर्थः।

२०—२१। पूर्वं 'ब्रह्माणं ब्रह्मणोऽग्रतः' इति 'विष्णौ विष्णुं जिने जैनम्' इत्युक्तम्, इदानीं तदपवादमाह—ये यस्यापीति ब्रह्मविष्ण्वोरिति च। यस्य देवस्य ये हितावहा हितकारका भवन्ति तेऽपि तदग्रतः स्थाप्या इत्यर्थः।

ब्रह्मेत्यादि। एकनाभिः सनाभिः सपिण्डस्तुल्यो वा, तादृशे जिने सम्मुखवर्त्तिनीत्यर्थः, दोषो न विद्यते, ब्रह्मणो विष्णोश्चाग्रे स्थापितो जिनो दोषाय न भवतीत्यर्थः। एवञ्च जिनस्याप्यग्रे ब्रह्मणि विष्णौ वा स्थापिते दोषो न भवतीति लभ्यते न्यायसाम्यात् ।

एते शिवाश्रये स्थाप्या दृष्टिवेधविवर्जिताः ।
दृष्टियातहितं यच्च पुराघं न प्ररोहति ॥२३॥

[ देवतास्थापने दिङ्निर्णयः ]

पूर्वापरास्यं देवानां मुखं नो दक्षिणोत्तरम् ।
ब्रह्मा विष्णुः शिवार्केन्द्रा गुहः पूर्वपराङ्मुखः ॥२४॥
नगराभिमुखाः श्रेष्ठा मध्ये बाह्ये च देवताः ।
शिवब्रह्मजिना विष्णुः सर्वाशाभिमुखाः शुभाः ॥२५॥
गणेशो भैरवश्चण्डी नकुलीशो ग्रहास्तथा ।
भूताद्या धनदाश्चैव दक्षिणास्याः शुभाः स्मृताः ॥२६॥
मातृणां सदनं कार्यं दक्षिणोत्तरदिङ्मुखम् ।
हनुमान् वानरश्रेष्ठो नैरृतास्यो विदिङ्मुखः ॥२७॥

---

२३। एत इति। दृष्टिवेधविवर्जिता इति ब्रह्मविष्णादीनां परस्परदृष्टिवेधेन हीनाः, शिवदृष्टिवेधेन वा। 'दृष्टियातहितं यच्च' इत्यत्र 'दृष्टिपातहिता यत्र' इति स्यात्। तथा सति यत्र देवा दृष्टिपातवशाद् हितास्तत्र स्थाने पुराघं नगरस्य पापम् अमङ्गलमित्यर्थः, न प्ररोहति न प्रोद्भवतीत्यर्थः।

२४। देवानां मुखं पूर्वापरास्यं पूर्वदिक्स्थं पश्चिमदिक्स्थं वा कुर्यादिति शेषः। दक्षिणोत्तरं दक्षिणोत्तरदिक्स्थं न कुर्यात्। अत्र पूर्वादिशब्दो दिश्ये लाक्षणिकः। ब्रह्मेति। एतच्च विशेषाभिधानं मतान्तर इति ज्ञेयम्। मत्स्यपुराणे पूर्वोत्तरमुखत्वस्योक्तत्वात्। तथा च—

वासुदेवादिप्रतिमालक्षणं प्रवदामि ते।
प्रासादस्योत्तरे पूर्वमुखीं वा चोत्तराननाम्॥ इति (अ० ४४, १ श्लो०)

यथा तथा वा भवतु सर्वथा विसंष्ठुलोऽयं श्लोकः। अस्य प्रकृतपाठोऽनुसन्धेयः।

२५। नगरेति। मध्ये वास्तुमध्ये, बाह्ये वास्तुबहिर्भागे च प्रतिष्ठाप्या देवता नगराभिमुखाः प्रशस्यन्ते। पूर्वापरास्यमिति यदुक्तं तत्र मतान्तरं दर्शयति—शिवेत्यादि। सर्वाशाभिमुखाः सर्वदिङ्मुखाः। अत्र पूर्वं पूर्वपराङ्मुखत्वकथनाद् ब्रह्मविष्णुशिवग्रहणं मतान्तरद्योतनार्थम्, जिनग्रहणन्तु न तथा, पूर्वमनुल्लेखेन कस्मिन्नपि मते तस्य सर्वाशाभिमुखत्वस्याप्राप्ते-र्विधित्वाव्याघातात्।

२७। मातृणामिति। एतेन मातरो दक्षिणदिङ्मुखा उत्तरदिङ्मुखा वा कार्या इति

ज्ञात्वा सर्वं स्थापि(ता?)येन रीत्या
देवा दैत्या मानुषाद्याश्च सर्वे ।
दृष्ट्वात्मानं व्यापकं सृष्टिकारं
स्थायी दृष्ट्वा विश्वकर्मांश(र्मा स?)वन्द्याः(वन्द्यः?) ॥२८॥

इति श्रीक्षेत्रात्मजसूत्रभृन्मण्डनविरचिते वास्तुशास्त्रे देवतामूर्त्तिप्रकरणे प्रतिमापद्स्थानदृष्टिस्थानाधिकारो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

फलितम् । हनुमान् इति । नैर्ऋतास्य इति मतान्तरेणोक्तम् । स्वमतमाह—विदिङ्मुख इति । न केवलं नैर्ऋतास्यः सर्वान्तरालदिगास्योऽपीत्यर्थः ।

२८ । दुष्करोऽस्य पाठोद्धारोऽर्थग्रहश्च ।

# चतुर्थोऽध्यायः

——:०:——

अक्षसूत्रं पुस्तकञ्च कमण्डलुवरान्वितः ।
विश्वकर्मा चतुर्हस्तस्त्रिनेत्रश्चन्द्रशेखरः ॥ १ ॥

इति विश्वकर्मा ।

ऋग्वेदादिप्रभेदोक्ता( देन ? ) कृतादियुगभेदतः ।
विप्रादिवर्णभेदेन चतुर्वक्त्रं चतुर्भुजम् ॥ २ ॥

अक्षसूत्रं करे दक्षे शुचिस्तस्या ( स्यो ? )र्ध्वतः स्थिता ।
स्याद् वामे पुस्तकं हस्ते तस्या(स्यो ?)र्ध्वं च कमण्डलुः ॥३

कमलासननामानं (माऽयं ? ) सर्ववर्णे हितप्रदः ।
कर्तृकारापकैः(?) सार्द्धं लोहितः कमलासनः ॥ ४ ॥

इति कमलासनः ।

---

१। अयमध्यायो ब्रह्मादीनां देवानामायुधवर्णवाहनादिनिर्णयार्थं प्रवृत्त इति ज्ञायते एतद्ग्रन्थकृत्कृत्यन्तराद् रूपमण्डनात् । तथा च—

ब्रह्मादीनाञ्च देवानां देवीनाञ्च यथाक्रमम् ।
आयुधानि तथा वर्णं वाहनं कथयाम्यथ ॥ (इति अ० २,९ श्लो०)

अस्य ग्रन्थस्य शिल्पशास्त्रत्वात् तत्कर्तृत्वेनाभ्यर्हितस्याऽऽदौ विश्वकर्मणो रूपं निर्दिशति—अक्ष-सूत्रमिति । अस्मदुपलब्धेषु शिल्पशास्त्रेषु ऋते रूपमण्डनमृते च प्रकृतग्रन्थं न विश्वकर्मणो रूपमुपनिबद्धमुपलब्धम् । रूपमण्डने पुनः किञ्चिद् विलक्षणमेव लक्षणमस्माद् ग्रन्थात् । तथा च—

विश्वकर्मा चतुर्बाहुरक्षमालाञ्च पुस्तकम् ।
कम्बां (कम्बुं ? ) कमण्डलुं धत्ते त्रिनेत्रो हंसवाहनः ॥ इति ।
(अ० २, १० श्लो०)

२-४ । एकस्यैव ब्रह्मणो नामभेदेन चत्वारि रूपाणि निरूपयिष्यन्नादौ कमलासनं वक्

तस्य चतुर्बाहुत्वे चतुर्मुखत्वे च हेतुप्रदर्शनपूर्वकं स्वरूपमाह—ऋग्वेदादीति। ऋगादयश्चत्वारो वेदाः कृतादयश्चत्वारि युगानि; ब्राह्मणादयश्चत्वारो वर्णाश्चेति यथासम्भवं तत्स्मर्तृत्वतत्कर्त्तृत्वादिरूपेण ब्रह्मणोऽपि चत्वारि मुखानि चत्वारो बाहवश्चेत्यर्थः। तत्र कृतं सत्ययुगम्; करे दक्षे इति दक्षाधःकरे, ऊर्द्ध्वत इति दक्षोर्द्ध्वतः, एवं वामेऽपि। द्वितीयकमलासनपदं विशेषणपरम्।

मत्स्यपुराणे—

ब्रह्मा कमण्डलुधरः कर्त्तव्यः स चतुर्मुखः।
हंसारूढः क्वचित् कार्यः क्वचिच्च कमलासनः॥
वर्णतः पद्मगर्भाभश्चतुर्बाहुः शुभेक्षणः।
कमण्डलुं वामकरे स्रुवं हस्ते तु दक्षिणे॥
वामे दण्डधरं तद्वत् स्रुवञ्चापि प्रदर्शयेत्।
मुनिभिर्देवगन्धर्वैः स्तूयमानं समन्ततः॥
कुर्वाणमिव लोकांस्त्रीन् शुक्लाम्बरधरं विभुम्।
मृगचर्मधरञ्चापि दिव्ययज्ञोपवीतिनम्॥
आज्यस्थालीं न्यसेत् पार्श्वे वेदांश्च चतुरः पुनः।
वामपार्श्वेऽस्य सावित्रीं दक्षिणे च सरस्वतीम्॥
अग्रे च ऋषयस्तद्वत् कार्याः पैतामहे पदे। इति।

(अ० २६०, ४०-४५ श्लो०)

समराङ्गणसूत्रधारे च—

ब्रह्मानलार्चिप्रतिमः कर्त्तव्यः सुमहाद्युतिः॥
स्थूलाङ्गः श्वेतपुष्पश्च श्वेतवेष्टनवेष्टितः।
कृष्णाजिनोत्तरीयश्च श्वेतवासाश्चतुर्मुखः॥
दण्डः कमण्डलुश्चास्य कर्त्तव्यो वामहस्तयोः।
अक्षसूत्रधरस्त(द्वा ? द्वद्) मौञ्ज्या मेखलया वृतः॥ इति।

(अ० ७७, २-४ श्लो०)

शिल्परत्नोत्तरभागेऽपि (अ० २५, १२३-१२७ श्लो०) प्रायेणैवमेव ब्रह्मणो लक्षणमुल्लिखितम्। परं प्रकृतग्रन्थ इव कुत्रापि ब्रह्मणश्चतुर्भेदभिन्नत्वं न दृश्यते। कमलासनः कस्मिन् युगे सुखदायक इति नोपलभ्यते। विरिञ्चिब्रह्माणौ कृते सुखदायकौ, पितामहस्त्रेतायाम्। तत्र पारिशेष्याद् भवतु कमलासनः कलौ वा द्वापरे वा, न तेनैकेन युगद्वयवर्तिनां जनानां सुखं शक्यसम्पादनमिति सुधीभिश्चिन्तनीयम्।

अक्षसूत्रं पुस्तकञ्च श्रुतिश्चैव कमण्डलुः ।
विरिञ्चि(ञ्चे ?)श्च भवेन्मूर्त्तिः कृते स्यात् सुखदायिनी ॥५॥

इति विरिञ्चिः ।

कमण्डलुश्चाक्षसूत्रं शुचिर्वै पुस्तकं तथा ।
पितामहस्य स्यान्मूर्त्तिस्त्रेतायां सुखदायिनी ॥ ६ ॥

इति पितामहः ।

पुस्तकं चाक्षसूत्रञ्च शुचिश्चैव कमण्डलुः ।
ब्रह्मणश्च भवेन्मूर्त्तिः कृते स्यात् सुखदायिनी ॥ ७ ॥

इति ब्रह्मा ।

अक्षसूत्रं पुस्तकञ्च धत्ते पद्मं कमण्डलुम् ।
चतुर्वक्त्रा तु सावित्री श्रोत्रियाणां गृहे स्थिता ॥ ८ ॥

इति सावित्री ।

ऋग्वेदः श्वेतवर्णः स्याद् द्विभुजो रासभाननः ।
अक्षमालाम्बुपात्रे च पि ( श्रि ?) तश्चाध्ययने रतः ॥ ९ ॥

इति ऋग्वेदः ।

अजास्य(ः ?) पीतवर्णः स्याद् यजुर्वेदोऽक्षसूत्रधृक् ।
वामे चाङ्कुशपाणिस्तु भूतिदो मङ्गलप्रदः ॥ १० ॥

इति यजुर्वेदः ।

---

५। विरिञ्चिमाह—अक्षसूत्रमिति। श्रुतिर्वेदः, इतरत्र लक्षणत्रये 'शुचि'रिति पाठो दृश्यते तत्रापि 'श्रुति'रिति भवेन्न वेति विचारणीयम्। शुचिरग्निः। कृते सत्ययुगे। इहान्यत्र च ब्रह्मणो लक्षणद्वये अक्षसूत्रादिप्रथमान्तपदानामन्वयो दुरुपपाद एव। दुःखञ्च—अक्षसूत्रादीना-मुद्देशपरतामात्रस्वीकारेण तत्तद्विशिष्टा मूर्त्तिरित्यध्याहारजन्यम्।

८। श्रोत्रियाणामिति—

'जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥'

इत्युक्तलक्षणानां वेदविदाम्।

९। अक्षमालेत्यादि। अक्षमालाम् अम्बुपात्रञ्च श्रित इत्यर्थः।

नीलोत्पलदलाभासः सामवेदो हयाननः ।
अक्षमालान्वितो दक्षे वामे कम्बुधरः स्मृतः ॥ ११ ॥

इति सामवेदः ।

अथर्वणाभिधो वेदो धवलो मर्कटाननः ।
अक्षसूत्रञ्च खट्वाङ्गं बिभ्राणो विजयश्रिये ॥ १२ ॥

इत्यथर्वणः ।

नृत्यशास्त्रं सितं रम्यं मृगवक्त्रं जटाधरम् ।
अक्षसूत्रं त्रिशूलञ्च बिभ्राणं तं (तत् ?) त्रिलोचनम् ॥१३॥

इति नृत्यशास्त्रम् ।

[ अथ ब्रह्मायतनेऽन्यदेवतापदम् ]

आग्नेय्यां तु गणं प्रोक्तं मातृस्थानञ्च दक्षिणे ।
नैर्ऋत्ये तु सहस्राक्षं वारुण्यां जलशायिनम् ॥ १४ ॥
वायव्ये पार्वतीरुद्रौ गृहा ( ग्रहा ? ) श्चैवोत्तरे स्मृताः ।
ईशाने च श्रिया देवी प्राच्यान्तु धरणीधरः ॥ १५ ॥

[ अथ ब्रह्मणोऽष्टौ प्रतीहाराः ]

ब्रह्मणे ( णोऽ ? )ष्टौ प्रतीहाराः कथयिष्याम्यनुक्रमात् ।
पुरुषाकारगम्भीराः सकूची ( र्चा ? ) मुकुटोज्ज्वलाः ॥ १६ ॥

---

१४-१५ । अत्र द्वितीयान्तानां पदानां कल्पयेदित्यध्याहृतक्रिययाऽन्वयः, गणं प्रोक्तमिति शास्त्रान्तरे कथितं गणदेवमित्यर्थः । श्रिया देवीत्यभेदे तृतीया श्रीदेवीत्यर्थः ।

१६ । पूर्वं ब्रह्मणश्चतुरो भेदान् दर्शयन्नपि साम्प्रतं ब्रह्मत्वेनैक्यं परिकल्पयन् अष्टौ प्रतीहारानाह—ब्रह्मण इति । तत्राऽऽदौ सर्वसाधारणं विशेषणत्रयमाह—पुरुषेत्यादि । सकूर्चा इति । कूर्चशब्दो नानार्थः । तत्र श्मश्रु इत्येकोऽर्थः, नासङ्गतानि हि प्रवयसः पितामहस्य प्रतीहाराणाम् अतिलम्बीनि श्मश्रूणि । कुशमुष्टिरिति द्वितीयः, तत्स्वरूपञ्च—

छिन्नमूलाः कुशा दीर्घाः सप्तविंशतिसंख्यकाः ।
ब्रह्मग्रन्थियुतास्त्वग्रदेशे कूर्चमिहोच्यते ॥

पद्मं स्रु (स्रु ?)चाऽक्षरं डंश (दंशं ?) सत्तनामा तु वामतः ।
सव्यापसव्ययोगेन कमण्डलुश्च ( श्च ? ) धर्मकः ॥ १७ ॥
अक्षपद्मवामदण्डकमलश्च (श्च ?) महतोद्भवः (मतोद्भवः ?) ।
दण्डागमस्रुवाक्कालं (स्रुचा कालं ?) जयश्च सर्वकामदः ॥१८॥

---

इत्युक्तलक्षणम् । नायुक्तञ्च वेदस्मर्तुर्वैदिकधुरीणस्य द्रुहिणस्य प्रतीहाराणामपि वेदोक्तकर्म-निर्वाहसाहाय्यकार्थं कुशमुष्टिधारणम् । तूलिकेति तृतीयोऽर्थः । सा च वृषश्रवणरोमभिर्वा खरकेशैर्वा तन्तुभिर्वा घटिता उदुम्बराङ्कुराकारा वटाङ्कुराकारा प्लक्षसूचीनिभा वेति शिल्प-शास्त्रादवगम्यते । तथा च समराङ्गणसूत्रधारे—अ० ७३ । १५-१६, १८-१९ श्लो० ।

'कूर्चकं धारयेद्धीमान् वृषश्रवणरोमभिः ॥'
'वल्कलैर्वा विधातव्यः खरकेशैरथापि वा ॥'
'तन्तुतः कूर्चकः श्रेष्ठो विलेखाकर्मणि स्वतः ।'
'आद्यो वटाङ्कुराकारस्ततोऽश्वत्थाङ्कुराकृतिः ॥' ( संशोधितः पाठः )
'प्लक्षसूचीनिभश्चान्यः * * * * ।'
उदुम्बराङ्कुराकारः * * * * * ॥'

इति कूर्चविषयं वर्णनमुपलभ्यते । नानुचितञ्च विश्वसृजः प्रतीहाराणाम् अङ्कनोपयोगिन्या-स्तूलिकाया ग्रहणम्, प्रभोः प्रतीहाराद्यनुजीविनामपि प्रभुसम्मतवेशभूषादीनां लोकतः शास्त्रतश्चानु-शीलयितव्यत्वात् । एतेऽर्था दिग्दर्शनार्थमस्माभिरुपक्षिप्ताः, अन्यतरार्थग्रहणपरिहारयोस्तु सुधियः प्रमाणम् । इदमत्रावधेयम्—यदि नाम कूर्चं धार्यवस्तुविशेषः स्यात्तदा परतः प्रोक्तैः प्रहरणादिभि-र्व्याप्तबाहुभिरेतैः क्व नाम तद् धार्यमिति श्मश्र्वर्थक एव कूर्चशब्दोऽत्र श्लिष्टः स्यात् ।

१७ । एवं तेषां साधारणीमाकृतिमभिधाय इदानीं तेषां प्रातिस्विकं लक्षणमाह—पद्ममित्यादि । त एते सर्व एव चतुर्हस्ता सव्यापसव्ययोरूर्ध्वाधःक्रमेण यथोक्तप्रहरणादिधारिणो ब्रह्मणः सव्येऽपसव्ये च चतुश्चतुःक्रमेणावस्थिताः । तत्र वामे प्रथमतः सत्तनामा वामदक्षिणयो-र्हस्तयोः पद्मम्, स्रुवाम्, अक्षरम्, वेदम्, दंशम् दधान इति शेषः । एवं सर्वत्र द्वितीयान्तानां दधान इति क्रिययाऽन्वयः । तत्र स्रुवा स्रुक्, दंशोऽस्त्रविशेषः । द्वितीयमाह—कमण्डलुञ्च धर्मक इति, कमण्डलुञ्च दधानो धर्मकनामा द्वितीय इत्यर्थः । अत्र कमण्डलुरिति पूर्वोक्तचतुष्टया-तिरिक्तत्वेन वा एकहान्यपरकल्पनविधया वा निर्दिष्टमिति न ज्ञायते ।

१८ । 'अक्षपद्मवामदण्डकमलश्चे'त्यस्य प्रकृतः पाठोऽनुसन्धेयः । पद्मं कमलञ्चेत्येकस्यैव

अक्षसूत्रं गदाखेटं दण्डश्च विजयो भवेत् ( दधत् ? )।
अधोहस्तापसव्येन खड्‌गयुग् यज्ञभद्रकः ॥ १९ ॥
अक्षपाशाङ्कुशा(शान् ?)दण्डभयश्च (दण्डं भवश्च ?) सर्वकामदः ।
दण्डाङ्कुशपाशोत्पलनिभवः (पलं विभवः ?) सर्वशान्तिदः ॥२०॥

[ अथ द्वादश सूर्यमूर्त्तयः ]

श्रृणु वत्स प्रवक्ष्यामि सूर्यभेदांश्च ते जय ।
यावत्प्रकाशकः सूर्यो यावन्मूर्त्तिभिरीरितः ॥ २१ ॥

---

वस्तुनो द्विरुल्लेखः समुपलभ्यते । 'वाम' इति पदमप्यनन्वयि । अत्र 'प्रियोद्भव' इति पाठो रूपमण्डने ( रूप—अ० २,१९ श्लो० )।

२० । तदेवं वामतश्चत्वारः सत्य-धर्मक-मतोद्भव-जयनामानो ब्रह्मणः प्रतीहाराः, दक्षिणतश्चत्वारो विजय-यज्ञभद्रक-भव-विभवनामानश्च निर्दिष्टाः ।

२१ । इदानीं द्वादश सूर्यमूर्त्तीराह—श्रृण्विति । जय इति वत्सेत्यनेनोद्दिष्टस्य सम्बोध्यस्य नाम । यद्वा जय सर्वोत्कर्षेण वर्त्तस्वेत्यर्थः । ते प्रवक्ष्यामीत्यन्वयः ।

यावदिति समस्तवस्तुप्रकाशक इत्यर्थः । यावन्मूर्त्तिभिरीरितः कथितस्तावतीर्मूर्त्तीश्च प्रवक्ष्यामीत्यर्थः । सर्वा एवैता मूर्त्तयश्चतुर्बाहव इति ज्ञायते धार्यद्रव्याणामाधिक्यदर्शनात्; तथा—

'पद्मद्वयाभयवरान् दधतं कराब्जैः' इत्यन्यत्र 'कराब्जैरि'त्यनेन दोष्णां द्व्यधिकत्वलाभाच्च । अत्र पूष्णो मूर्त्तिर्द्विभुजा केवलपद्मद्वयलाञ्छिता च, वैष्णवी मूर्त्तिरपि द्विकरा, परं तस्या दक्षिणकरे चक्रमितरत्र पद्ममिति विशेषः । तदितरत्र सर्वासामेव मूर्त्तीनां करद्वये नीरजद्वयमन्ययोश्च यथोक्तद्रव्याणीति । अग्निपुराणेऽपि—

'वरदा द्वाञ्जिनः सर्वे दिक्पालास्त्रकराः क्रमात् ।' ( अ० ५१,३ श्लो० ) इति ।

सप्तसाश्वे सैकचक्रे रथे सूर्यो द्विपद्मधृक् ।
मसीभाजनलेखन्यौ बिभ्रत् * * * ॥ ( अ० ५१,१ श्लो० )।

इत्यनेन च तन्मूर्त्तीनां चतुर्बाहुत्वस्य सूचितत्वात् । एतेन काश्यपशिल्पे—

द्विभुजाः पद्महस्ताश्च रक्तपद्मासने स्थिताः ।
रक्तमण्डलसंयुक्ताः करण्डमुकुटान्विताः ॥ ( अ० ४८,७९-८० श्लो० )

इति यद् द्विकरत्वं भास्करमूर्त्तीनामुक्तं तन्मतान्तरप्रदर्शनमिति कृत्वा सोढव्यम् ।

दक्षिणे पौष्करा(री ?) माला करे वामे कमण्डलुः ।
पद्माभ्यां शोभितकरौ(रा ?) सुधामा(ता ?) प्रथमा स्मृता ॥२२

शूली(लं ?) वामकरे यस्य(स्या ?) दक्षिणे सोम एव च ।
मित्रा नाम त्रिनयना कुशेशयविभूषिता ॥ २३ ॥

प्रथमे तु करे चक्रं तथा वामे च कौमुदी ।
मूर्त्तिरार्यमणी ज्ञेया सपद्मौ पाणिवल्लभौ (पल्लवौ ?) ॥२४॥

अक्षमाला करे चास्य ( यस्या ? ) वज्रं वामे प्रतिष्ठितम् ।
सा मूर्त्ती रौद्री ज्ञातव्या प्रधाना पद्मभूषिता ॥ २५ ॥

चक्रं तु दक्षिणे यस्या वामे पाशः सुशोभनः ।
सा वारुणी भवेन्मूर्त्तिः पद्मव्यग्रकरद्वया ॥ २६ ॥

कमण्डलुं द(लुर्द ?)क्षिणतोऽक्षमाला चैव वामतः ।
सा भवेत् सस्मिता सूर्यमूर्त्तिः पद्मविभूषिता ॥ २७ ॥

यस्यास्तु दक्षिणे शूलं वामहस्ते सुदर्शनम् ।
भर्ग (ग ?) मूर्त्तिः समाख्याता पद्महस्ता शुभाय वै ॥ २८ ॥

---

२२ । उपरिष्टाच्चतुस्त्रिंशश्लोके समुद्दिष्टानां भास्करमूर्त्तीनामनुक्रमेण लक्षणानि वक्तुं प्रथमामाह—दक्षिण इति । यस्या इत्यध्याहारः । यस्या दक्षिणे करे पौष्करी कमलघटिता माला, वामे करे कमण्डलुर्वर्त्तत इत्यर्थः । इमौ च करावूर्द्ध्वाविति ज्ञेयम्, ऊर्द्ध्वक्रमेणैव धारणीयद्रव्याणां कथनौचित्यात् । पद्माभ्यां शोभितकराविति वामदक्षिणयोरधःकरावित्यर्थः । एवमुत्तरत्रापि ज्ञेयम् । 'पद्माभ्यां शोभितकरे'त्युचितः पाठः ।

सुधातेति । अत्र 'सुधाते'ति वा 'सुधामे'ति वा पाठो भवतु, उभयथाऽपि दोषानुषङ्गो दुष्परिहर एव, उद्देशश्लोके 'धाते'ति पाठस्योपलब्धेः । अत्र ब्रूमः—'सुधाते'त्येव पाठो ज्यायान् परिगणनश्लोकस्थितधातृशब्दसाम्यात् ; छन्दोभङ्गदोषोत्सारणाय चोपपदं प्रक्षिप्तमिति ; तदेतत् सुलभमेव प्राचीनग्रन्थकृतां कृतिष्विति ।

२३ । दक्षिणे सोम इति, सोमः सोमरसोऽमृतं वा ।

अथ वामकरे माला त्रिशूलं दक्षिणे करे ।
सा विश्वमूर्त्तिः सुखदा पद्मलाञ्छनलक्षिता ॥ २९ ॥
पूषाख्यस्य रवेर्मूर्त्तिर्द्विभुजा पद्मलाञ्छना ।
सर्वपापहरा ज्ञेया सर्वलक्षणलक्षिता ॥ ३० ॥
दक्षिणे तु गदा यस्या वामहस्ते सुदर्शनम् ।
पद्मव्यग्रा तु सावित्रीमूर्त्तिः सर्वार्थसाधिनी ॥ ३१ ॥
स्रुवश्च दक्षिणे हस्ते वामे होमज (लीलकम् ? कज्जलम्) ।
मूर्त्तिस्त्वाष्ट्री भवेद् वत्स पद्मरुद्धकरद्वया ॥ ३२ ॥
सुदर्शना(न ?) करा सव्ये पद्महस्ता तु वामतः ।
एषा सा द्वादशी मूर्त्तिर्विष्णोरमिततेजसः ॥ ३३ ॥
धाता मित्रोऽर्यमा रुद्रो वरुणः सूर्य एव च ।
भगो विवस्वान् पूषा च सविता त्वष्टृविष्णुकौ ॥ ३४ ॥

इति द्वादश सूर्यमूर्त्तयः ।

---

२९ । सा विश्वमूर्त्तिरिति, वैवस्वती मूर्त्तिरित्यर्थः ; उद्देशश्लोके तथा पाठात् ।

३४ । उक्तलक्षणानां द्वादशमूर्त्तीनां संग्रहश्लोकमाह—धातेति । दूरविभिन्नान्येव सूर-नामान्युपलभ्यन्ते काश्यपशिल्पे । तथा च—

विकर्त्तनो विवस्वांश्च मार्त्तण्डो भास्करो रविः ।
लोकपालः प्रकाशश्च लोकसाक्षी त्रिविक्रमः ॥
आदित्यश्च तथा सूर्यः अंशुमाली दिवाकरः ।
एते वै द्वादशाऽऽदित्या उत्तरादिक्रमात् स्थिताः ॥ इति ।
(अ० ४८,८१-८३ श्लो०)

आग्नेयपुराणे पुनः—

वरुणः सूर्यनामा च सहस्रांशुस्तथाऽपरः ।
धाता तपनसंज्ञश्च सविताऽथ गभस्तिकः ॥
रविश्चैवाथ पर्जन्यस्त्वष्टा मित्रोऽथ विष्णुकः ।
मेषादिराशिसंस्थाश्च मार्गादिकार्त्तिकान्तकाः ॥ (अ० ५१,५-६ श्लो०)

[ अथ सूर्यायतनम् ]

सूर्यो विनायको विष्णुश्चण्डी शम्भुस्तथैव च ।
अनुक्रमेण पूज्यन्ते फलदाः स्युः सदाऽर्चने ॥ ३५ ॥
आग्नेय(ये ?) तु कुजः स्थाप्यो गुरुर्याम्ये प्रतिष्ठितः ।
नैर्ऋत्ये राहुसंस्थानं शुक्रस्थानञ्च पश्चिमे ॥ ३६ ॥
वायव्ये केतुसंस्थानं सौम्यायां बुध एव च ।
ईशाने च शनिः स्थाप्यः × ×श्च चन्द्रमाः ॥ ३७ ॥

इति सूर्यायतनम् ।

---

इति धातृ-सवितृ-त्वष्टृ-वरुण-सूर्य-मित्र-विष्णूनां सप्तानां साम्येन, भग-तपन-गभस्तिक-रवि-पर्जन्यानां पञ्चानाञ्च भिन्नतया नामान्युपलभ्यन्ते ।

३५ । सूर्यस्यायतने वक्तव्ये प्रसङ्गात्तदर्चनायाः सर्वदेवार्चनमुखत्वं वक्तुं समभिव्याहृतानामन्येषामपि तथात्वमाह—सूर्य इति । अनुक्रमेण पूज्यन्ते चेद् एते अर्चने सर्वदेवपूजाविधौ फलदाः स्युः, सर्वदेवपूजास्वेवाऽऽदावेते पूजनीया इत्यर्थः । तथा च स्मृतिः—

गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम् ।
पूजयेद्देवषट्कञ्च ततः पूजां समाचरेत् ॥ इति ।

अत्र च वह्निं निह्नुवानेन ग्रन्थकृता अपक्रमन्न क्रमोऽपि नारक्षीति विभावनीयम् । यच्च तन्त्रान्तरे—

आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम् ।
नारायणं विशुद्धाख्यमन्ते च कुलदेवताः ॥

इति प्रकृतश्लोकवदेव पञ्चदेवार्चनं विहितम्, तत्राप्यस्ति क्रमविपर्यय इति नवीनोऽयं पूजापर्यायः ।

३६-३७ । आयतने ग्रहसंस्थानमाह—आग्नेय इति । कुज-गुरु-राहु-शुक्र-केतु-बुध-शनि-चन्द्राः क्रमेणाऽऽग्नेयत ऐन्द्रीं यावत् स्थाप्या इत्यर्थः । तथा च रूपमण्डने—

सूर्यस्याऽऽयतने स्थाप्या वह्निकोणादितः क्रमात् ।
कुजो जीवस्तमः शुक्रः केतवो ज्ञः शनिः शशी ॥ ( अ० २,२९ श्लो० )

इति । तमो राहुः, ज्ञो बुधः । एवञ्च—'ईशाने च शनिः स्थाप्यः' इत्यनन्तरं स्खलनस्थाने—'प्राच्यां स्थाप्य' इत्यक्षरचतुष्टयं त्रुटितं स्यादित्यनुमीयते ।

[ अथ सूर्यप्रतीहाराः ]

सूर्यैकदन्ताच्युतशक्तिरुद्रा विघ्नेशशक्तीश्वरविष्णुसूर्याः ।
श्रीनाथविघ्नेशभगाम्बिकेश(ाः?) चण्डीशहेरम्बपतङ्गकृष्णा(ः?) ॥३८
श्रीकण्ठसूर्या रुद्रस्थाम्बिकाज(?) लदक्षिणमध्यादिदिक्षु पूज्याः ।
स्वस्थानगाः सर्वमनोरथांस्ते यान्ति विघ्नातिपरसंस्थाः(?) ॥ ३९ ॥
दण्डी च पिङ्गलश्चैव आनन्दश्चान्तकस्तथा ।
चित्रो विचित्रो ज्ञातव्यः किरणाक्षः सुलोचनः ॥ ४० ॥
सर्वे च पुरुषाकाराः कर्त्तव्याः शान्तिमिच्छता ।
चतुर्द्वारेषु च स्थाप्या दिशाश्चैव प्रदक्षिणे ॥ ४१ ॥

---

सुज्ञानार्थमधः सूर्यायतनं चित्रारूढमुपस्थाप्यते—

| | | |
|---|---|---|
| ऐशान्यां शनैश्चरः | पू० चन्द्रः दण्डी, पिङ्गलः | आग्नेय्यां कुजः |
| उ० बुधः किरणाक्षः, सुलोचनः | सूर्यः | द० गुरुः आनन्दः, अन्तकः |
| वायव्यां केतुः | प० शुक्रः चित्रः, विचित्रः | नैर्ऋत्यां राहुः |

३८-३९ । पञ्चपादीयं पञ्चानां सूर्यैकदन्ताच्युतशक्तिरुद्राणां क्रमादेकैकप्राथम्येन निर्देशमनुभवितुं प्रवृत्ता क्रमोत्क्रमाभ्यां सर्वत्रैकमेवार्थं प्रतिपादयतीति दृश्यते । किमत्र तात्पर्यमिति प्रश्ने—य इमे देवमुख्यास्तेषामायतनेषु त एव विभक्तविभागेनावस्थिताः फलदायकाः स्युः, तत्रापि यस्यायतनं तस्य प्राङ्निर्देशार्थमयमुद्यम इत्येवास्माकं प्रतिवचनविभवः ।

श्रीकण्ठेत्यादिश्लोकस्य तु दुष्करः पाठोद्धारः । प्रथमे पादे एवं ह्यर्थः सुस्थितः स्यात्—
'श्रीकण्ठसूर्येभमुखाम्बिकाजाः' इति । चतुर्थपादन्तु दुरूहमेव ।

४०-४१ । दण्ड्यादयोऽष्टौ द्वारदेवताः पूर्वादिद्वारक्रमेण द्विशः संस्थाप्याः । एवञ्च 'दिशाश्चैव प्रदक्षिणे' इत्यत्र 'द्विशश्चैव प्रदक्षिणात्' इति पाठः सुकल्पः । तथा चैते प्रादक्षिण्येन द्वौ द्वौ कृत्वा

प्रतर्जन्यूर्ध्वकिरणं ताम्रचूडं दण्डायुधम् ।
दण्डो वामविभागे तु पिङ्गलः स्यादतः शृणु ॥ ४२ ॥
(किरणस्थाने ? किरणे तु) यदा शक्तिः किरणं ताम्रचूडके ।
तर्जनीदण्डपूर्वञ्च पिङ्गलः पूर्वदक्षिणे ॥ ४३ ॥
तर्जनी द्वौ वक्त्रानां (?) दण्डेनानन्दकः स्मृतः ।
तर्जनीदण्डापसव्यं सव्यवेदान्तकाशुभाः ॥ ४४ ॥
तर्जना द्वौपमनी दण्डं दण्डान्ते चित्रका भवेत् ।
तर्जनीदण्डापसव्यं स भवेतद्विचित्रकः ॥ ४५ ॥
तर्जनी द्वौ किरणं (?) दण्डान्तकिरणोद्भवे ।
तर्जनीदण्डापसव्ये कर्त्तव्यः स सुलोचनः ॥ ४६ ॥

[ चन्द्रः ]

चन्द्रश्चित्रे विधातव्यः श्वेतः श्वेताम्बरावृतः ।
दशश्वेताश्वसंयुक्त आरूढः स्यन्दने शुभः ॥ ४७ ॥
द्विभुजो दक्षिणे पाणौ गदां बिभ्रद् यथादरम् ।
वामस्तु वरदो हस्त इति चन्द्रो निरूप्यते ॥ ४८ ॥

[ भौमः ]

धरापुत्रस्य वक्ष्यामि लक्षणं चित्रकर्मणि ।
चतुर्भुजो मेषगमश्चाङ्गारसदृशद्युतिः ॥ ४९ ॥

---

चतुर्द्वारेषु संस्थाप्या इत्यर्थः । 'चतुर्द्वारेषु संस्थाप्या दिशश्चैते प्रदक्षिणम्' इति रूपमण्डने ( अ० २, श्लो० ३० ) पाठः ।

४२-४६ । पञ्चश्लोक्या तेषां दण्ड्यादीनामायुधानि पूर्वोद्दिष्टायाः प्रादक्षिण्येन स्थितेः प्रकारञ्चाऽऽह—प्रतर्जन्यूर्द्ध्व किरणमिति । पाठवैकल्यादकल्पेनाप्यस्य यथायथमर्थाविष्कारे नेदं दुष्परिष्कार्यं यत् प्रतर्जन्यादीनि अवयवस्वरूपेण वा आयुधस्वरूपेण वा दण्ड्यादीन् प्रतीहारान् विशिंषन्तीति । तत्र पूर्वद्वारे दण्डिनो दक्षिणे पिङ्गलकः, दक्षिणद्वारे आनन्दस्य दक्षिणे चण्डकः, पश्चिमद्वारे चित्रस्य दक्षिणे विचित्रः, उत्तरे किरणाक्षस्य दक्षिणे सुलोचन इति पूर्वोक्तप्रदक्षिण-पदार्थः । रूपमण्डनीयपाठस्त्वेतस्माद्विशिष्यते ( रूप० २ अ० २६-३० श्लो० ) ।

४९-५० । अङ्गारसदृशद्युतिरिति ज्वलदङ्गारगौरवपुरित्यर्थः, तन्त्रान्तरेऽस्य लोहितवर्णत्व-

दक्षिणं बुध्नगं हस्तं वरदं परिकल्पयेत् ।
ऊर्द्ध्वं शक्तिसमायुक्तं वामौ शूलगदाधरौ ॥ ५० ॥

[ बुधः ]

सिंहारूढं बुधं वक्ष्ये कर्णिकारसमप्रभम् ।
पीतमाल्याम्बरधरं स्वर्णभूषाविभूषितम् ॥ ५१ ॥
वरदं खड्गसंयुक्तं खेटकेन समन्वितम् ।
गदया च समायुक्तं बिभ्राणं दोश्चतुष्टयम् ॥ ५२ ॥

[ बृहस्पति-शुक्रौ ]

पीतो देवगुरुर्लेख्यः शुभ्रश्च भृगुनन्दनः ।
चतुर्भिर्बाहुभिर्युक्तश्चित्रकर्मविशारदैः ॥ ५३ ॥
वरदौ साक्षसूत्रौ च कमण्डलुधरौ तथा ।
दण्डिनौ च तथा बाहू बिभ्राणौ परिकल्पयेत् ॥ ५४ ॥

[ शनिः ]

शौरितिलसम्यमासं (शौरिं तिलसमाभासं ?) गृध्रारूढं चतुर्भुजम् ।
वरदं बाणसंयुक्तं चापशूलधरं लिखेत् ॥ ५५ ॥

---

स्योक्तत्वात् । बुध्नगमिति, बुध्नो वृक्षमूलम् । हस्तमिति अधोहस्तम् । यद्वा बुध्नपदेनात्र लक्षणयाऽधोदेशो ग्राह्यः, दक्षिणाधोहस्तं वरदं परिकल्पयेदित्यर्थः । 'पुस्तकं हस्तम्' इति शिल्परत्ने, 'बुद्धकं' इति 'तद्धरं' इति तत्पादटिप्पण्यां पाठान्तराणि दृश्यन्ते । (शिल्प० उ० २९।१४४ श्लो०)। अयं शक्तिवराभयगदाधारीति शब्दकल्पद्रुमधृतग्रहयागतत्त्वलघुजातकादयः ।

९३-९४ । तुल्यबाहुत्वात्तुल्यप्रहरणत्वाच्च बृहस्पतिशुक्रौ तन्त्रेणाऽऽह—पीत इत्यादि । वरदावित्यादि द्विवचनन्तूभयापेक्षया, एवं 'बाहू' इत्यत्रापि । परमार्थतस्त्वनयोः प्रत्येकं चत्वारो बाहवश्चत्वारि चाऽऽयुधानीति ज्ञातव्यम् । एवञ्च वरोऽक्षसूत्रं कमण्डलुर्दण्डश्चेति बृहस्पतेस्तान्येव च दैत्यगुरोरप्यायुधानीति ।

[ राहुः ]

सिंहासनगतं राहुं करालवदनं लिखेत् ।
वरदं खड्गसंयुक्तं खेटशूलधरं लिखेत् ॥ ५६ ॥

[ केतवः ]

धूम्रा द्विबाहवः सर्वे वरदाश्च गदाधराः ।
गृध्रपृष्ठसमारूढा लेखनीयास्तु केतवः ॥ ५७ ॥

[ ग्रहमूर्तौ साधारणविधिः ]

(गृ?ग्र)हाः किरीटिनः कुर्यान् (कार्या?) नवतालप्रमाणकाः ।
रत्नकुण्डलकेयूरहाराभरणभूषिताः ॥ ५८ ॥

इति नवग्रहाः ।

---

[ इन्द्रः ]

वरदं वज्राङ्कुशश्च कमण्डलुविधृत्करम् ।
गजारूढं सहस्राक्षमिन्द्रं पूर्वदिशि स्थितम् ॥ ५९ ॥

[ अग्निः ]

वरदं शक्तिहस्तश्च मृणालश्च कमण्डलुम् ।
ज्वालापुञ्जनिभं रूपं ( देवं ? ) मेषारूढं हुताशनम् ॥ ६० ॥

---

५८ । अत्र 'गृध्राः' इति शिल्परत्ने ( शिल्प० उ० २५।१५७ श्लो० ) पाठः । यद्यप्यत्र एकाक्षरविपरिणामलभ्या पाठशुद्धिः 'गृध्रा' 'ग्रहा'श्चेत्युभयमेव युगपद् बुद्धावाविर्भावयति, तथाऽपि प्रकरणाद् 'ग्रहा' इत्येव पाठः समीचीनतयाऽस्माभिर्निर्धारितः । किञ्च यद्यत्र 'गृध्रा' इति पाठः स्यात्तदा 'नवतालप्रमाणकाः' इत्यनुपपन्नं भवेत्, 'द्वाभ्यां प्रोक्ता विहङ्गमाः' ( २अ० ४श्लो० ) इत्यनेन विहङ्गविशेषस्य गृध्रस्य द्वितालकत्वस्यैव युक्तत्वात् ।

५९ । वज्राङ्कुशमित्यस्त्यर्थेऽत् । एवम्भूतम् इन्द्रं चित्रविशारदाश्चित्रे कुर्युरित्यध्याहारेण द्वितीयान्तपदानामन्वयः । प्रथमार्थे द्वितीया वा, लेखकप्रमादाद् बिन्द्वोरेकस्त्रुटितो वेति ज्ञातव्यम् ।

६० । वरदमित्यादि । मृणालञ्च कमण्डलुमिति दधानमिति शेषः, चित्रे कुर्युरित्येव । एवमुत्तरत्रापि यथासम्भवं दधानम्, दधानो वा, कुर्युः क्रियेत वेत्याद्यध्याहारेण वाक्यानामन्वयोपपत्तिर्द्रष्टव्या ।

वरदः शक्तिहस्तश्च समृणालकमण्डलुः ।
ज्वालापुञ्जनिभो देवो मेषारूढो हुताशनः ॥ इति रूपमण्डने (२अ० ३१श्लो०) ।

[ यमः ]

लेखनीं पुस्तकं हस्ते कुक्कुटं दण्डमेव च ।
महामहिषमारूढः कृष्णाङ्गश्च यमो भवेत् ॥ ६१ ॥

[ निर्ऋतिः ]

खड्गखेटकहस्तश्च कतिका(कर्त्तृका?)वैरिमस्तकम् ।
दंष्ट्राकरालास्यं कुर्याच्च श्वानरूपश्च (श्वानारूढश्च?) नैर्ऋतम् ॥६२॥

[ वरुणः ]

वरदं पाशपद्मश्च कमण्डलुन्तथा करे ।
मकरा(नक्रा?)रूढश्च कर्त्तव्यं वरुणं पश्चिमादिशि ॥ ६३ ॥

[ वायुः ]

वरं ध्वजपताकश्च कमण्डलुन्तथा करे ।
मृगारूढं प्रकर्त्तव्यं वायुदेवं (तलो ? मरुद्)दिशि ॥ ६४ ॥

[ कुबेरः ]

गदा-निधि-बीजपूरं कमण्डलुं करे तथा ।
गजारूढं प्रकर्त्तव्यं सौम्यायां धनदं दिशि ॥ ६५ ॥

---

६२ । श्वानारूढमिति श्वारूढमित्यर्थः, अदन्तः श्वानशब्दोऽपि कुकुरार्थकः । अयं खरारूढ इति कालिकापुराणम् ( अ० ७९, ६१ श्लो० ) । 'दंष्ट्राकरालवदनः श्वानारूढश्च राक्षसः' ( रूप० २ अ० ) इति रूपमण्डने पाठः । 'शवारूढम्' इति काश्यपशिल्पे ( ४८।४७ ) पाठः । एवञ्च यद्यपि यथाकामं 'खरारूढ' 'शवारूढ'योरन्यतमः पाठः शुद्धत्वेनोपादातुं शक्यते तथाऽपि साम्य-बाहुल्याद् रूपमण्डनपाठसाम्याच्च बन्धनीमध्यस्थपाठ एव शुद्धत्वेन निर्णीतः ।

६३ । 'नक्रारूढः स कर्त्तव्यो वरुणः पश्चिमाश्रितः' ( रूप० २ अ० ) इति रूपमण्डने पाठः । यद्यपि यादस्त्वाविशेषेण मकरो नक्रश्चेत्युभावेव वरुणस्य वाहनीभावे स्वरूपयोग्यौ तथाऽपि छन्दोऽनुकूलत्वेनान्यत्रोपलब्धेश्च नक्र इत्येव पाठः शुद्धत्वेन कल्पितः । वरुणो हंसारूढ इति जलाशयतत्त्वधृतहयशीर्षपञ्चरात्रम् ।

६४ । यद्यपि 'तलो' इत्यत्र 'मरुद्' इति पाठकल्पनम् एकान्ततः कल्पनैव, तथाऽप्यर्थ-वैधुर्यादनन्यगत्या तथा पाठः कल्पितः । निपुणैः शब्दसाम्यमनुबध्य पाठान्तरमनुसन्धातव्यम् ।

[ ईशानः ]

वरश्चैव त्रिशूलश्च नागेन्द्रं बीजपूरकम् ।
वृषारूढं प्रकर्त्तव्यमीशानं (मित्र ? मन्त्रि)कोणके ॥ ६६ ॥

इति दश दिक्पालाः ।

---

यस्माद् ब्रह्मा वेदविद्याः समस्ता
आदित्याद्याः खेचरा धिष्ण्यचक्रम् ।
दिक्पालाद्यं व्यक्तरूपञ्च जातं
(वन्द्ये?न्द्यो) विष्णुर्विश्वसृक् पाल(कस्यः ? कोऽसौ) ॥६७॥

इति दोत्रा(ध्व?त्म)जसूत्रभृन्मण्डनविरचिते वास्तुशास्त्रे देवतामूर्त्तिप्रकरणे रूपावतारे ब्रह्म-सूर्य-नवग्रह-दशदिक्पालाधिकार-श्चतुर्थोऽध्यायः ॥ ४ ॥

---

६६ । मन्त्रिकोणके इति देवमन्त्रिणो बृहस्पतेः कोणे ईशानदिशीत्यर्थः ।

६७ । यस्माद् ब्रह्मादिव्यक्तरूपान्तं जगज्जातम् असौ विश्वसृक् पालकश्च विष्णुर्वन्द्य इत्यन्वयः । खेचरा ग्रहाः, धिष्ण्यचक्रं नक्षत्रमण्डलम्, व्यक्तरूपं भूतलम् ।

# पञ्चमोऽध्यायः

[ वर्णविशेषेषु मूर्त्तिभेदेन विष्णोः शुभदायकत्वम् ]

नारायणः केशवश्च माधवो मधुसूदनः ।
स्थापिता मूर्त्तयो (ह्येते ? ह्येता ?) विप्राणां सुखदाः सदा ॥१॥
मधुसूदनविष्णुश्च (खाड ? खड्ग)शूलधरं लिखेत् ।
क्षत्रियाणां फलप्रदौ वैश्यानामर्चने शुभौ ॥ २ ॥
पूजिता (श्री?श्रै)धरी मूर्त्तिः शूद्राणाञ्च सुखप्रदा ।
चर्मकृद्रजकानाञ्च नटस्य वरटस्य च ॥ ३ ॥
मेदभिल्लकिरातानां हृषीकेशः सुखावहः ।
कुम्भकारबणिग्वैश्यचाक्रिकाणां ध्वजस्य च ॥ ४ ॥
सर्वासां प्रकृतीनाञ्च पद्मनाभः सुखप्रदः ।
दामोदरः सौख्यकरो ब्रह्मचार्येकदण्डिनोः ॥ ५ ॥
हरिं हिरण्यगर्भञ्च नारसिंहमतः परम् ।
वामनञ्च वराहञ्च सर्ववर्णेषु सौख्यदम् ॥ ६ ॥

---

२। एतेन मधुसूदनो विष्णुश्चाविशेषेण क्षत्रियाणां वैश्यानाञ्च शुभदावित्यायाति। रूपमण्डने पुनरन्यथैव दृश्यते। तथाच—

मधुसूदनविष्णू च क्षत्रियाणां फलप्रदौ ।
त्रिविक्रमो वामनश्च वैश्याना(मर्चयेच्छुभा ? मर्चने शुभौ) ॥ (अ० ३)

इति। एष एव च पाठो युक्त इति प्रतिभाति।

३। शूद्राणाञ्चेति चकाराद् ब्रह्मक्षत्रविशामपि सुखप्रदेत्यनुमीयते। रूपमण्डने पुनः 'शूद्राणां सौख्यदायिनी'ति पाठः।

४। मेदो म्लेच्छजातिविशेषः, ध्वजः शौण्डिकः। अत्र द्वितीयार्धे 'कुम्भकारबणिक्-वैश्यचाक्रिकध्वजिनामपि' इति सुखबोध्यः पाठो रूपमण्डने। एवञ्चैतन्मते वैश्यानां मधुसूदन-विष्णुहृषीकेशाः, रूपमण्डनमते त्रिविक्रमवामनहृषीकेशाः सुखावहा इति स्थितम्।

[ अवस्थाभेदेन मूर्त्तीनां ग्राह्याग्राह्यत्वम् ]

अङ्गप्रत्यङ्गभग्ना या मूर्त्तिः स्थाप्या विसर्जयेत् ।
नखाभरणमालास्त्रैर्भग्नां तां न विसर्जयेत् ॥ ७ ॥

[ विष्णोश्चतुर्विंशतिमूर्त्तयः ]

केशवः (पद्मशङ्खश्च ? प-च-शं-गश्च) मधुसूदन-(च ?) शं-प-(गाः ? गः)
सङ्कर्षणो ग-शं-पा-चै (ः ?) दामोदरः प-शं-ग-च ( ः ? ) ॥ ८ ॥
वासुदेवो ग-शं-च-पै (ः ?) प्रद्युम्नश्चक्र-शं-ग-पः ।
विष्णुर्गदा-प-शं-चक्री माधवो ग-च-शङ्ख-पैः ॥ ९ ॥
अनुरुद्धश्च-गं-शं-पः पुरुषोत्तमश्च-पा-श-गैः ।
अधोक्षजः प-गा-शं-चो जनार्दनः प-चं-श-गः ॥ १० ॥
गोविन्दश्चक्र-गा-पा-(शं ? शः) त्रिविक्रमः प-गं-च-श(ः ?) ।
श्रीधरः पद्म-चं-गा-(शं ? शः) हृषीकेशो ग-चं-प-शैः ॥ ११ ॥
नृसिंहश्च-प-गं-श(श्च ? श्च) अच्युतो ग-प-चक्र-(शम् ? शः) ।
वामनः शं-च-गं-पद्मैर्नारायणः श-पं-ग-(च ः ?) ॥ १२ ॥
पद्मनाभः श-प-चां-ग उपेन्द्रः शं-ग-दा-च-पैः ।
हरिः शं-च-ग-पः पूज्यः कृष्णः शं-ग-प-चक्रभृत् ॥ १३ ॥

इति चतुर्विंशतिमूर्त्तयः ।

---

७ । या स्थाप्या मूर्त्तिरङ्गप्रत्यङ्गभग्ना तामिति योजना । विशेषः प्रथमे ( पृ० २२ ) द्रष्टव्यः ।

८—१३ । आत्रयोदशश्लोकमनया षट्श्लोक्या विष्णोश्चतुर्विंशतिं मूर्त्तीः सह नाम्ना सह चाऽऽयुधेनाभिदधानः संक्षेपबुद्ध्या आयुधानां पूर्णं नामानुपादाय प्रतीकरूपेणाद्याक्षरमात्रेण तान्यायुधानि प्रतिपादयतीति रहस्यमत्र विभावनीयम् । अत्र कृतशुद्धिषु पाठेषु प्रथमान्तानामायुधपदानामायुधिसामानाधिकरण्यम् अस्त्यर्थेऽत्प्रत्ययात् । इतरेषु च विशेषणत्वात्तृतीयेति द्रष्टव्यम् । 'मधुसूदन' इत्यत्रात्प्रत्ययान्तेन सह कर्मधारयः । तत्र तत्र बिन्दव आकाराश्च छन्दःपालनधृतव्रता अपि बहुत्राकारणकृतप्रमाण इति विषीदामः । तत्र चास्यैव ग्रन्थकर्तुर्ग्रन्थान्तरे रूपमण्डने आसामेव चतुर्विंशतिमूर्त्तीनामुल्लेखोऽविकलेनाऽऽयुधनाम्ना वर्त्तते । तद्दर्शिनाञ्चैतानि पद्यानि सुबोधानि स्युरिति रूपमण्डनीयपद्यान्यत्रोद्ध्रियन्ते । तथा च रूपमण्डने तृतीयाध्याये—

वासुदेवो गदाशङ्खचक्रपद्मधरो मतः ।
केशवः कमलं कम्बु धत्ते चक्र( ं ?)गदामपि ॥ ७ ॥
नारायणः कम्बुपद्मगदाचक्रधरो भवेत् ।
माधवस्तु गदां चक्रं शङ्खं वहति पङ्कजम् ॥ ८ ॥
पुरुषोत्तमस्तु चक्रं पद्मं शङ्खं गदां दधत् ।
अधोक्षजः सरोरुहं गदां शङ्खं सुदर्शनम् ॥ ९ ॥
सङ्कर्षणो गदा-कम्बु-सरसीरुह-चक्रभृत् ।
गोविन्दो धरते चक्रं गदां पद्मञ्च कम्बुना ॥ १० ॥
विष्णुः कौमोदकीं पद्मं पाञ्चजन्यं सुदर्शनम् ।
मधुसूदनस्तु चक्रं शङ्खं सरसिजं गदाम् ॥ ११ ॥
अच्युतस्तु गदापद्मचक्रशङ्खैः समन्वितः ।
उपेन्द्रो वहते शङ्खं गदां चक्रं कुशेशयम् ॥ १२ ॥
प्रद्युम्नश्च शङ्खचक्रगदाम्भोजानि पाणिभिः ।
त्रिविक्रमस्त्रिषु गदाचक्रशङ्खान् बिभर्त्ति यः ॥ १३ ॥
नरसिंहस्तु चक्राब्जगदाकम्बुविराजितः ।
जनार्दनोऽम्बुजं चक्रं कम्बुं कौमोदकीं दधौ ॥ १४ ॥
वामनस्तु शङ्खचक्रगदापद्मलसत्करः ।
श्रीधरो वारिजं चक्रं गदाशङ्खं दधाति च ॥ १५ ॥
अनिरुद्धो लसच्चक्रगदाशङ्खारविन्दवान् ।
हृषीकेशो गदां चक्रं पद्मशङ्खौ च धारयन् ॥ १६ ॥
पद्मनाभः पाञ्चजन्यं पद्मं चक्रं गदामपि ।
दामोदरोऽम्बुजं शङ्खं गदां धत्ते सुदर्शनम् ॥ १७ ॥
हरिर्धारयते कम्बुं चक्रं पद्मं तथा गदाम् ।
कृष्णः करैः पाञ्चजन्यं गदां पद्मं सुदर्शनम् ॥ १८ ॥
एताः सुमूर्त्तयो ज्ञेया दक्षिणाधःकर-क्रमात् । इति ।

इदमत्रावधेयम्—रूपमण्डने अन्येषामिव केशवमधुसूदनयोरपि चत्वारि चत्वार्यायुधानि निर्दिष्टानि, अत्र तु केशवस्य पद्मशङ्खाविति द्वे, मधुसूदनस्य पुनः शङ्खपद्मगदा इति त्रीण्यायुधानि दृश्यन्ते । तत्र च सम्भवन्त्यामपि केशवस्य द्वैबाहव्यामाकृतौ, मधुसूदनस्य त्रैबाहवं रूपन्त्व-नाकर्णितचरमिति छन्दोदोषमविगणय्यैव बन्धन्यन्तश्चकारः प्रक्षिप्तोऽस्माभिरिति ज्ञेयम् ।

रूपमण्डने त्रैविक्रमं रूपं त्रैबाहवं दृश्यते, इह पुनश्चातुर्बाहवमिति । कतरत् पुनरनयो-र्युक्ततरमिति नावधारयामः । न ह्यस्ति नियमो यत् त्रयोऽस्य पादा इति बाहुभिरपि त्रिभिरेव

( प्रोक्तानामायुधानां न्यासक्रमः ]

अधरं दक्षिणे हस्तमारभ्य सृष्टि(माग्रतः ? मार्गतः)।
चतुर्विंशतिमूर्त्तीनां सर्व(त्वेना ? त्वैवा)युधक्रमः ॥ १४ ॥

[ अथ शालग्रामशिलापरीक्षा ]

[ आकृतितो ग्राह्यशिलालक्षणम् ]

नागभोगसमा युक्ता शिला सूक्ष्मा च या भवेत् ।
पूजनीया प्रयत्नेन स्थिरा स्निग्धा च वर्त्तुला ॥ १५ ॥

---

भाव्यमिति, न चापि चतुर्भिस्ताहशमूर्त्यन्तरादर्शनात् । दृश्यते हि प्रायेणालौकिकमूर्त्तौ प्रतिपादं द्वौ द्वौ बाहू इति, यथा शिवविष्णुचतुराननादीनाम् । त्रिपादत्वे च—

'ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः ।'

इत्यादिस्मृतौ ज्वरासुरादीनां षट्चरणत्वम् । यद्यपि पुराणादौ श्रूयन्ते रावणादीनामतिपादा बाहवः परं न श्रूयन्तेऽतिबाहवश्चरणाः । समबाहुत्वं द्विपदादौ दृष्टमपि न त्रिपादादौ युक्तमिति विभावयामः । अस्त्रन्यासक्रमविधायकश्लोकदर्शनादपि चतुर्बाहुत्वमेवैषां प्रतीयते इति दिक् ।

१४ । प्रोक्तानामायुधानां विन्यासक्रममाह—अधरमित्यादि । चतुर्बाहुमूर्त्तीनां दक्षिणाधोहस्तमारभ्य सृष्टिमार्गतः स्वभावक्रमेणाऽऽयुधक्रमो ज्ञातव्य इत्यर्थः । स्वभावक्रमश्च आदौ दक्षिणाधोहस्तस्ततो दक्षिणोर्ध्वहस्तस्ततो वामाधोहस्तोऽन्ततश्च वामोर्ध्वहस्त इति । तथा च 'केशवः पद्मशंखश्चे'ति केशवस्य दक्षिणाधोहस्ते पद्मम्, दक्षिणोर्ध्वे चक्रम्, वामाधः शङ्खः, वामोर्ध्वे गदेति ज्ञेयम्, एवं सर्वत्र ।

१५ । आ पञ्चदशश्लोकात् त्रिषष्टश्लोकं यावदष्टाचत्वारिंशता श्लोकैः शालग्रामशिलाया लक्षणं दोषगुणौ ग्राह्याग्राह्यते परस्परभेदाश्च निरूपितानि । शास्त्रान्तरप्रसिद्धान्यमूनि वस्तूनि क्वचिदविकलपद्योद्धारेण क्वचिदक्षरमात्रपरिवर्त्तनेन, क्वचित् पदपरिवर्त्तनेन, क्वचिद् भाषापरिवर्त्तनतोऽर्थमात्रादानेन चायं ग्रन्थकारो यथायथमाजहार । एते च विषयाः प्रयोगपारिजातमत्स्यसूक्तादौ स्कन्दाग्निब्रह्म-ब्रह्मवैवर्त्त-वाराहादिमहापुराणेषु चोपलभ्यन्त इति वीरमित्रोदयप्राणतोषणीशिलाचक्रार्थबोधिन्यादिसंग्रहग्रन्थादिभ्यो ज्ञायते । जिज्ञासुभिस्तत्र तत्राऽऽकरे संग्रहे वा द्रष्टव्यम् । न युक्तं पुनरर्थशास्त्रं व्याचिख्यासुभिर्धर्मशास्त्रविषयमवलम्ब्य विशेषेणाऽऽलोचयितुम् इति ततो विरमामः ।

नागभोगसमेति फणिफणाकृतिविशिष्टा, युक्ता सुघटिता । न पुनर्नागभोगसमायुक्तेत्यैकपद्यम् । 'नागभोगसमाकारे'ति रूपमण्डने, 'छत्राकारे'त्यन्यत्र च पाठः । स्थिरेति, आसने यथा स्थिरतया वर्त्तेत तथाऽधश्चिपिटेत्यर्थः । तथाऽपि वर्त्तुला ऊर्ध्वभागे गोलाकृतिः ।

[ प्रमाणतो ग्राह्यशिलालक्षणम् ]

तत्राप्यामलकीमाना सूक्ष्मा चातीव या भवेत् ।
तस्यामेव सदा कृष्णः श्रिया सह वसत्यसौ ॥ १६ ॥
यथा यथा शिला सूक्ष्मा तथा तथा महत् फलम् ।
तस्मात्तां पूजयेन्नित्यं धर्मकामार्थमुक्तये ॥ १७ ॥

[ त्याज्यशिलालक्षणम् ]

कपिला कर्बुरा भग्ना रुक्षा निद्राकुला च या ।
( रेषाकुषा? रेखाकुला)ऽस्थिरा स्थूला बहुचक्रैकचक्रका ॥ १८ ॥
बृहन्मुखी बृहच्चक्रा बद्धचक्रा च (पायुनः ? या पुनः) ।
बद्धचक्राऽथ(नामा? वा या) स्याद् भिन्नचक्रा त्वधोमुखी ॥१९॥
दग्धा (सुरत?सुरक्ता) चापूज्या निषण्णा (पाति?पंक्ति) चक्रिका ।
पूजयेद् यः प्रमादेन दुःखमेव लभेत् सदा ॥ २० ॥

[ तत्र प्रतिप्रसवः ]

खण्डिता स्फुटिता भिन्ना पार्श्वभिन्ना विभेदिका ।
शा(लि?ल)ग्रामसमुद्भूता शिला दोषवहा न हि ॥ २१ ॥

---

१८ । श्लोकत्रयं प्राणतोषणीधृतस्कन्दपुराणे किञ्चिद्विकलमुपलभ्यते । तत्र यथा पाठान्तरं तथा श्लोकमध्ये बन्धनीचिह्नान्तर्यथासम्भवं सन्निवेशितम् ।

रुक्षेति—'अचिराच्छुष्कतां याति यस्यां लिप्तन्तु चन्दनम् । सा रुक्षेति' शिलाचक्रार्थबोधिनीधृतप्रयोगपारिजातोक्तलक्षणेत्यर्थः । अस्थिरेति आसने स्थिरतयाऽवर्त्तमाना । बहुचक्रेति प्रमाणाधिकचक्रशालिनी, यस्याः शिलाया यावन्ति चक्राणि प्रमाणतः प्राप्तानि ततोऽधिकचक्रेति यावत् । एकचक्रकेति एकं चक्रकं यस्याः सा, यस्या एकमपि चक्रं क्षुद्रं तादृशीत्यर्थः । अन्यत्रैकचक्राया ग्राह्यत्वश्रवणात् ।

१९ । बद्धचक्रेत्यत्र लग्नचक्रेति पाठः पुराणे । तत्रापि नास्त्यर्थान्तरम् । बृहच्चक्रेति चक्रान्तर्गतचक्रा,

'चक्रेणाऽऽवृतचक्रा च बृहच्चक्रा प्रकीर्तिता'

इति शिलाचक्रार्थबोधिनीधृतप्रयोगपारिजातस्मरणात् ।

२१ । अत्र प्राणतोषण्यां स्फुटितादिवर्जनीयशिलालक्षणमभिधाय—

[ वर्णभेदात् फलभेदनिरूपणम् ]

स्निग्धा सिद्धिकरी मुद्रा कृष्णा कीर्त्तिप्रदायिका।
पाण्डुरा पापदहनी पीता पुत्रप्रदायिनी।
नीला दिशति लक्ष्मीञ्च रक्ता भोगप्रदायिनी ॥ २२ ॥

[ वर्णभेदात् संज्ञाभेदः ]

कपिलं नारसिंहन्तु वामनं (चात ? पीत) सन्निभम्।
वासुदेवं सितं ज्ञेयं रक्तं सङ्कर्षणं स्मृतम् ॥ २३ ॥
दामोदरञ्च नीलाभमनिरुद्धं तथैव च।
श्यामं नारायणं (त्वेवं ? ज्ञेयं) वैष्णवं कृष्ण (कर्ष ? वर्ण)कम्।
बहुवर्णमनन्ताख्यं (श्री?श्रै)धरं पीतमुच्यते ॥ २४ ॥

[ चक्रप्रमाणम् ]

वृत्रसूत्रेऽष्टमो भाग उत्तमं चक्रलक्षणम्।
मध्यमञ्च चतुर्भागः कनीयस्तु त्रिभागि(कः?कम्) ॥ २५ ॥

---

"यत्तु ब्रह्मपुराणे—खण्डितं स्फुटितं भग्नं पार्श्वभिन्नं विभेदितम्।
शालग्रामशिलाभूतं किञ्चिद्दोषावहं न हि ॥
इति वचनं तत्स्वीयेष्टचक्रस्तुतिपरम्। अत एव स्कन्दपुराणे—
खण्डितं स्फुटितं भग्नं शालग्रामे न दोषदम्।
इष्टा यस्य तु या मूर्त्तिः स तां यत्नेन पूजयेत्।
संपूज्य फलमाप्नोति इह लोके परत्र च ॥ इति रुद्रवाक्यम्।
इत्युक्तम्।

२२। श्वेताश्यामयोर्विशेषफलमाह शिलाचक्रार्थबोधिनीधृतप्रयोगपारिजाते—
'पुष्टिवृद्धिप्रदा श्यामा श्वेता सात्त्विकदायिनी।' इति

२३। इदानीं वर्णक्रमेण केषाञ्चन चक्राणां लक्षणानि निर्दिशति—कपिलमित्यादि। नारसिंहादिपदे तस्येदमित्यण्। नरसिंहचक्रमित्यर्थः। एवं वामनादिषु।

२५। इदानीं चक्रप्रमाणमाहैकेन—वृत्तसूत्र इति। 'वृत्तसूत्राष्टमो भागः' इत्यतिरोहितार्थः पाठः। यस्य चक्रस्य यद् वृत्तमानं तस्याष्टमांशमितं चक्रम् उत्तमम्, चतुरंशमितं मध्यमम्, त्र्यंशमितमधममित्यर्थः। एतेन यथासौक्ष्म्यमेव चक्राणां श्रैष्ठ्यमित्यायातम्। यथोक्तम्—
'तत्राप्यामलकीमाना सूक्ष्मा चातीव या भवेत्' (५।१६ श्लो०) इति।

अथ चक्र[विशेष]लक्षणानि

[ तत्र वासुदेवः ]

द्वारदेशे समे चक्रे दृश्यते नान्त(रायिके ? रीयके) ।
वासुदेवः स विज्ञेयः शुक्लाभः स्यां(चा?)तितेजसा ॥ २६ ॥

[ सङ्कर्षणः ]

(द्वौ चक्रावेकलग्नौ ? द्वे चक्रे एकलग्ने) तु पूर्वभागस्तु पुष्क(लः?लम्)।
सङ्कर्षणाख्यो विज्ञेयो रक्ता(भि ? भ)श्चातितेजसा ॥ २७ ॥

[ प्रद्युम्नः ]

प्रद्युम्नः सूक्ष्मचक्रस्तु पीतदीप्तिस्तथैव च ।
सुषिरं छिद्रबहुलं दीर्घाकारन्तु यद् भवेत् ॥ २८ ॥

[ अनिरुद्धः ]

अनिरुद्धस्तु नीलाभो वर्त्तुलश्चातिशोभनः ।
(रेप्यायां?रेखाणां) त्रितयं (द्वारं?द्वारे) पृष्ठं पद्मेन लाञ्छितम् ॥

[ एतेषां पूजाधिकारिणः ]

ब्राह्मणैर्वासुदेवस्तु नृपैः सङ्कर्षणस्तथा ।
प्रद्युम्नः पूज्यते वैश्यैरनिरुद्धस्तु शूद्रकैः ॥ ३० ॥
चत्वारो ब्राह्मणैः पूज्यास्त्रयो राजन्यजातिभिः ।
वैश्यैर्द्वावेव संपूज्यौ तथैकः शूद्रजातिभिः ॥ ३१ ॥

---

२६ । चक्रभेदान् विवक्षुर्वासुदेवमाह—द्वारदेश इति । नान्तरीयके इति चक्रद्वयं परस्परलग्नमित्यर्थः । अतितेजसेति विशेषणे तृतीया, अतितेज उपलक्षित इत्यर्थः ।

२७ । 'द्वे चक्रे अग्रलग्ने तु पूर्वभागे च पुष्करम् । सङ्कर्षणाख्यो विज्ञेयो रक्ताभश्चातिशोभनः ॥' इति प्राणतोषणी । पुष्कलमिति र-लयोरभेदात् पुष्करमिति ज्ञेयम्, पुष्करमाकाशं छिद्रमित्यर्थः ।

२९ । एता द्विचक्रा इति प्राणतोषणीतो ज्ञायते ।

३० । एवं चत्वारि चक्राणि निरूप्य प्रसङ्गात्तेषां पूजाधिकारिण आह—ब्राह्मणैरिति द्वाभ्याम् ।

३१ । अत्रत्योऽयं श्लोकः,

शालग्रामाः समाः पूज्या विषमा न कदाचन । समेषु न द्वयं पूज्यं विषमेष्वेक एव हि ॥

इति स्मृत्यन्तरधृतवचनस्यापवादविधया हेमाद्रावुक्त इति वीरमित्रोदयाज् ज्ञायते । अत्र चायं वासुदेवादिपूजाप्रकारः—

[ त्रिचक्रलक्ष्मीनारायणः ]

लक्ष्मीनारायणो देवस्त्रिभिश्चक्रैर्व्यवस्थितः ।
पूजनीयः प्रयत्नेन भुक्तिमुक्तिफलप्रदः ॥ ३२ ॥

[ मधुसूदनः ]

नाभिपार्श्वे शङ्खपद्मं यस्य मुद्रा प्रदृश्यते ।
मधुसूदन आख्यातः शत्रुहा परिकीर्त्तितः ॥ ३३ ॥

[ दामोदरः ]

स्थूलो दामोदरो ज्ञेयः सूक्ष्मरन्ध्रो भवेत्तु सः ।
चक्रे तु मध्यरेखः स्यात् पूजितः सुखदः सदा ॥ ३४ ॥

[ द्विचक्रलक्ष्मीनृसिंहः ]

वामपार्श्वस्थिते चक्रे कृष्णवर्णे सबिन्दुके ।
लक्ष्मीनृसिंहो विख्यातो भुक्तिमुक्तिफलप्रदः ॥ ३५ ॥

[ द्विचक्रपुरुषोत्तमः ]

सुवर्त्तुलं तथा पीतं पृष्ठे तु सुषिरं ध्रुवम् ।
विदिक्षु दिक्षु सर्वासु मुखं यस्यैव दृश्यते ।
स देवदेवो विज्ञेयः पुराणः पुरुषोत्तमः ॥ ३६ ॥

[ एकचक्रे वर्णकृतो विशेषः ]

शुक्लो रक्तस्तथा कृष्णो द्विवर्णो बहुवर्णभाक् ।
एक (वस्त्वैक ? चक्रस्य) पञ्चैताः संज्ञाः स्युः पञ्च यथाक्रमम् ॥

---

ब्राह्मणैर्वासुदेवः पूज्यते इत्ययमेषामसाधारणोऽधिकारः वर्णगुरुत्वादितरवर्णसाधारणं चक्रपूजनमप्यविरुद्धम् । एवं नृपैः सङ्कर्षणः पूज्यते इति, अयमेषां क्षत्रियाणां ब्राह्मणसाधारणो वैश्यशूद्रापेक्षयाऽसाधारणोऽधिकारः । ततश्च तैः सङ्कर्षणप्रद्युम्नानिरुद्धाः पूजनीयाः । प्रद्युम्नः पूज्यते वैश्यैरित्येषां शूद्रमात्रापेक्षयाऽसाधारणो ब्राह्मणक्षत्रियसाधारणोऽधिकारः । एवञ्च वैश्यैः प्रद्युम्नानिरुद्धौ पूजनीयौ । अनिरुद्धस्तु शूद्रकैरित्ययमेषां सर्वसाधारणोऽधिकारः । तथाच—शूद्रैरेक एवानिरुद्धः पूजनीय इति फलितोऽर्थः ।

परं न हि वर्णहीना वर्णोत्तमानां वृत्तिमाददीरन्निति न नृपैर्वासुदेवः पूज्यः, न तु वैश्यैर्वासुदेवसङ्कर्षणौ, न च शूद्रेण वासुदेवसङ्कर्षणप्रद्युम्ना इति । तदेवाहोत्तरश्लोके—चत्वार इत्यादीति ।

३७-३८ । एकचक्रे विशेषमाह—शुक्ल इति । एकचक्रस्य शुक्लादयः पञ्च संज्ञाः

[ वर्णक्रमेण तेषां नामानि ]

पुण्डरीकः प्रलम्बघ्नो रामो वैकुण्ठ एव च।
विष्वक्सेन इति ब्रह्मन् फलञ्चास्यार्चने शृणु।

[ यथाक्रममेतेषां फलम् ]

मोक्षं मृत्युं विवादञ्च दारिद्र्यमटनं तथा ॥ ३८ ॥

[ द्विचक्रे चक्रनिबन्धनो विशेषः ]

चक्रे तु मध्यदेशे स्यात्(त्वा ? ता)माख्यामि रमे शृणु।
परमेष्ठ्यजितक्रोधस्तथा नारायणोऽन्तकः ॥ ३९ ॥
अनन्तश्चे(दिति ? ति वि-)ज्ञेयो नानामूर्त्तिस्तु यो भवेत्।

[ यथाक्रममेतेषां फलम् ]

राज्यं मृत्युं धनञ्चैव हानिञ्च वाञ्छितार्थकम् ॥ ४० ॥

---

स्युरित्यन्वयः। अत्र 'संज्ञाः स्युश्चे'ति स्यात्। यथाक्रमम् इत्यस्य परत्रान्वयः। द्विवर्ण इति यत्किञ्चिद्वर्णद्वयवानित्यर्थः, बहुवर्णभाग् इत्यत्र च द्व्यधिक-यत्किञ्चिद्वर्णवानिति। यथाक्रम-मित्यस्यार्थस्तु—शुक्लः पुण्डरीकः, रक्तः प्रलम्बघ्नः, कृष्णो रामः, द्विवर्णो वैकुण्ठः, बहुवर्णभागो विष्वक्सेन इति। एतेषामर्चनाफलमाह—फलञ्चास्येति। यथाक्रममित्येव। तथाच पुण्डरीकाक्षार्चने फलं मोक्षः। एवं प्रलम्बघ्नाद्यर्चने मृत्य्वादयः। 'अटनमि'त्यत्र 'अर्जनमि'ति पुराणे पाठः।

३९-४०। द्विचक्रे विशेषमाह—चक्रे त्विति। द्विचक्राणां चक्रे यदि मध्यदेशे स्यातां तदा तेषां परमेष्ठ्यादिसंज्ञा भवति, फलञ्च राज्यादिकमिति वर्त्तुलार्थः। नानामूर्त्तिरित्यनन्त इत्यस्य विशेषणम्। राज्यमित्यादिद्वितीयान्तपदानां ददातीत्यध्याहृतक्रिययाऽन्वयो द्रष्टव्यः। अत्रेदं विवेक्तव्यम्—प्राणतोषणीधृतपद्मपुराणे 'वर्णचक्रादिभेदेन तानि नामानि मे शृणु' इत्युपक्रम्य, 'शुक्लो रक्तस्तथा पीत' इत्यादिसप्तत्रिंशश्लोकादारभ्य 'राज्यं मृत्युम्' इत्यादिचत्वारिंश-श्लोकान्तो भागः क्वचित् किञ्चिदंशस्य योगविप्रयोगाभ्यामविकलो वर्त्तते। परं तत्र वर्णतश्चक्रतश्च भिन्नतया द्विविधानामप्यमूषां शालग्रामशिलानां 'राज्यं मृत्युं विवादञ्चे'त्याद्येकमेव फलं निर्णीत-मुपलभ्यते न तु प्रकृते इव वर्णतो भिन्नानां 'मोक्षं मृत्युं विवादञ्चे'त्यादि विविक्तं फलम्। विशेषतः पुनस्तत्र 'राज्यं मृत्युम्' इत्यादिद्वितीयान्तपदानामन्वयसमाप्त्यर्थं 'ददाति पूजितो लोके तस्माद् ज्ञात्वाऽर्चयेन्नरः' इत्यर्धमधिकं वर्त्तते। तदनयोर्वर्णभिन्नचक्रभिन्नयोः शालग्रामशिला-वर्गयोर्युतफलताऽयुतफलता वेति स्मार्त्तधुरीणा एव समादधत्विति।

[ चक्रान्तराणि ]

एक(पद्मान्तिका ? चक्रान्विता) या तु दक्षि(णार्त्त-
? णावर्त्त ) संस्थिता ।
चतुर्लाञ्छनसंयुक्ता भोगमोक्षप्रदा शुभा ॥ ४१ ॥
चक्रेण कम्बुना या च (पद्मनादि य अङ्किता ?
पद्मेन गदयाऽङ्किता )।
तत्र श्रीः प्रत्यहं तिष्ठे त् (सप्त ? सर्व)सम्पदमादिशेत् ।
लाञ्छनेन विना (यस्य ? या स्यात् ) प्रशस्ता तु न
सा स्मृता ॥ ४२ ॥

[ हरिः ]

चक्रं वा केवलं यत्र पद्मं वा(प्यर्थ यद् ? प्यथ वा) गदा ।
लाङ्गलं वनमाला च हरिर्लक्ष्म्या (स हि ? सह) स्थितः ॥४३

[ एतत्पूजाफलम् ]

तस्मिन् गृहे न दारिद्र्यं न शोको रोगजं भयम् ।
न चोराग्निभयं तस्य ग्रहै रोगैर्न बाध्यते ।
अन्ते मोक्षो भवेत्तस्य पूजनादेव नित्यशः ॥ ४४ ॥

[ नृसिंहः ]

विकटास्या तु विकृता नृसिंहमुखलाञ्छना ।
पाशाङ्कुशगदाचक्रा(प्ये ? ण्ये)षामङ्के न लाञ्छिता ॥ ४५ ॥
नारसिंही भवेन्मुद्रा भोगमोक्षप्रदायिका ।
दर्शनान्नश्यते पापं ब्रह्महत्यां व्यपोहति ॥ ४६ ॥

---

४१-४२ । या शिला एकचक्रान्विता, दक्षिणावर्त्तसंस्थिता चतुर्लाञ्छनसंयुक्ता च सा भोगमोक्षप्रदेत्यन्वयः । चतुर्लाञ्छनेत्यस्य विवरणं चक्रेणेत्यादि ।

[ कपिलनृसिंहः ]

नृसिंहं पीतवर्णाभ-महा(वक्र ? चक्र)मुखे गुरुम् ।
यतीनां (पूजनं देवं ? पूजनादेव) सत्यलोकप्रदायकम् ॥४७

[ सुदर्शनम् ]

द्वे चक्रे पृष्ठदिग्भागे श्यामञ्च मधुवर्णकम् ।
सुदर्शनं शिला नाम पूजितं सुखकामदम् ।
सान्निध्यं मम मूर्त्यां च पूजने च कलाधि(का ? कम्) ॥४८

[ हयग्रीवः ]

अश्वाकृतिस्तथा मुद्रा साक्षमाला सपुस्तका ।
पद्माङ्किता भवेन्मुद्रा हयग्रीवेति विश्रुता ॥ ४६ ॥
जयदुस्वशुभासक्तो ननः (?) पापात् प्रमुच्यते ।
अन्यथा च भवेत्तस्य लक्ष्मीरैश्वर्यमुत्तमम् ॥ ५० ॥

[ मत्स्यः ]

मत्स्याङ्किता (शुभे ? स्तु ये) चक्रा आयुर्दा(:?)
पुष्टिदा नृणाम् ।
सदा पूज्या गृहस्थेन सन्निधानेऽत्र केशवः ॥ ५१ ॥

[ जनार्दनः ]

एकमुखे चतुश्चक्रं चतुश्चक्रो जनार्दनः ।
पूजनीयः सदा सौख्यमुक्तिदो नात्र संशयः ॥ ५२ ॥

---

४७। अयं कपिलवर्ण इति पद्मपुराणम् । तथाच—

कपिलो नरसिंहस्तु पृथुचक्रो महामुखः ।
ब्रह्मचर्येण पूज्योऽसौ त्रिबिन्दुः पञ्चबिन्दुकः ॥ इति ।

४९-५०। अयमङ्कुशाकार इत्यग्निपद्मादिषु । 'जयदुस्वशुभासक्तो ननः' इत्यत्र 'चक्रध्वजसमायुक्तो नरः' इति स्यात् । एवञ्च 'नरः पापात् प्रमुच्यते' इत्येतत्पूजको नर इत्यर्थः ।

५२। अत्र क्रमभङ्गः सम्भाव्यते । हयग्रीवात् परमेवास्य स्थानं निर्देष्टुं युज्यते । दृश्यते हि मत्स्यादारभ्य क्रमेण दशावतारमुद्रा वर्ण्यन्ते, तत्र यद्यन्तरा जनार्दनोपनिपातः स्यान्नूनं क्रमो

[ कूर्मः ]

कूर्माङ्कितास्तु ये चक्रा महासन्ततिदायकाः।
महार्थकारका दिव्या हरिस्तत्र व्यवस्थितः॥ ५३ ॥

[ वराहः ]

वराहमूर्त्तिसंयुक्तं यदि चक्रं (च ध्यापनम्? प्रपद्यते)।
पूजनाल्लभते राज्यं पृथिव्यामेकराजकम्॥ ५४ ॥

[ नरसिंहः ]

नारसिंहा(ङ्गतं ? ङ्कितं) चक्रं दुर्लभं भुवि मानवैः।
शत्रूणां नाशनं तद्धि क्लेशघ्नं परिकीर्त्तितम्।
स्तम्भनं (नर ? पर)सैन्यस्य महामृत्युहरं शुभम्॥ ५५ ॥

[ वामनः ]

अङ्कितं वामनेन स्याच्चक्रं परमशोभनम्।
नानावृद्धिकरश्चैतदन्नाद्यं चाक्षयं भवेत्॥ ५६ ॥

[ जामदग्न्यः ]

चक्रमध्ये तु दृश्येत परशुं रामरूपकम्।
तज्जामदग्न्यं चक्रं यजतादेकराड्मुखे(?)॥ ५७ ॥

[ कौशल्यानन्दनः ]

चक्रेण दृश्यते ब्रह्मन् बाणकार्मुकभृत् प्रभुः।
कौशल्यानन्दनो रामः (सीतायाः ?तृतीयः) परिकीर्त्तितः॥५८

---

भज्येतैव। अभिमतश्च क्रमो ग्रन्थकर्तुरिति लक्ष्यते, कथमन्यथा पूर्वं नृसिंहद्वयं निरूप्यापि पुनर्वराहानन्तरं नृसिंहं निरूपयेत्।

५४। एकराजकमिति राज्यमित्यस्य विशेषणम्, एकच्छत्रं राज्यं साम्राज्यमित्यर्थः।

५५। नारसिंहाङ्कितमिति नरसिंहाकृतिचिह्नेन चिह्नितमित्यर्थः।

५७। 'तज्जामदग्न्यं चक्रं स्याद् यजमानोऽपराङ्मुखः' इति स्यात्। तादृशं चक्रमर्चयन् जनः क्वचिदपि विषयेऽकृतकृत्यो न भवतीति तदर्थः।

५८। कौशल्यानन्दनरामलक्षणमाह—चक्रेणेति। एतल्लक्षणं शिलाचक्रबोधिनी-धृतवाराहे—

[ बुद्धः ]

तेन युक्तास्तु दृश्यन्ते पाषाणधृतरूपिणः ।
बु(धा ? द्धा)ङ्कितं भवेच्चक्रं महाद्रव्यप्रदश्च यत् ॥ ५९ ॥

[ कल्की ]

(खड्गा ? खड्ग्या)सनसमारूढः खड्गधातृस्वरूपवान् ।
उभौ चक्रौ तु तत्रस्थौ स भवेत् पुरुषोत्तमः ॥ ६० ॥

---

चक्रोर्ध्वं दृश्यते यस्य तूणं शार्ङ्गं धनुः शरैः (?) ।
कौशल्यानन्दनो रामस्तृतीयः परिकीर्त्तितः ॥ इति

तृतीय इति पूर्वं 'रामो रामश्च रामश्चे'त्युपक्रमादयं लक्षणक्रमेण तृतीय इत्यर्थः । अयं द्विचक्रः । अनेनांशतोऽपीदं लक्षणं न संवदतीति प्रत्यक्षमेव सर्वेषाम् । यच्च—

द्वारद्वये चतुश्चक्रो वामतश्चैकचक्रवान् ।
बाणतूणीरचापाढ्यः सीतारामः स्रगन्वितः ॥

इति शिलाचक्रार्थबोधिनीधृतब्रह्माण्डपुराणे पञ्चचक्रवर्गे सीतारामलक्षणं ततोऽपीदं दूरवर्त्तीत्यव्यतिरोहितम् । यच्चापि तत्र तत्र पुराणे राम-रामचन्द्रादिलक्षणमुपलक्ष्यते तस्मादपीदं भिद्यत इति नवीनमिदं लक्षणं कस्यापि । वयन्तु कौशल्यानन्दनपदमुपजीव्य 'सीताया' इत्यत्र 'तृतीयः' इति विपरिवर्त्त्य नामकल्पनं कृतम् । इदमत्र ज्ञातव्यम्—शिलाचक्रार्थबोधिन्याम्—

'पीतः परशुकोदण्डलाङ्गलेन सुलक्षितः ।
रामो रामश्च रामश्च ज्ञेयो मृत्युहरः क्रमात् ॥'

इत्यभिधाय तथैव लक्षणानि निरूपितानि । 'अत एव कौशल्यानन्दनरामलक्षणनिरूपणप्रस्तावे 'तृतीय' इत्युक्तम् । अत्र तु बलरामलक्षणं नैव लक्ष्यते ; तदयं मुद्राकरप्रमादो वा स्याद् ग्रन्थकारप्रमादो वेति सुधीभिर्निर्णेयम् ।

५९ । बुद्धलक्षणमाह —तेनेति । शिलाचक्रार्थबोधिनीधृते वाराहे—

दृश्यरन्ध्रद्वयोपेतामन्तश्चक्रद्वयान्विताम् ।
शिरःपुच्छोर्ध्वचक्रञ्च पार्श्वयोर्वाऽपि दृश्यते ।
नानावर्णमयीञ्चापि बुद्धमूर्त्तिं प्रचक्षते ॥

इति द्विचक्रबुद्धलक्षणम्, पद्मपुराणे च—

अनुगह्वरसंयुक्तं चक्रहीनं यथा भवेत् ।
निवीतबुद्धसंज्ञः स्याद्ददाति परमं पदम् ॥

इत्यचक्रबुद्धलक्षणञ्च नैतस्य तुल्ये इति द्रष्टव्यम् । 'पाषाणधृतरूपिणः' इत्यस्यार्थं प्रकृतपाठं वा न विद्मः ।

६० । अत्र 'स भवेत् पुरुषोत्तमः' इति स्थितेऽपि, पूर्वं पुरुषोत्तमस्य लक्षणं लिखितमिति

[ चक्रप्रतिष्ठानिषेधः ]

(आह ? आहुः) ब्रह्मादयो देवाः सर्वभूतानि केशवः ।
सदा सन्निहि(तं चक्रं ? तश्चक्रे) प्रतिष्ठा(कर्मणा स्ततः ?
कर्म नास्त्यतः) ॥ ६१ ॥

[ शिलाचक्रविक्रयादिनिषेधः ]

शा(लि ? ल)ग्रामशिलाया यश्चक्रमुद्घाटयेन्नरः ।
विक्रेता चानुमन्ता च यः परीक्ष्यानुमोदयेत् ।
सर्वे ते नरकं यान्ति यावदाभूतसंप्लवम् ॥ ६२ ॥

[ शिलाप्रशंसा ]

शा(लि ? ल)ग्रामशिलाग्रे तु यो (जुह्वति ? जुहोति) हुताशनम् ।
एकाहुतिर्हुता सम्यक् कल्पकोटिगुणोत्तरा ।
एतस्मिन् पूजिते देवे त्रैलोक्यं पूजितं भवेत् ॥ ६३ ॥

इति शालग्रामशिलापरीक्षा*

[ मूर्त्तिविशेषाः ]

तार्क्ष्यो मरकतप्रख्यः कौशिकाकारनासिकः ।
चतुर्भुजस्तु कर्त्तव्यो वृत्तनेत्रमुखस्तथा ॥ ६४ ॥

---

अयं दशावतारोपक्रम इति च कल्किलक्षणमेवेदमिति निश्चीयते । न च सत्यपि पुरुषोत्तम-लक्षणे चक्रभेदेनायमन्योऽपि पुरुषोत्तमो लक्ष्यत इति वाच्यम्, पूर्वत्रापि द्विचक्रपुरुषोत्तम एव लक्षित इहापि द्विचक्र एव लक्ष्यते इति नैकस्येदं लक्षणं भवितुमर्हतीति ।

खड्गी इति खड्गाकाररेखावानित्यर्थः । शिलाचक्रार्थबोधिन्याम्—

अतिरिक्तं सूक्ष्मबिलं स्पष्टचक्रं स्थिरासनम् ।
( कपाला ? कृपाणा ) कृतिरेखे द्वे द्वारस्योपरि पृष्ठके ।
म्लेच्छनाशी भवेत् कल्की कलिकल्मषनाशनः ॥ इति द्विचक्रकल्किलक्षणम् ।

प्रकृतग्रन्थे आसनसमारूढ इति स्थिरासन इत्यस्यानुवादः । 'खड्गधातृस्वरूपवान्' इति तु मूर्त्यभिप्रायेणेति विभावयामः, कल्किनः खड्गधारित्वस्य पुराणादौ प्रसिद्धत्वात् ।

६२ । चक्रमुद्घाटयेदिति संवृतचक्रं प्रकाशीकुर्यादित्यर्थः । पुराणे तु 'मूल्यमुद्भावयेदि'ति पाठः ।

---

* इयं शालग्रामशिलापरीक्षा अप्रासङ्गिकीव प्रतिभाति । रूपमण्डनेऽपीयमंशतो वर्त्तते । शिल्परत्न-काश्यपशिल्प-समराङ्गणसूत्रधारादौ तु नामतोऽपि नोपलभ्यते । न युक्तं शिल्पिनामुपकारार्थं ग्रन्थनिर्माण-प्रवृत्तस्याऽऽजानिकं चक्रं विशेषेण लक्षयितुमिति ।

गृध्रोरुजानुचरणः पक्षद्वयविभूषितः ।
प्रभासंस्थानसौवर्णः कलापेन विवर्जितः ॥ ६५ ॥
नवतालः प्रकर्त्तव्यो गरुडो मानसूत्रतः ।
पाद(?)जानु कटि(?) यावदर्चायां वाहनस्य दृक् ॥ ६६ ॥
छत्रञ्च कुम्भपूर्णञ्च करयोस्तस्य कारयेत् ।
करद्वयन्तु कर्त्तव्यं तथा विरचिताञ्जलि ॥ ६७ ॥
यदुश्च भगवान् पृष्ठे छत्रकुम्भधरौ (हरौ ? करौ) ।
किञ्चिल्लम्बोदरः कार्यः सर्वाभरणभूषितः ॥ ६८ ॥

इति पन्नगाशनः ।

अष्टबाहोर्हरेर्मूर्त्तेरायुधानि वदाम्यहम् ।
नन्दकश्च गदा बाणः पद्मं दक्षिणबाहुषु ।
शङ्खो धनुस्तथा चक्रं खेटकं वामबाहुषु ॥ ६९ ॥
त्रिविक्रमो नृसिंहश्च दशतालौ प्रकीर्त्तितौ ।
वामनः सप्ततालस्तु विप्रमूर्त्तिः क्वचिद् भवेत् ॥ ७० ॥

---

६५। प्रभासंस्थानसौवर्ण इति प्रभासंस्थानाभ्यां कान्तिशरीराभ्यां सौवर्णः सुवर्णमय इव प्रतिभासमानः। 'कलापेन विवर्जित' इत्यत्र 'कलापेन विभूषित' इति रूपमण्डने (३।४७) पाठः। यद्यपि 'कलापो भूषणे बर्हे' इति कोषान्मयूरपिच्छ एव कलापशब्दो वर्त्तते-तथाऽपि पक्षमात्रार्थ एवात्र प्रयुक्तः। भूषणार्थस्तु न प्रसज्यते। 'विवर्जितः' 'विभूषितः' इत्यनयोः कतरच्छिष्यते इति नावधारयामः।

६६। द्विधेह वाहनानि विविच्यन्ते, एकं स्थितायाः प्रतिमायाः, अपरमुपविष्टायाः। द्वितीयमपि पुनर्द्वेधा भिद्यते, एकमेकस्मिन्नेव पार्श्वे लम्बितचरणायाः, द्वितीयञ्चोभयोरेव पार्श्वयोर्लम्बितचरणायाः। सङ्कलनेन पुनस्त्रीण्येव वाहनानीति। तत्र स्थिताया अर्चाया वाहनस्य दृष्टिः पादं यावत्, एकपार्श्वलम्बितचरणाया जानु यावत्, उभयतो लम्बितचरणायाः कटिं यावदिति विवेकः। तदेतदाह ग्रन्थकारः पादमिति। अत्र पादपदेन गुल्फपर्यन्तो भागो लक्ष्यते विभागसामर्थ्यात्।

६७। 'कुम्भपूर्णञ्चे'त्यत्र 'पूर्णकुम्भञ्चे'त्युचितः पाठो रूपमण्डने।

६८। यदुश्च भगवान् इति यदुवंशीयो भगवान् श्रीकृष्ण इत्यर्थः।

'यादवो भगवान् पृष्ठे छत्रकुम्भधरो हरिः' इति रूपमण्डने विसंष्ठुलः पाठः।

७०। अत्र मत्स्यपुराणम्—

दशतालः स्मृतो रामो बलिर्वैरोचनिस्तथा ।
वाराहो नरसिंहश्च सप्ततालस्तु वामनः ॥ इति (२५९ अ० १-२ श्लो०)

कृष्णाजिनोपवीतः स्याच्छत्री (कृत ? धृत)कमण्डलुः ।
कुण्डली शिखया युक्तः कुब्जाकारो मनोहरः ॥ ७१ ॥

इति वामनः ।

रामस्तु द्विभुजो रम्यः शरचापधरः प्रभुः ।

इति रामः ।

(महा ? नृ)वराहं प्रवक्ष्यामि शूकरास्येन शोभनम् ।
गदापद्मधरं धात्रीं दंष्ट्राग्रेण समुद्धृताम् ॥ ७२ ॥
बिभ्रा(णा ? णं) कूर्परे वामे विस्मयोत्फुल्ललोचनः ।
नीलोत्पलधरां देवीमुपरिष्टात् प्रकल्पयेत् ॥ ७३ ॥
दक्षिणं कटिसंस्थञ्च बाहुं तस्य प्रकल्पयेत् ।
कूर्मपृष्ठे पदञ्चैकमन्यन्नागेन्द्रमूर्धनि ॥ ७४ ॥
शेषश्चतुर्भुजः कार्यस्तथैव रचिताञ्जलिः ।
कर्त्तव्यौ (शिल ? शीर)मुषलौ करयोस्तस्य चोर्ध्वयोः ॥७५॥

---

७५ । शेष इति । 'रचिताञ्जलिरि'त्यनेन नेदं स्वतन्त्रस्य शेषस्य लक्षणमपि तु नृवराहाङ्गतया तदग्रे कर्तव्यस्येत्यायाति । अन्यथा नृवराहलक्षणमभिधायान्तरा शेषं लक्षयतः पुनर्नृवराहप्रकारान्तरकथनमनुपपन्नं स्यात् । शिल्परत्ने शेषलक्षणमपहायैव नृवराहस्य लक्षणद्वितयं लिखितं दृश्यते ( शिल्प० उ० २५ अ० ११२-११६ श्लो० ) ।

मत्स्यपुराणे पुनः किञ्चिद्विलक्षणमेव नृवराहलक्षणमिति तदत्र प्रदर्श्यते—

महावराहं वक्ष्यामि पद्महस्तं गदाधरम् ॥
तीक्ष्णदंष्ट्राग्रघोणास्यं मेदिनीवामकूर्परम् ।
दंष्ट्राग्रेणोद्धृतां दान्तां धरणीमुत्पलान्विताम् ॥
विस्मयोत्फुल्लनयनामुपरिष्टात् प्रकल्पयेत् ।
दक्षिणं कटि(हस्त ? संस्थ)ञ्च करं तस्याः प्रकल्पयेत् ॥
कूर्मोपरि तथा पादमेकं नागेन्द्रमूर्धनि ।
संस्तूयमानं लोकेशैः समन्तात् परिकल्पयेत् ॥ इति ।

( मत्स्य० २६० अ० २८—३१ श्लो० ) ।

[ प्रकारान्तरम् ]

अथवा शूकराकारं महाकायं क्वचिल्लिखेत् ।
तीक्ष्णदंष्ट्रोग्रघोणास्यं स्तब्धकर्णोर्ध्वरोमकम् ॥ ७६ ॥

इति नरवराहः ।

नरसिंहाकृतिं वक्ष्ये रौद्रसिंहमुखेक्षणाम् ।
भुजाष्टकसमायुक्तां ध्वजपीनसटाश्रिताम् ॥ ७७ ॥
हिरण्यकशिपुं दैत्यं दारयन्तीं नखाङ्कुरैः ।
ऊरोरुपरि विन्य(स्त ?स्य)खड्गखेटकधा(रणा ? रिणी)म् ॥
(तथाऽ ? तस्या)न्त्रमालां निष्कृष्य बाहुयुग्मेन बिभ्रतीम् ।
आकारं पुरु(षाकस्यै ? षस्यैव)धारयन्तीं मनोहरम् ॥ ७९ ॥
मध्यस्थिताभ्यां बाहुभ्यां दक्षिणे चक्रपङ्कजे ।
कौमोदकीं तथा शङ्खं बाहुभ्यामिति(नामतः ? वामतः)॥८०॥
अधःस्थिताभ्यां बाहुभ्यां दारयन्तीं प्रकल्पयेत् ।
ऊर्ध्वस्थिताभ्यां बाहुभ्यामन्त्रमालां तु बिभ्रतीम् ॥ ८१ ॥
नीलोत्पलदलच्छायां चञ्चच्चम्पकसप्रभाम् ।
तप्तकाञ्चनसङ्काशां बालार्कसदृ(शां?शीं) लिखेत् ॥ ८२ ॥

---

७६ । 'स्तब्धकर्णोर्ध्वरोमकम्' इत्यत्र 'स्कन्धकर्णोर्ध्वरोमकम्' इति शिल्परत्ने ( २९ अ० ११६ श्लो० ) पाठः ।

७७ । रौद्रसिंहमुखेक्षणामिति भीषणसिंहमुखनेत्रतुल्यमुखनेत्राम् । 'रौद्रपिङ्गमुखेक्षणाम्' इति शिल्परत्नपादटीकाधृतं पाठान्तरम् । ध्वजपीनसटाश्रिताम् इति ध्वजस्थूलकेशरधारिणीम् । 'स्तम्भपीन' इति शिल्परत्ने, 'स्तब्धपीन' इति तत्पादटीकायां पाठः ।

७९ । आकारमिति, मुखादधस्तात् पुरुषाकृतिवदाकृतिमित्यर्थः । शिल्परत्ने इदमर्धं नास्ति । ( शिल्प० उ० २९ अ० ११७-१२० श्लो० ) ।

८१ । अत्र दारणान्त्रमालाधारणयोरनुवादो बाहुविशेषनियमार्थः । शिल्परत्ने अयमपि श्लोको नरसिंहलक्षणे नास्ति ।

८२ । अत्र नीलोत्पलेत्यादिविशेषणत्रयं पक्षान्तरद्योतकम् । 'अथवा चम्पकप्रभाम्'

[ प्रकारान्तरम् ]

आसीनं द्विभुजं देवं प्रसन्नवदनेक्षणम् ।
श्वेतं स्फटिकसङ्काशं चतुर्बाहुमथापि वा ॥८३ ॥
आजानुलम्बितौ बाहू कर्त्तव्यौ तत्र दक्षिणे ।
समीपे कल्पयेच्चक्रं वामे शेषं समीपतः ॥ ८४ ॥
ऊर्ध्वस्थिताभ्यां बाहुभ्यां दक्षिणे पङ्कजं न्यसेत् ।
वामे बाहौ गदा रम्या(लिनात् प्र ? लिखेच्चित्र)
विशार(दैः ? दः) ॥ ८५ ॥

इति नरसिंहः ।

जलमध्यगतः कार्यः शेषः पन्नगदर्शनः ।
फणाम्बुजमहारत्न···शिरो(धृतः ? धरः) ॥ ८६ ॥

---

इति शिल्परत्ने ( उत्तर० २९ अ० १२० श्लो० ) पाठः । पुराणे तु वर्णकान्त्यादिविषये किमपि नोक्तम् । विशेषतस्तु तत्राऽऽनुषङ्गिकं मूर्त्यन्तरमपि कल्पितं दृश्यते । तथा च मात्स्ये—

नारसिंहन्तु कर्तव्यं भुजाष्टकसमन्वितम् ॥
रौद्रं सिंहा(सनं ? ननं ) तद्वद्विदारितमुखेक्षणम् ।
स्तब्धपीनसटाकर्णं दारयन्तं दितेः सुतम् ॥
विनिर्गतान्त्रजालञ्च दानवं परिकल्पयेत् ।
( मसन्तं ? मषन्तं ) रुधिरं घोरं भ्रुकुटीवदनेक्षणम् ॥
युध्यमानश्च कर्तव्यः क्वचित् करणबन्धनैः ।
परिश्रान्तेन दैत्येन तर्ज्यमानो मुहुर्मुहुः ॥
दैत्यं प्रदर्शयेत्तत्र खड्गखेटकधारिणम् ।
स्तूयमानं तथा विष्णुं दर्शयेदमराधिपैः ॥ इति
( २६० अ० ३१—३९ श्लो० ) ।

८३-८९ । विशेष्यानुल्लेखात् कस्य लक्षिकेयं श्लोकत्रयीति न प्रतिपद्यामहे । नेयं नरसिंहलक्षणत्वेनोपलभ्यते शिल्परत्ने । लिखेच्चित्रविशारद इत्यत्र वाक्यार्थः कर्म ।

८६ । अयं पूर्व( ७९ श्लो० )लक्षिताच्छेषाद्विशिष्यते । अत एव पन्नगदर्शन इत्युक्तम् । पन्नगदर्शन इति सर्पाकृतिरित्यर्थः । जलमध्यगतत्वेनाप्ययं विशिष्यते । 'फणाम्बुजमहारत्ने'-त्यनन्तरं 'दुर्निरीक्षे'ति पतितं स्यात्, विष्णुधर्मोत्तरे ( ३य-खण्ड० ) तथा पाठः ।

देवदेवस्तु कर्त्तव्यस्तत्र सुप्तश्चतुर्भुजः ।
एकपादोऽस्य कर्त्तव्यः शेषभोगाङ्कसंस्थितः ॥ ८७ ॥
एको भुजस्तु कर्त्तव्य(मति ? स्तस्य)जानुप्रसा(धि?रि)तः ।
कर्त्तव्यो नाभिदेशस्थस्तथा तस्यापरः करः ॥ ८८ ॥
तथैवान्यकरः कार्यो देवशत्रु(शरा ? शिरो)धरः ।
सन्तानमञ्जरीधारी तथा चैवापरो भवेत् ॥ ८९ ॥
नाभीसर(स?सि)सम्भूते कमले तस्य याद(वः ? व) ।
सर्वभूमिमयो देवः प्राक् कार्यस्तु पितामहः ।
(नील ? नाल )लग्नौ च कर्त्तव्यौ पद्मस्य मधुकैटभौ ॥९०॥

इति जलशायी ।

वैकुण्ठश्च प्रवक्ष्यामि (धृष्ट?साष्ट)बाहुं महाबलम् ।
तार्क्ष्यासनश्चतुर्वक्त्रं कर्त्तव्यं शान्तिमिच्छता ॥ ९१ ॥
गदाखड्गौ बाणच(क्रौ ? क्रे) दक्षिणास्त्रचतुष्टयम् ।
शङ्खखेटधनुःपद्मं (वामदंष्ट्रा?वामे दद्याच्) चतुष्टयम् ॥ ९२ ॥
अग्रतः पुरुषाकारं नारसिंहश्च दक्षिणे ।
अपरं स्त्रीमुखाकारं वाराहास्यं तथोत्तरम् ॥ ९३ ॥

इति वैकुण्ठः ।

---

९० । विष्णुधर्मोत्तरे ( ख० ३, अ० ८१ ) पद्मनाभीयत्वेनेदं लक्षणमुपलभ्यते, 'यादव' इति तत्र बोद्धव्यस्य भगवतः सम्बोधनमिहाविकलमुद्धृतमिति ज्ञातव्यम् ।

९१ । शान्तिमिच्छता कर्तव्यमष्टबाहुं वैकुण्ठं प्रवक्ष्यामीत्यन्वयो व्याकरणसंस्कारायातः ।

'वैकुण्ठञ्च प्रवक्ष्यामि सोऽष्टबाहुर्महाबलः ।
तार्क्ष्यासनश्चतुर्वक्त्रः कर्तव्यः शान्तिमिच्छता ॥'

इति रूपमण्डने ( ३ अ० ९२ श्लो० ) ।

९३ । अग्रत इति । एतच्च वैकुण्ठस्य चतुर्णामाननानां विवरणम् । तत्र अग्रत इति अग्रवर्त्ति मुखं पुरुषाकारं पुरुषमुखतुल्यम्, दक्षिणं मुखं नारसिंहं नरसिंहमुखतुल्यं सिंहास्यवदिति यावत्, नरसिंहलक्षणे 'रौद्रसिंहमुखेक्षणाम्' ( ७७ श्लो० ) इत्युक्तेः । अपरमिति पश्चान्मुखमित्यर्थः । वाराहास्यमिति शूकराननम् ।

सुतेजसं विश्वरूपं विश्वज्ञं सृष्टिकारकम्।
तस्य चानुक्रमं वक्ष्ये (विश्व ? विंश)द्भिर्हस्त(के
युः ? कैर्यु)तम् ॥ ६४ ॥
पताक(ा ?)शङ्खौ च हलं वज्रमङ्कुशसायकौ।
चक्रं तुङ्गश्च वरदौ दक्षिणेषु करेषु च ॥ ६५ ॥
पता(कं ? का) दण्डपा(शश्च ? शौ च) गदाशार्ङ्गविधृत्करम्।
पद्म( ?)शृ(ङ्गौ ? ङ्गी) च कुमुदमक्षमाला तथैव च ॥ ६६ ॥
योगमुद्रा कर(द्वयं ? द्वन्द्वे) वैनतेयोपरि स्थितम्।
नरश्च नारसिंहञ्च (तृतीयं?स्त्रीमुखं) शूकराननम् ॥ ६७ ॥
इति विश्वरूपः।
अनन्तानन्तरूपश्च यस्माद् वि(श्वं? श्व)समुद्भ(वम् ? वः)।
अनन्तशक्ति(मा ? सं)कीर्णमन(न्तं ? न्त?) रूपसंयुतम् ॥६८॥
संयुतं द्वादशभुजैश्चतुर्वक्त्रमहोत्सवम्।
सुपर्ण(केतोतराखं?स्कन्धमारूढं) कर्त्तव्यं सर्वकामदम् ॥६९॥

---

९४। यद्यपि 'विंशत्या हस्तकैर्युतम्' इत्येव समीचीनः पाठः, तथाऽप्यक्षरसाम्यमनुबद्धा 'विंशद्भिरि'ति कृतम्। भूरिप्रयोगश्चायं विंशच्छब्दस्त्रिंशदादिशब्दवत् पुराणादिषु, वचनविपर्ययोऽपि नगण्य एवैवंविधनिबन्धेषु। 'विंशत्या हस्तकैर्युक्तो विश्वरूपश्चतुर्मुखः' इति रूपमण्डने पाठः।

९७। नरश्चेति। यथाश्रुतपाठे तु विश्वरूपस्त्रिविध इत्यायाति। अत्र च विश्वरूपस्य मुखसङ्ख्यादर्शनात् सम्भवदपि तस्य त्रैरूप्यं तन्त्रान्तरविरोधीति कृत्वा परिहृतम्, पाठान्तरञ्च कल्पितम्। अत एव रूपमण्डने—

विंशत्या हस्तकैर्युक्तो विश्वरूपश्चतुर्मुखः।
पताका हलशङ्खौ च वज्राङ्कुशशरांस्तथा॥
चक्रञ्च बीजपूरञ्च वरो दक्षिणबाहुषु।
पताका दण्डपाशौ च गदाशार्ङ्गोत्पलानि च॥
शृङ्गी मषलमक्षञ्च क्रमात् स्युर्वामबाहुषु।

गदाखड्(गं ? गौ) तथा चक्रं वज्राङ्कुश(क ? श)राणि वै ।
शङ्खखेटौ धनुः पद्मं दण्डपाशावनन्तकः ॥ १०० ॥
नरं तथा नारसिंहं (तृतीयं?स्त्रीमुखं) शूकराननम् ।
तेजःपुञ्जोद्भवं कार्यमनन्तं नाम नामतः ॥ १०१ ॥

इत्यनन्तः ।

त्रैलोक्यमोहनं वक्ष्ये संसारमोहकारकम् ।
षोडशैव भुजास्तस्य तार्क्ष्यारूढं महाबलम् ॥ १०२ ॥
गदाचक्राङ्कुशान्येव बाणशक्तिसुदर्शनम् ।
वरदं करमुद्धृत्य शस्त्रा वै दक्षि(णस्त?णे त)था ॥ १०३ ॥
मुद्गरः पाशशार्ङ्गौ तु शङ्ख(ः) पद्मकमण्ड(लु ? लू) ।
श्रृङ्गी च वामहस्ते स्याद् योगमुद्रा करद्व(यम् ? ये) ॥१०४॥
नरश्च नारसिंहाख्यं शूकरं कपिलाननम् ।
द्विशत्त्यष्टशक्तियुतं कुर्यात् त्रैलोक्यमोहनम् ॥ १०५ ॥

इति त्रैलोक्यमोहनः ।

---

हस्तद्वये योगमुद्रा वैनतेयोपरि स्थितः ।
क्रमान्नरनृसिंहस्त्रीवराहमुखवन्मुखः ॥ ( ३ अ० ९९-९८ श्लो० )

इत्यस्य विश्वरूपस्य चतुर्मुखत्वं वैकुण्ठवत् प्रकारभेदञ्च प्रतिपादयति । मूले तुङ्गमित्यत्र लुङ्गमिति स्यात्, नामैकदेशे नाम इति मातुलुङ्गमित्यर्थः ।

१०१ । अत्रापि विश्वरूपवद् व्यवस्था । यद्वा उभयत्रापि 'तृतीयमि'ति 'स्त्रीमुखमि'त्यस्यानुकर्षणार्थम्, एवञ्च 'स्त्रीमुखम्' इति बन्धनीमध्ये पाठान्तरकल्पनं सुखार्थम् । रूपमण्डने मुखस्य विवरणं नास्ति । रूपमण्डनेऽनन्तलक्षणम्—( ३ अ० ९८-९९ श्लो० )

अनन्तोऽनन्तरूपस्तु हस्तैर्द्वादशभिर्युतः ।
अनन्तशक्तिसंवीतो गरुडस्थश्चतुर्मुखः ॥
दक्षिणे तु गदाखड्गौ चक्रं वज्राङ्कुशे शरः ।
शङ्खः खेटं धनुः पद्मं दण्डपाशौ च वामतः ॥ इति

१०२-१०५ । अत्र त्रैलोक्यमोहनस्य षोडशानां भुजानां चतुर्दशसु यथोक्तान्यस्त्राणि करद्वये योगमुद्रेति वर्त्तुलार्थः । श्रृङ्गी योगेन पर्वतमभिधत्ते ।

दक्षिणे पुण्डरीकाक्षः पूर्वे नारायणः स्मृतः ।
पश्चिमे (स्याद् ? स्यात्तु)गोविन्द उत्तरे मधुसूदनः ॥१०६ ॥
ईशाने स्थापयेद् विष्णुमाग्नेय्याञ्च जनार्दनम् ।
नैर्ऋत्ये पद्मनाभञ्च वायव्यां माधवं तथा ॥ १०७ ॥
केशवं मध्यतः स्थाप्यमथवा वासुदे( वं करम् ? वकम् ) ।
सङ्कर्षणप्रद्युम्नौ चानिरुद्धञ्च यथाक्रमम् ॥ १०८ ॥
जलशायी तथा प्रोक्तो दशावतारसंयुतः ।
शूकरश्चाग्रतः स्थाप्यः सर्वदेवमयः शुभः ॥ १०६ ॥

इति विष्णायतनम् ।

प्रतीहारांस्ततो वक्ष्ये अष्टौ चतुर्षु दिक्षु च ।
तस्यानुक्रमरूपञ्च लक्षयेद् यस्य यादृशम् ॥ ११० ॥
वामनाकाररू(पै ? पा)श्च कर्त्तव्याः सर्वतः शुभाः ।
तर्जनीशङ्खचक्रं चेदं प्राग् दक्षिणक्रमात् ॥ १११ ॥
(द ? च)ण्डाभिधानकः प्रो(क्ता शस्त्रा ? क्तोऽस्या)पसव्ये
प्रचण्डकः ।
वामे चण्डः प्रकर्त्तव्यः प्रचण्डो दक्षिणे तथा ॥ ११२ ॥

---

१०६ । 'गोविन्दः पश्चिमे स्थाप्य' इति रूपमण्डने ( ३ अ० ६३ श्लो० ) पाठः ।

१०८ । 'केशवो मध्यतः स्थाप्यो वासुदेवोऽथवा बुधैः ।
सङ्कर्षणो वा प्रद्युम्नोऽनिरुद्धो वा यथाविधि ॥' इति रूपमण्डने पाठः ।

११० । यस्य प्रतीहारस्य यादृशमनुक्रमरूपं भवेत्, तस्य तादृशमनुक्रमरूपं लक्षयेत्, वक्ष्यमाणलक्षणत इत्यर्थः । अनुक्रमः हस्तेषु वामदक्षिणादिक्रमेण ऊर्द्ध्वाधःक्रमेण चास्त्राणां सन्निवेशपरिपाटी । रूपम् आकृतिः ।

१११ । 'तर्जनीं शङ्खचक्रे च दण्डं प्राग् दक्षिणक्रमात्' इति स्यात् । एवमेव रूपमण्डने पाठः ( ३ अ० ६८ श्लो० ) ।

११२ । 'अपसव्ये प्रचण्डक' इत्युक्त्यैव सव्ये चण्डक इति लभ्यते; एवञ्च 'वामे चण्डः' इत्याद्यनुवादकमर्द्धं सुखार्थम् । यद्वा, सव्यशब्दस्य वामदक्षिणोभयवाचित्वेन अपसव्यशब्दस्यापि

पद्मखड्गं खेटकञ्च गदा (तासु ? तेषु) प्रदक्षिणे ।
विलोमैः पद्मग(मोक्ता ? दयोः) जयो विजयदक्षि(णैः ? णे) ॥
तर्जनी बाणचापञ्च गदा (तासु ? तेषु) प्रदक्षि(णाम् ? णा) ।
गदाऽपि सव्यतः कुर्याद् धाता तस्माद् विधातृकः ॥ ११४ ॥
तर्जनीपद्मशङ्खञ्च गदा (तासु ? तेषु) प्रदक्षि(णं ? णा ।
सव्यापसव्ययोगेन सुभद्रो भद्र एव च ॥ ११५ ॥

मूर्त्तेः प्रमाणगणनां गरुडध्वजस्य
ब्रह्मादयोऽमरगणा न हि ते समर्थाः ।
विश्वस्य पालनविधौ बहुधाप्रकारं
रूपाणि यस्य विचरन्ति स पातु विष्णुः ॥ ११६ ॥

इति विष्णुप्रतीहाराः ।

इति क्षेत्रात्मजसूत्रभृन्मण्डनविरचिते वास्तुशास्त्रे देवतामूर्त्तिप्रकरणे
विष्णुशालग्रामशिलापरीक्षादिभेदाधिकारो नाम
पञ्चमोऽध्यायः ॥ ५ ॥

---

तथात्वाच्चण्डो वा दक्षिणे प्रचण्डो वेति भ्रमः शिष्याणां मा भूदित्यसन्दिग्धार्थमुत्तरार्द्धमिति ज्ञातव्यम् ।

११३ । विलोमैः पद्मगदयोरिति ; जयस्य वामोर्ध्वादिहस्तेषु क्रमात् पद्मं खड्गः खेटकं गदा चेत्यायुधानीति पूर्वार्धस्यार्थः । ततश्चैषामायुधानां पद्मगदयोर्वैलोम्येन विजयस्याऽऽयुधं भवेत् इत्युत्तरार्धस्यार्थः, वैलोम्यञ्च पूर्वं गदायाः पश्चाच्च पद्मस्य सन्निवेशादिति ज्ञेयम् । एवञ्च 'विलोमैः पद्मगदयोर्विजयो जयदक्षिणे' इत्येवोचितः पाठः ।

११४-११५ । अनयोरपि गदाया एव सव्यापसव्ययोगेन व्यवस्थेति द्रष्टव्यम् ।

# षष्ठोऽध्यायः

—:०:—

शुक्लाम्बरधरं देवं शुक्लमाल्यानुलेपनम् ।
जटाभारसमायुक्तं बालेन्दुकृतशेखरम् ॥ १ ॥
त्रिलोचनं सौम्यमुखं कुण्डलास्यमलङ्कृतम् ।
दिव्यदेहं महाकायं नवयौवनमण्डितम् ।
महाभुजं महोत्साहं वरदाभयपाणिनम् ॥ २ ॥

इति सद्योजातः ।

---

१-२ । पञ्चमाध्याये वैष्णवे अशेषविशेषा विष्णुमूर्तीरभिधाय शिल्पिक्रियाऽविषयमपि शिलाचक्रं प्रसङ्गतो लक्षयित्वा षष्ठेऽध्यायेऽवसरप्राप्तं शैवं लक्षयन् आदौ सद्योजातमाह—शुक्लाम्बरधरमिति । इतः प्रभृति द्वितीयान्तानां पदानां 'कुर्यादि'ति वा 'कारयेदि'ति वाऽध्याहृतक्रिययाऽन्वयः कार्यः । सर्वाश्चैता मूर्तयः शिल्परत्ने ध्येयत्वेन निरूपिताः । तन्मतमनुहरद्भिस्तु 'ध्यायेदि'त्यध्याहृतक्रिययाऽन्वयः समाधेयः । प्रथमाघोरव्यतिरिक्तासु सदाशिवान्तास्वासु मूर्त्तिषु अस्या इदं लक्षणमित्यत्र पुष्पिकैव केवलं प्रमाणम् ।

शिल्परत्ने—सद्योजातवामदेवाघोरतत्पुरुषाणां समासतः श्लोकद्वयेन वर्णनमुपलभ्यते । तथाच तत्र 'अथ सद्योजातादिमूर्त्तयः' इत्युपक्रम्य—

सद्यो वेदाक्षमालाभयवरदकरः कुन्दमन्दारगौरो
वामः काश्मीरवर्णोऽभयवरदपरश्वक्षमालो विलासी ।
अक्षस्रग्वेदपाशाङ्कुशडमरुकखट्वाङ्गशूलान् कपालं
बिभ्राणो भीमदंष्ट्रोऽञ्जनरुचिरतनुर्भीतिदश्चाप्यघोरः ॥
विद्युद्वर्णोऽथ वेदाभयवरदकुठारान् दधत् पूरुषाख्यः
प्रोक्ताः सर्वे त्रिनेत्रा विधृतमुखचतुष्काश्चतुर्बाहवश्च ।
मुक्तागौरोऽभयेष्टाधिककरकमलोऽघोरतः पञ्चवक्त्र-
स्त्वीशो ध्येयोऽम्बुजन्मोद्भवमुररिपुरुद्रेश्वराः स्युः शिवान्ताः ॥

( शि० उ० २३ अ० २०२-२०३ श्लो० )

इत्युपनिबद्धम् । एतेनैतन्मते अघोरोऽष्टभुजः शिष्टाश्चतुर्बाहव इत्यायाति । प्रकृते विप्रवदमानेष्वप्यायुधनामसु संवदत्येवाघोरस्याष्टभुजत्वम् । आयुधानुमितमितरेषां द्विकरत्वन्तु साकरमवकरो वेति विद्वद्भिर्विभावनीयम् ।

रक्ताम्बरधरं देवं रक्तयज्ञोपवीतिनम् ।
रक्तोष्णीषं रक्तनेत्रं रक्तमाल्यानुलेपनम् ॥ ३ ॥
जटाकृतचन्द्रदेवं त्रिनेत्रं तुङ्गनासिकम् ।
मह्वा(रक्तं?वक्त्रं) महाबाहुं खड्गखेटकधारिणम् ॥ ४ ॥
रक्तास्यं रक्तनयनं रक्तकुण्डलधारिणम् ।
रक्तालङ्कारसंयुक्तं स(र्वा?र्पा)भरणभूषितम् ॥ ५ ॥

इति वामदेवः ।

दंष्ट्राकरालविकटास्यं सर्पशीर्षं त्रिलोचनम् ।
रुण्डमालाधरं देवं सर्पकुण्डलमेव च ॥ ६ ॥
भुजङ्गकेयूरधरं सर्पहारोपवीतिनम् ।
योनिशं (?) कटिसूत्रञ्च वृश्चिकामालिका गले ॥ ७ ॥
नीलोत्पलदलश्याममतसीपुष्पसन्निभम् ।
पिङ्गभ्रू पिङ्गजटिलं शशाङ्ककृतशेखरम् ॥ ८ ॥
तत्तकं पुष्टिकश्चैवं पादौ च नूपुरौ कृतौ(?) ।
अघोरस्य स्वरूपन्तु कालरूपमिवापरम् ॥ ९ ॥
महावीर्यं महोत्साहमष्टबाहुं महाबलम् ।
त्रासयन्तं रिपुबलं निवेशो यत्र भूतले ॥ १० ॥

---

६ । 'दंष्ट्राकरालवदनम्' इत्येवं कृते छन्दोहानिः पुनरुक्तिश्च परिहृते भवतः । रुण्डमालेति, रुण्डं कबन्धः, 'कबन्धो रुण्डमुच्यते' इति हारावली ।

७ । योनिशमिति दुरूहार्थस्यास्य पदस्य पाठान्तरमनुसन्धेयम् । वृश्चिकेति दीर्घत्वं छन्दःसौन्दर्यार्थम् ।

८ । अतसीति क्षुमापुष्पं नीलवर्णम् ।

९ । तक्षकमिति । अत्र 'तक्षकः पुष्टिकश्चैव पादयोर्नूपुरौ कृतौ' इति सुश्लिष्टार्थकः सम्भाव्यमानः पाठः । पुष्टिक इति सर्पविशेषस्य नाम, तक्षकः प्रसिद्धः ।

१० । निवेशो यत्र भूतले इति । यत्र भूभागे देवस्य निवेशः स्थितिस्तत्र रिपुबलं त्रासयन्तमित्यर्थः ।

खट्वाङ्गं (चक्र ? च क)पालञ्च खेटकं पाशमेव च ।
वामहस्तेषु कर्त्तव्यं (हस्तानां(?)शस्त्राणां) च चतुष्टयम् ॥११॥
त्रिशूलं परशुं खड्गं (चण्डं (?) चक्रं) चैवारिमर्दनम् ।
दक्षिणेषु करेषु स्यादेतच्छस्त्रचतुष्टयम् ॥ १२ ॥

इत्यघोरः ।

पीताम्बरधरं देवं पीतयज्ञोपवीतिनम् ।
मातु(लि?लु)ङ्गं करे वामे अक्षसूत्रञ्च दक्षिणे ॥ १३ ॥

इति तत्पुरुषः ।

शुद्धस्फटिकसङ्काशं जटाचन्द्रविभूषितम् ।
त्र्यक्षं दक्षे त्रिशूलञ्च वामहस्ते कपालिनम् ॥ १४ ॥

इतीशः ।

कपालमालिनं श्वेतं शशाङ्ककृतशेखरम् ।
व्याघ्रचर्मधरं भद्रं नागेन्द्रासनभूषितम् ॥ १५ ॥
त्रिशूलं चाक्षसूत्रञ्च कारयेद्दक्षिणे करे ।
कपालं कुण्डिका पाशं योगमुद्रा करद्वये ॥ १६ ॥

इति मृत्युञ्जयः ।

एकवक्त्रं त्रिनेत्रं च शशाङ्ककृतशेखरम् ।
बृहद्भालकपालं च कण्ठग्रीवासुशोभितम् ॥ १७ ॥
चतुर्भुजं महाबाहुं शूलपङ्कजधृत्करम् ।
दिव्यरूपधरं देवं वरदाभयपाणिकम् ॥ १८ ॥

इति विजयः ।

चतुर्भुजं महाबाहुं शुक्लाक्षिपाणिपादकम् ।
पुस्तकाभयहस्तञ्च वरदाक्षं द्विलोचनम् ॥ १९ ॥

इति किरणाक्षः ।

---

१६ । कुण्डिका कमण्डलुः । योगमुद्रा मुद्राविशेषः । तत्स्वरूपं श्रीतत्त्वचिन्तामणौ षोडशप्रकाशे द्रष्टव्यम् ।

१९ । वरदाक्षमिति वराक्षसूत्रकरमित्यर्थः ।

ज्वलत्पावकसङ्काशं खड्गहस्तं त्रिशूलिनम् ।
महाक्रोधधरं देवं भयत्तत्तं (?) महद्भयम् ॥ २० ॥

इत्यघोरः (?) ।

चित्रचन्द्रधरं (सूत्रं ? चित्रं) चित्रयज्ञोपवीतिनम् ।
चित्ररूपं महेशानं चित्रैश्वर्यसमन्वितम् ॥ २१ ॥
चतुर्बाहुं चैकवक्त्रं सर्वालङ्कारभूषितम् ।
खड्गचापशिरःखेटं शशाङ्ककृतशेखरम् ॥ २२ ॥

इति श्रीकण्ठमूर्त्तिः ।

त्रिलोचनं चतुर्बाहुं शुक्लनेत्रं करद्वयम् ।
दत्ते पाणौ च संपूर्णं चामृतं च रसं पिबेत् ॥ २३ ॥
अक्षसूत्रं तथा वामे महादेवमुमार्चितम् ।
रुद्रमेकादशं प्रोक्तं महदैश्वर्यकारकम् ॥ २४ ॥

इति महादेवः ।

पद्मासनशिवच्छायां योगासनकरद्वयम् ।
पञ्चवक्त्र(भ ? म)यं शक्तिशूलखट्वाङ्गधृत्करम् ॥ २५ ॥
भुजङ्गमक्षसूत्रं च डमरुं मातु(लि ? लु)ङ्गकम् ।
इच्छा ज्ञानं(कलावित्य ? क्रिया चेति) त्रिनेत्रं ज्ञानतार्णवम् ॥२६॥

इति सदाशिवः ।

अर्द्धनारीश्वरं वक्ष्य उमादेहार्धधारिणम् ।
वामाङ्गे च स्तनं कुर्यात् कर्णे वै तालपत्रकम् ॥२७॥
व्यालका वामकर्णे तु दक्षिणे कुण्डलं स्थितम् ।
मुकुटाग्रे च माणिक्यं जटाभारं स्वदक्षिणे ॥ २८ ॥

---

२८ । व्यालकेति यथाश्रुतपाठे शाब्दक्रमादार्थक्रमस्य बलवत्त्वाद् दक्षिणे कर्णे व्यालका व्यालाः सर्पाः वामे च कुण्डलमित्यर्थः । ततश्च—

अर्धं तस्य(त्रयो रूपः(?) स्त्रिया रूपं) सर्वाभरणभूषितम् ।
पुरुषं दक्षिणे भागे कपालकटिमेखला ॥ २९ ॥
त्रिशूलं चाक्षसूत्रञ्च दक्षयोः करयोस्तथा ।
कमण्डलुं दर्पणञ्च गणेशं (व्याप्य ? वाम) उच्यते ॥३०॥

इत्यर्द्धनारीश्व(रौ?रः) ।

उमामहेश्वरं वक्ष्य उमया सह शङ्करम् ।
मातु(लि?लु)ङ्गं त्रिशूलञ्च बिभ्र(ते?तं) दक्षिणे करे ॥ ३१ ॥
अध(स्तब्दषभं?स्ताद्दषभं) कुर्यात् कुमारञ्च गणेश्वरम् ।
भृङ्गिरीटं तथा कुर्यान्नियमान्नृत्यसं(स्थिता?स्थितम् ) ॥३२॥

इत्युमामहेश्वरौ ।

कृष्णशङ्कर(ततो?मतो) वक्ष्ये कृष्णा(र्थेनस्तु ? र्द्धेन तु) संयुतम् ।
कृष्णार्धे मुकुटं कुर्याज्जटाभारञ्च दक्षिणे ॥ ३३ ॥
कुण्डलं दक्षिणे भागे वामे मकरकुण्डलम् ।
अक्षमाला त्रिशूलञ्च चक्रं वै शङ्खमेव च ॥ ३४ ॥

(इत्य?इति) कृष्णशङ्करः ।

पद्मशक्तिखेटशङ्खं मूर्त्ति(ः?) स्यात् कृष्ण(तार्त्तिकः?कार्त्तिकी) ।

(इत्य?इति) कृष्णकार्त्तिकेयः ।

पद्मशङ्खध्वजाचिह्नं तार्क्ष्यारू(ढो?ढं) गरुडध्व(जः?जम् ) ॥३५॥

---

'वासुकिं दक्षिणे कर्णे वामे कुण्डलमादिशेत्'

( मत्स्य० २६० अ० ३ श्लो० )

इति मत्स्यपुराणीयपद्यार्द्धमपि अनुग्राहकपक्षे पदं निदधाति । एतेन—'कर्णे वै तालपत्रकमि'ति पूर्वश्लोकीयपादं सम्पातायातमिति सम्भाव्यते । 'व्यालका' इत्यत्र 'बालिके'ति कल्प्यमान-पाठे बालिका कर्णभूषणम्, ततश्च वामकर्णे तालपत्रं बालिका चेति कर्णभूषणद्वयम् । एवञ्च शब्दक्रमेणैवार्थो भवति ।

३२ । भृङ्गिरीट इति शिवानुचरस्य नाम ।

शिवनारायणं वक्ष्ये सर्वपापप्रणाशनम् ।
वामार्द्धे माधवं विद्याद्दक्षिणे शूलपाणिनम् ॥ ३६ ॥

बाहुद्वयञ्च कृष्ण(श्च?स्य) मणिकेयूरभूषितम् ।
शङ्खचक्रधरं शान्तमारक्ताङ्गु(ली?लि)विभ्रमम् ॥ ३७ ॥

चक्रस्थाने गद(ां)वाऽपि पाणौ दद्यादधस्तने ।
शेषं वा दक्षिणे दद्यात् कट्यर्धं भूषणोज्ज्वलम् ॥ ३८ ॥

पीतवस्त्रपरीधानं चरणं मणिभूषितम् ।
दक्षिणार्धजटाभार(मर्धं दुष्कृत?मर्द्धेन्दुकृत)लक्षणम् ॥ ३९ ॥

भुजङ्गहारवलयं वरदं दक्षिणं करम् ।
द्वितीयं चापि कुर्वीत त्रिशूलवरधारिणम् ॥ ४० ॥

व्यालोपवीतसंयुक्तं कट्य(र्धं कृत?र्धे कृत्ति)वाससम् ।
मणिरत्नैश्च संयुक्तं पादं नागविभूषितम् ॥ ४१ ॥

इति शिवनारायणः ।

एकपीठसमारूढं तनु(त्येक?त्रय)निवासिनम् ।
षड्(वक्त्रश्च ? भुजश्च) चतुर्वक्त्रं सर्वलक्षणसंयुतम् ॥४२॥

अक्षसूत्रं त्रिशूलञ्च गदाञ्चैव तु दक्षिणे ।
कमण्डलुञ्च खट्वाङ्गं चक्रं वामभुजे तथा ॥ ४३ ॥

इति ह(री?रि)हर(पी?पि)तामहः ।

---

३८। 'शेषं वा दक्षिणे दद्यादि'त्यत्र 'शङ्खं चैवोत्तरे दद्यादि'ति मत्स्यपुराणे (२६० अ०, २४ श्लो०) पाठः ।

४२। द्वाचत्वारिंशश्लोकात्त्रिचत्वारिंशश्लोकं यावदेकं हरिहरपितामहलक्षणम्, पुनश्चतुश्चत्वारिंशश्लोकात् षट्चत्वारिंशश्लोकं यावदन्यद् हरिहरपितामहलक्षणमिति ; किमभिसन्धानमूलेयं लक्षणद्वयीति नावधारयामः। न चैका पुष्पिकैव खपुष्पायतामिति वाच्यम् ; उभयो-

चतुर्वक्त्रमष्टबाहुं चतुष्कैकनिवासिनम् ।
ऋद्धा(?)मुखगतः कार्यः पद्महस्तो दिवाकरः ॥ ४४ ॥
खट्वाङ्गत्रिशूलहस्तो रुद्रो दक्षिणतः शुभः ।
कमण्डलुश्चाक्षसूत्रमपरस्थः पितामहः ॥ ४५ ॥
शङ्खचक्रधरो हरिर्वामे चैव तु संस्थितः ।
एवं विधेय(?)कर्त्तव्यं सर्वकामफलप्रदम् ॥ ४६ ॥

इति (सूर्य?)हरिहरपितामहः ।

षड्भुजश्च चतुर्वक्त्रं सर्वाभरणभूषितम् ।
कमण्डलुश्चाक्षसूत्रमुभयोः कमलधृत्करम् ॥ ४७ ॥
मणा(?)लोद्ध्वं युग्महस्ते कर्त्तव्ये शुभलक्षणे ।
सर्वाभरणसंयुक्तं सर्वकामफलप्रदम् ॥ ४८ ॥

इति चन्द्राङ्कपितामहः ।

लेलिहन्तं दंष्ट्राकरालं चण्डभैरवमुत्तमम् ।
एकवक्त्रं शूलहस्तं खड्गशक्तिशराङ्कुशम् ॥ ४९ ॥
वरदं दक्षिणे ज्ञेयं खट्वाङ्गं खेटकं तथा ।
चापं तथाऽभयं चैव कपालं वामहस्तके ॥ ५० ॥

---

र्लक्षणयोर्भिन्नतयैकस्य वस्तुनः प्रतिपादकत्वानुपपत्तेः । तस्माद् द्वितीयहरिहरपितामहलक्षणे 'दिवाकर'पददर्शनात् सूर्यहरिहरपितामहस्येदं लक्षणमिति निश्चिनुमः । 'तनुत्रयनिवासिनमि'ति सम्भाव्यमाने पाठे एतेषां पृथङ्मूर्त्तयः कर्त्तव्या इत्यर्थः ।

४४ । चतुर्वक्त्रमिति द्वितीयान्तपदानामन्वयो दुर्घटः । चतुष्कैकनिवासिनमिति, एकस्मिन् चतुष्कोणे स्थाने चतुष्कोणवत्यासने वा समासीनम् । ऋद्धामुखगत इति, रुद्रस्य दक्षिणे, हरेर्वामे, पितामहस्य पश्चिमे सन्निवेशदर्शनादयं पूर्वदिक्स्थ इत्यायाति, क्वचित्तदर्थद्योतकमिदं पदं स्यादनर्थकं वेति सुधीभिर्भाव्यम् ।

४६ । द्वितीयार्द्धे 'एवंविधोऽयं कर्तव्यः सर्वकामफलप्रदः' इति स्यात् ।

४७-४८ । चन्द्राङ्कपितामहोऽनुसन्धेयस्वरूपः ।

द्वाभ्यां वै गजचर्म स्यान्मुण्डमालाविभूषितम् ।
(इद?ईद्द)शं कारयेत् प्राज्ञश्चण्डभैरवमुत्तमम् ॥ ५१ ॥

इति चण्डभैरवः ।

विरूपाक्षस्ततः खड्गं शूलं डमरुमङ्कुशम् ।
सर्पं चक्रं गदामक्षसूत्रं बिभ्रत् कराष्टके ॥ ५२ ॥
खेटं खट्वाङ्गशक्ति(श्च?श्व) परशुतर्जनीघटम् ।
घण्टाकपाल(क्त्रौ?कौ) चेति (वामार्धा?वामोर्ध्वा)दिकराष्टके ॥५३॥

इति विरूपाक्षः ।

त्र्यम्बकोऽपि दधच्चक्रं डमरुं (मुदरं ? मुद्गरं) शरम् ।
शूलाङ्कुशाहिजाप्यञ्च दक्षोर्ध्वादिकराष्टके ॥ ५४ ॥
गदाखट्वाङ्गपात्राणि कार्मुकं तर्ज(नी ? नीं) घटम् ।
परशुं पट्टिशं चैव वामोर्द्ध्वादिक्रमेण वै ॥ ५५ ॥

इति त्र्यम्बकः ।

कार्यो हरिहर(स्या?श्चा)पि दक्षिणार्द्धे सदाशिवः ।
वामार्द्धे च हृषीकेशः श्वेतनीलाकृ(तिः?ती) क्रमात् ॥ ५६ ॥
व(रं?र) त्रिशू(लं?ल) चक्राब्जधारिणो बाहवः क्रमात् ।
दक्षिणे वृष(भे?भः) पार्श्वे वामे विहगराडिति ॥ ५७ ॥

इति हरि-हरमूर्त्तिः ।

कृ(ष्णा?ष्ण)शङ्करसंयोगाद् द्वात्रिंशद्भेद-(मर्जयः ? मूर्त्तयः) ।
नोदिता ग्रन्थबाहुल्याज् (ज्ञेयादियार्णवा?) बुधैः ॥ ५८ ॥

---

५४-५५ । अहिजाप्यमिति अहिः सर्पः जाप्यं जपसाधनमक्षसूत्रमिति यावत् । गदा-खट्वाङ्गेति । पात्रं नृकपालम् । एतेनायं षोडशभुज इति सिद्धम् । पूर्वोक्तो विरूपाक्षोऽपि तथा ।

अथ लिङ्गानि

अष्टलोहानि लिङ्गार्थे स्वर्णं रौप्यञ्च ताम्रकम् ।
कांस्यपित्तलवङ्गानि नागं लोहं तथाऽष्टमम् ॥५९॥

[ धातुलिङ्गमानम् ]

एकाङ्गुलाद् धातुमयं यावदष्टाङ्गुलोदयम् ।
एकैकस्याङ्गुलस्याष्टौ लिङ्गान्यष्टौ ततः पुनः ॥६०॥

---

५९। अथ लिङ्गान्याह—अष्टलोहानीति। एतेऽष्टौ धातव एवाष्टलोहनाम्नाऽभिधीयन्ते लोहशब्दस्य धातुपर्यायेऽन्तःपातात्। तत्र वङ्गं रङ्गापरनामा धातुविशेषः, नागं सीसकम्। लिङ्गफलान्युक्तानि रूपमण्डने ( अ० ४, श्लो० ३७-४१ )।

स्थिरलक्ष्मीप्रदं हैमं राजतञ्चैव राज्यदम् ।
प्रजावृद्धिकरं ताम्रं वाङ्मायुर्विवर्धनम् ॥
विशेषकारकं कांस्यं पित्तलं भुक्तिमुक्तिदम् ।
सीसकञ्च शक्तलिङ्गम् आयसं रिपुनाशनम् ॥
अष्टलोहमयं लिङ्गं कुष्ठरोगक्षयापहम् ।
त्रिलोहसम्भवं लिङ्गमन्तर्धानप्रसिद्धिदम् ॥
आयुष्यं हीरकं लिङ्गं भोगदं मौक्तिकोद्भवम् ।
सुखकृत् पुष्परागोत्थं वैदूर्यं शत्रुमर्दनम् ॥
श्रीप्रदं पद्मरागञ्च इन्द्रनीलं यशःप्रदम् ।
लिङ्गं मणिमयं पुष्ट्यै स्फाटिकं सर्वकामदम् ॥ इति ।

शिल्परत्नेऽपि प्रायेणैवमेव फलानि। ( शिल्प० उत्तरभाग० अ० १, श्लो० ३८-४१ )।

६०। एकाङ्गुलादिति। धातुमयानि लिङ्गानि एकाङ्गुलादारभ्य यावदष्टाङ्गुलमुन्नतानि स्युः। एवञ्चाष्टौ लिङ्गानि भवेयुः, ततः पुनरेकैकस्याङ्गुलस्याष्टौ लिङ्गानि भवेयुः, स्वर्ण-रौप्यादिभेदेनेत्यर्थः, इति व्युत्क्रमेण व्याख्येयम्। तथा च एकाङ्गुलादष्टाङ्गुलान्तानि स्वर्ण-लिङ्गान्यष्टौ, एवं राजतानि एवं ताम्राणीत्यादि। यद्वा एकैकस्य अङ्गुलस्याष्टौ लिङ्गानीति वक्ष्यमाणमनोहरादिसंज्ञाभेदेनेत्यर्थः, तथाच एकाङ्गुलादष्टाङ्गुलान्तानि मनोहरलिङ्गान्यष्टौ एवं श्रीमुखलिङ्गानीत्यादि। अत्र च पक्षे अविशेषाद् वक्ष्यमाणेषु शैलदारवादिलिङ्गेष्वप्येवं भेदस्याऽऽवश्यकत्वेनास्योपलक्षणपरत्वं व्याख्येयम्।

यद्वा, तृतीयपादे 'एकैकस्याङ्गुल्यस्यद्धर्या' इति कृतशुद्धिः पाठः। ऋद्धिर्वृद्धिरिति नार्थान्तरम्। तथाच एकाङ्गुलादारभ्य एकैकस्याङ्गुलस्य वृद्ध्या लिङ्गान्यष्टौ भवन्ति। शिल्परत्ने अङ्गुलीनां वृद्धेस्तारतम्यतो लोहलिङ्गस्य द्वैविध्यमुक्तम्। तथाच—

[ धातुलिङ्गनामानि ]

(१)मनोहरं (२)श्रीमुखञ्च (३)रुद्रतेजो(४)महोत्सवम् ।
(५)आनन्दञ्च (६)सुवक्त्राख्यं (७)स्त्रीपुंजं (८)नन्दिवर्धनम् ॥६१॥

[ धातुलिङ्गे विशेषः ]

(लोह?लौहं) मिश्रं न कर्त्तव्यं स्वमा(त्रं योनि?त्रयोनि)संयुतम् ।

[ रत्नलिङ्गम् ]

कर्त्तव्यं धातुलिङ्गस्य प्रमाणेन हि रत्नजम् ॥६२॥

इति धातुरत्नलिङ्गानि ।

---

अष्टाङ्गुलं समारभ्य ( द्विद्वय ? चाष्टा )ङ्गुलविवर्धनात् ।
लौहानि नव लिङ्गानि त्रिहस्तान्तानि कारयेत् ॥
तथाऽष्टाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात् ।
त्रिहस्तान्तानि लिङ्गानि त्रयस्त्रिंशद् भवन्ति हि ॥

( उत्तरभाग० २ अ० ५४-५५ श्लो० )

इत्यादौ अष्टाङ्गुलवृद्धिभाञ्जि नव लिङ्गानि, अनन्तरञ्च द्विद्व्यङ्गुलवृद्धिभाञ्जि त्रयस्त्रिंशत्संख्यकलिङ्गानीत्युक्तम् । मानन्तूभयत्रैवाष्टाङ्गुलत आरब्धम् । रूपमण्डनेऽपि अष्टाङ्गुलारब्धमानकानि अष्टाङ्गुलवृद्धिमन्ति नवैव लौहलिङ्गानि । तथाच—

धातोरष्टाङ्गुलं पूर्वमष्टाष्टाङ्गुलवर्धनात् ।
त्रिहस्तान्तं नवैव स्युर्लिङ्गानि च यथाक्रमम् ॥ इति ।

( अ० ४, श्लो० ५१ ) ।

एवञ्च स्वकृताद् रूपमण्डनात् परकृताच्छिल्परत्नाच्चान्यादृशस्यास्य धातवलिङ्गानां लक्षणस्य मूलमन्यत्र शास्त्रारण्येऽनुसन्धेयम् ।

६१ । अष्टानां धातवलिङ्गानां नामान्याह—मनोहरमिति । एतानि नामानि नान्यत्रोपलभ्यन्ते । एवमुत्तरत्रापि दारुजादिलिङ्गानाम् । शिल्परत्ने अष्टादशलिङ्गनामान्युक्तानि ( शिल्प० उ० अ० २, श्लो० १-५ ) ।

६२ । लौहमिति । लौहं धातवं लिङ्गं मिश्रं धात्वन्तरसंयुतं न कर्तव्यम् । यद्यपि धातुष्वपि केचनान्योन्यसंकरजन्मानो वर्तन्ते, अत एव तानुद्दिश्य निन्दाऽपि श्रूयते—

मुख्यलोहानि चत्वारि हेमादीनि शुभानि हि ।
पिशाचलोहान्यन्यानि कांस्यादीनीति केचन ॥ इति ।

( शिल्प० उ० अ० १ ४१-४२ श्लो० )

तथाऽप्यद्यतनमिश्रणव्यावृत्त्यर्थमेतदित्यनुसन्धेयम् । यच्चोत्तरपादे पीठिकालक्षणघटकीभूत'स्वमात्र'-

[ दारवलिङ्गमानम् ]

षोडशाङ्गुललिङ्गञ्च (षोडशा ?एकैका)ङ्गुलवर्धनात् ।
लिङ्गा(ना ?न्या)रसह(स्ना ?स्ता)न्तमष्टाविंशोत्तरं शतम् ।
क्रमेण नव लिङ्गानां षट्(का ?क)रान्तानि संख्यया ॥६३ ॥

---

पद्व्यावर्त्तनीयमनेनाऽऽद्यपादेन दर्शितम्, तथाच पीठिका लोहमिश्रा न कर्त्तव्येति वर्त्तुलोऽर्थः । यद्वा लोहमिश्रं लोहान्तरमिश्रं लिङ्गमिति शेषः, न कर्त्तव्यम् । एवञ्च यथाश्रुत एव पाठः प्रथमपादे ।

स्वमात्रेति । लिङ्गं स्वमात्रयोनिसंयुतं कर्तव्यम् इत्यन्वयः । स्वमात्रं येन धातुना कृतं लिङ्गं तन्मात्रं तेन कृता योनिः पीठिका तया संयुतं लिङ्गं कुर्यादित्यर्थः, न त्वेकेन धातुना घटिते लिङ्गे धात्वन्तरेण पीठिका कर्तव्येति भावः । तदेतत् सर्वं विशिष्याऽऽह शिल्परत्ने—

स्वयोनिः पीठिकैव स्याच्छैलादीनामदूषणा ।
अभावे त्वैष्टकी शैले रत्नजानां हिरण्मयी ॥
राजती ताम्रजा वा स्याच् श्रेष्ठमध्याधमक्रमात् ।
न्यूनैर्वा परलोहानामिष्टकाभिश्च दारवे ॥ इति ।

( उ० अ० १, ९७-९८ श्लो० )

रूपमण्डनेऽपि—

रत्नलिङ्गं द्विधा ख्यातं स्वपीठं धातुपीठकम् ।
धातुजन्तु स्वयोनिस्थं सिद्धिभक्तिप्रदायकम् ॥
ताम्रजं पुष्परागस्य स्फाटिकस्य तु राजतम् ।
ताम्रजं मौक्तिकस्यापि शेषाणां हैमजं मतम् ॥ इति

( रूप० अ० ४, ४२-४३ श्लो० )

एवमुत्तरपादे सम्भविनमर्थं प्रस्तुवानोऽपि यथाश्रुतः पाठः प्रमाणान्तरानुग्रहाभावादुपेक्षितः । अतिरोहितार्थश्च यथाश्रुतः पाठः । उक्तमर्थं रत्नलिङ्गेऽप्यतिदिशति—कर्तव्यमिति । सन्नप्यन्यत्र रत्नलिङ्गविषये विशेषो नेह प्रपञ्चित इति द्रष्टव्यम् ।

६३ । षोडशेति । एवमेव शिल्परत्न( उ० अ० २, श्लो० ९६ )रूपमण्डनयोः ( अ० ४, श्लो० ५२ ) । त्र्यर्धस्यास्य पद्यस्य प्रथमार्धे यथोक्तशोधनं विना मध्यमार्धे लिङ्गसंख्या दुरुपपादा । तथाहि येय'मष्टाविंशोत्तरं शतम्' इति संख्या श्रूयते सा किं लिङ्गानामुताङ्गुलीनामिति विचार्यमाणे न लिङ्गानामित्यापातत आयाति । कथमिति चेद् रसहस्तमवधीकृत्य षोडशाङ्गुलादारभ्य षोडश-षोडशवर्धनेन नवैव लिङ्गानि भवेयुर्न यथोक्तानि । नाप्यङ्गुलीनाम्, यथोक्तसंख्याकाभिरङ्गुलीभी रसहस्तानिष्पत्तेः । तस्मादत्र क्वचित् कश्चिद् भ्रमः कल्पनीय

[ दारवलिङ्गनामानि ]

(१)मकरेन्दु च (२)मांलक्यं (३)पुष्पं (४)सिद्धार्थकं ततः ।
(५)दण्डाख्यं (६)प्रौरवं (७)काम्यं (८)पुष्पकञ्च (९)फलोद्भवम् ॥६४॥

[ लिङ्गोचितवृक्षाः ]

श्रीपर्णी शिशुकाशोकः शिरी(ष ? षः) खदिरोऽर्जुनः ।
चन्द(न ? नः) श्रीफलो निम्बो रक्तचन्दनवीर्यकौ ॥६५॥
कर्पूरो देवदारुश्च स्यन्दनः पारिजातकः ।
चम्पको मधुवृक्षश्च (हिताश्चागरुडः?हिन्तालश्चागुरुः) शुभः ॥६६॥

[ वृक्षाणां लक्षणोद्धारः ]

निव्र(णा ?ः सु ) दृढा वृत्ता लिङ्गार्थे सौख्यदाय(कः ? काः) ।
ग्रन्थिकोटरसंयु(क्ता ?क्तान्) शाखोद्भू(ता ?तान्)
परित्यजेत् ॥ ६७ ॥

[ लिङ्गोचितानि गृहाणि ]

निलयं दारुलिङ्गानाम् इष्टकादारुजं शुभम् ।
शैलजं धातुलिङ्गानां स्वरूपं वाऽधिकं शुभम् ॥६८॥

इति दारुजा(ती ? नि) ।

[ शैललिङ्गमानम् ]

एकहस्तादिमं लिङ्गं हस्तवृद्ध्या नवान्तिकम् ।
शैललिङ्गस्य मानन्तु हस्त(हितं ? हीनं) न कारयेत् ॥६९॥

---

इति द्वितीयपादे शुद्धिः कृता । ततश्च षोडशाङ्गुललिङ्गमारभ्य एकैकाङ्गुलवर्धनाद् रसहस्तं यावल्लिङ्गानि यथोक्तसंख्याकान्येव स्युरिति सर्वमनवद्यम् । 'आरसे'त्यादावाङ् मर्यादायाम् एकाङ्गुलोनरसहस्तान्तमित्यर्थः, एवमेवाष्टाविंशोत्तरशतसंख्या स्यात् । मध्ये शुद्धिस्तु प्रास्ताविक्येव ।

६४ । नवानां लिङ्गानां नामान्याह—मकरेन्दु चेति ।

६९ । लिङ्गवृक्षानाह—'श्रीपर्णी'त्यादि 'हिन्तालश्चागुरुः शुभः' (६६) इत्यन्तेन । 'स्यन्दन' इत्यत्र 'चन्दन' इति प्रामादिकः पाठो रूपमण्डने ( अ० ४, श्लो० ९६ ) ।

६९ । शैललिङ्गमानमाह—एकेति । एकहस्ततो नवहस्तान्तं शैललिङ्गं कुर्यात् ।

## हस्तादिपादवृद्धया च (भयत्तिं ? त्रयस्त्रिं)शत् क्रमेण वै ।
## लिङ्गानि (न च ? नव) हस्तान्तं—

७०। पूर्वोक्तानां नवानां लिङ्गानां निर्माणक्रमेण त्रयस्त्रिंशत्त्वमाह—हस्तादीति। 'हस्तहीनं न कारयेदि'त्युक्तत्वादेकहस्तमारभ्य एकहस्तं सपादहस्तं सार्द्धहस्तं पादोनद्विहस्तमित्यादिक्रमेण पादशो वर्द्धितानि लिङ्गानि नवहस्तं यावत् त्रयस्त्रिंशत्संख्यकानि भवन्तीत्यर्थः।

रूपमण्डने—

हस्तादि नवहस्तान्तं शैलं लिङ्गं विधीयते।
हस्तवृद्धया नवैव स्युर्मध्ये वृद्धिर्यदृच्छया॥ ( अ० ४, श्लो० ९३ )

इति हस्तादिनवहस्तान्तं लिङ्गमानं नियम्य या चेह पादवृद्धिरुक्ता तत्रौदासीन्येन याद‍ृच्छिकवृद्धिस्तत्र प्रतिपादितेति ज्ञेयम्। शिल्परत्ने पुनः—

(सप्त ? एक)हस्तोच्चमारभ्य पादवृद्धा तु पूर्ववत्।
श्रेष्ठानि नवलिङ्गानां त्रयस्त्रिंशदुदाहृतम्॥

( उ० अ० २, श्लो० २४-२५ )

इत्यनेन प्रकृता पादवृद्धिः समर्थिता दृश्यते।

लिङ्गमानं तावत् नवधा भवेत्। तथाच—

लिङ्गं गर्भगृह(१)द्वार(२) स्तम्भा(३)धिष्ठान(४)किष्कुभिः (५)।
ताल(६)मानाङ्गुलै(७)श्चापि तथा मात्राङ्गुलै(८)रपि॥
यजमानोच्चमानेन (९) चैवं नवविधं स्मृतम्॥ इति।

( शिल्प० उ० अ० २, श्लो० १३ )।

क्वचित् सप्तधेत्यपि। तथाच—

गर्भगेहप्रमाणञ्च द्वारमानं तथैव च। स्तम्भञ्च कालमानञ्च हस्तताङ्गुलं तथा॥

लिङ्गमानं ध्रुवं सप्त·········। ( काश्यप० अ० ४९, श्लो० ६९-७० )

इति। इह तु त्रिधा लिङ्गमानमुक्तम्। तत्र मानाङ्गुलेन पूर्वमुक्तं प्रासादगर्भमानाभ्यामिदानीमुच्यते। प्रासादमानेन लिङ्गमानकथनस्यायमभिप्रायः—एवं हि तन्त्रयुक्त्या लिङ्गमानं लिङ्गोचितप्रासादमानञ्चोक्तं भवतीति। तदुक्तं मात्स्ये—

प्रासादस्य प्रमाणेन लिङ्गमानं विधीयते।
लिङ्गमानेन वा विद्यात् प्रासादं शुभलक्षणम्॥ इति।

( मत्स्य० अ० २६३, श्लो० २ )।

[ शैललिङ्गनामानि ]

(१)श्रीभवं (२)(नु ?तू)द्भवं (३)भवम् ॥७०॥

(४)भयहृत् (५)पाशहरणं (६)पापहस्तेज उच्यते ।

ततः परं (७)महातेजा (८)परापर(९)म(खे ? हे)श्वरम् ॥७१॥

(१० शेखरञ्च (११)शिवं (१२)शान्तं (१३)मनोह्लादकरं ततः ।

(१४)रुद्रतेजः (१५)सदात्मज्ञं (१६)वामदेव (१७)मघोरे(१८)श्वरम् ॥७२॥

(१९)तत्पुरुषं (२०)तथेशानं (२१)मृत्युञ्जय(२२)विजयक्रमात् ।

(२३)किरणाक्ष(२४)महोरास्त्रं (२५)श्रीकण्ठं (२६)मुनिवर्धनम् ॥७३॥

(२७)पुण्डरीकं (२८)सुवक्त्राख्यम् (२९)उमातेजं (३०)विश्वेश्वरम् ।

(३१)त्रिनेत्रं (३२)त्र्यम्बकं चैव (३३)महाकालश्च नामतः ॥७४॥

[ प्रासादमानेन लिङ्गमानम् ]

हस्तमानं भवेल्लिङ्गं वेदहस्ते सुरालये ।

(ये ? ज्ये)ष्ठलिङ्गन्तु (वेदेशं ? वेदांशे) षट्त्रिंशे नवहस्तकम् ॥७५॥

पञ्चादिभूतवेदा(न्तं ? न्ते) प्रासादे हस्तसंख्यया ।

मध्यमं पञ्चमांशेन हस्तादिनवहस्तकम् ॥७६॥

रित्यादि(?)युगलं चान्ते हस्तसंख्या शिवालये ।

षडंशेन प्रकर्त्तव्यं हस्तादि (भव ?नव)हस्तकम् ॥७७॥

---

७६। प्रासादमानस्यावधिमाह—पञ्चादीति। पञ्चसंख्याया आदिः पञ्चादिः चतुः-संख्येत्यर्थः। तथा च चतुर्हस्ततो भूतवेदान्ते पञ्चचत्वारिंशद्धस्तमिते प्रासादे हस्तसंख्यया लिङ्गं स्थाप्यमित्यर्थः। 'हस्तमानं भवेल्लिङ्गम्' इत्युक्तत्वादेवमनार्जवेन व्याख्यातम् ।

७७। 'रित्यादियुगल'मित्ययं दुर्ग्रहार्थः पाठः। यच्च समानतन्त्रे रूपमण्डने 'कृत्वा द्वियुगलम्' ( अ० ४, श्लो० ६२ ) इति पाठः सोऽपि दुर्ज्ञेयप्रकृतोपयोग इत्युपेक्षितः ।

'अतिकोमलमेकतोऽन्यतः सरसाम्भोरुहवृन्तकर्कशम्' ।

कनि(ष्ठा ये ? ष्ठज्ये?)ष्ठलिङ्गेषु मध्यमामध्यमेषु च ।
प्रासा(द?दाः)कन्यसे (यष्टां ?ज्येष्ठाः) सीमा-
(न ?मान)मिदं स्मृतम् ॥७८॥

[ गर्भगेहमानेन लिङ्गमानम् ]

गर्भे पञ्चांशके त्र्यंशे (न्यष्टे ?ज्येष्ठ)लिङ्गन्तु मध्यमम् ।
नवांशे पञ्चभागे (स्याद्धर्मार्थं ?स्याद्गर्भार्धे) कन्यसोदयम् ॥७६॥
धातुजे रत्नजे चैव शम्भुबाणे च (दारुणे ? दारवे) ।
गृहं न्यूनाधिकं प्रोक्तं वक्त्रलिङ्गे(षु ? च) पार्थिवे ॥८०॥

---

७९। इदानीं गर्भगेहमानेन लिङ्गमानमाह—गर्भ इति । पञ्चभागीकृतस्य गर्भगेहस्य त्र्यंशेन परिमितं लिङ्गं ज्येष्ठं भवेत्, एवं नवधा कृतस्य तस्य पञ्चांशेन मध्यमम्, द्विधा कृतस्य च तस्यार्द्धेन कनिष्ठमित्यर्थः । मात्स्ये—

भागार्धेन तु यल्लिङ्गं कार्यं तदिह शस्यते ।
पञ्चभागविभक्तेषु त्रिभागो ज्येष्ठ उच्यते ।
भाजिते नवधा गर्भे मध्यमं पाञ्चभागिकम् ॥

इति ( अ० २६३, श्लो० ७-८ )

गर्भगृहस्वरूपमाह समराङ्गणसूत्रधारे—

शालानां यत् पुनर्मध्यं वापी पुष्करिणी च सा ।
संछन्ना ( चा ? सा )पि यस्य स्यात् तद् गर्भगृहमुच्यते ॥ इति ।

( अ० १८, श्लो० २० ) ।

तन्मानन्तु—

प्रासादस्य त्रिभागैकं सप्तभागानलांशकम् ।
विशेषाद् गर्भगेहस्य विस्तारं प्राह काश्यपः ॥ इति ।

( शिल्प० पूर्व० अ० २१, श्लो० ९ ) ।

८०। यथोक्तमानस्य क्वचिद् विपर्ययोऽपि भवतीत्याह—वक्त्रलिङ्गे चेति । पार्थिवे वक्त्रलिङ्गे इति सम्बन्धः । वक्त्रलिङ्गं लिङ्गविशेषः, मुखलिङ्गमित्यस्य नामान्तरम् । तत्स्वरूपं शिल्परत्ने उत्तरभागे तृतीयाध्याये द्रष्टव्यम् । शम्भुबाणे इति शम्भौ बाणे चेत्यर्थः ।

[ लिङ्गविस्तारः ]

मृद्दारुलोहशै(लं वा?लानां) दैर्घ्ये
भक्ते (दिनांशके?जिनांशकैः) ।
कुर्यात् षट्सार्धसप्तांशनवांशे विस्त(र?रं) क्रमात् ॥८१॥
(विषकं?विष्कम्भं) नव(नागं?भागं) तु सार्द्धमष्ट पितामहः ।
नारायणोऽष्टभिर्ज्ञे(यो?यः ) सप्तसार्धं महेश्वरः ॥८२॥

---

८१-८२। इदानीं लिङ्गस्य विस्तारं ब्रह्मादिभागविभागञ्च युग्मकेनाऽऽह—मृद्दार्विति। मृदादिलिङ्गानां दैर्घ्ये जिनांशकैश्चतुर्विंशत्येत्यर्थः, भक्ते षट्सार्धादिना विस्तरं कुर्यादित्यर्थः। यद्वा विष्कम्भनवभागं गर्भगेहविष्कम्भस्य नवमांशमितं विस्तरं कुर्यादित्यर्थः। अत्रोद्दिष्टानां मृदादीनां चतुर्णां षट्सार्धेत्यादिभिश्चतुर्भिरनुद्देशाद् यथासंख्येनान्वयो बोध्यः। विषमफलमपि तुल्यप्रकारं विभागवचनं शिल्परत्ने—

आयामे दलिते दिवाकरयुजाऽभीष्टेऽष्टभिर्विस्तृतिः

* * * * * *

* * * * * *

पञ्चांशैरपि गर्भगेहनवमांशेनापि सा स्मर्यते ॥

( उ० अ० २, श्लो० ६७ )।

ब्रह्मादिभागमाह—सार्द्धमष्टेति। अत्रापि जिनांशकैर्भक्ते इत्येव। सप्तसार्द्धमिति सार्द्धसप्तेत्यर्थः। अत्रापि फलविसंवाद्यपि संवादि प्रमाणं तत्रैव—

लिङ्गं सर्वसमं समोन्मितिविभक्तांशत्रयं तत् पुनः
स्वायत्या सम-नाहकं यदि समांशं चाथ वृद्ध्युत्तरम्।
भक्ते भानुयुजोच्छ्रयेऽद्रि(७)वसु(८)नन्दां(९)शैस्तु मूलादिषू-
पेतं दिग्दलिते त्रिलोकयुगसंख्यातैस्तथेशाधिकम् ॥

( शिल्प० उ० अ० २ श्लो० ६६ )

अस्यायमर्थः—लिङ्गस्य उच्छ्राये भानुयुजा रविद्वयेन चतुर्विंशत्येत्यर्थः, भक्ते क्रमेण अद्रिवसु-नन्दांशैः सप्ताष्टनवभिरंशैर्मूलादिषु मूलमध्योर्ध्वभागेषु उपेतं पूर्वार्धविशेषणविशिष्टं लिङ्गम् ईशाधिकं शिवभागाधिकं भवेदित्यर्थः। पक्षान्तरमाह—दिग्दलिते इति। दिशा दशभिर्दलिते विभाजिते उच्छ्राये इत्येव, त्रिलोकयुगसंख्यातैः यथाक्रमं त्रिभिस्त्रिभिश्चतुर्भिश्चांशैर्मूलादिषु उपेतम् ईशाधिकञ्च सत् लिङ्गं तथा पूर्वोक्तवदेव भवेदित्यर्थः।

[ लिङ्गस्य ब्रह्मादिभागाः ]

ब्रह्मांशश्चतुरस्रो (वो?ऽधो) मध्येऽष्टास्रस्तु वैष्णवः ।
पूजाभागः सुवृत्तः स्यात् पीठोर्ध्वं शङ्करस्य च ॥८३॥

[ नागरलिङ्गानि ]

गर्भा(र्थं?र्धं) कन्यसं श्रेष्ठं पञ्च(त्रिं?त्र्यं)शं शिवालयम् ।
भवन्ति नव लिङ्गानि तयोर्मध्येऽष्ट(भागिके?भाजिते) ॥८४॥
श्रेष्ठमध्यकनिष्ठानि त्रिस्त्रिभेदानि तानि हि ।
नागरे नागरस्यो(क्त?क्तं)मा(न?नं)लिङ्गस्य मन्दिरे ॥८५॥

---

अत्रेशभागोऽधिक इति दृश्यते प्रकृते तु ब्रह्मभागः, तस्य सार्धाष्टभागभाजित्वात् । तदत्रेशपदं ब्रह्मपरं वा स्यात् मूलपदम् ऊर्द्ध्वपरं वेति तत्रभवन्तो निर्माणनिपुणा जातिशिल्पिनो निर्दिशन्त्विति । परमीशपदस्य ब्रह्मपरत्वेऽपि तस्य मूलभाक्त्वादाधिक्यमसम्भवमेव ।

८३ । ब्रह्मादिभागस्य देशं प्रकारञ्चाऽऽह—ब्रह्मांश इति । ब्रह्मांशश्चतुरस्रः समचतुष्कोणः, स च अधो विधेयः, वैष्णवः अष्टास्रः, स तु मध्ये कर्तव्यः, शङ्करस्य पूजाभागः सुवृत्तः पीठोर्द्ध्वञ्च स्यादिति योजना । तदेतदाह शिल्परत्ने—

यथोचिताताननवितानयुक्तां शिलां यथोक्तक्रमतोऽभिभज्य ।
मूलं युगाश्रं विदधीत मध्यमष्टाश्रकं वृत्तमयं परञ्च ॥

इति ( उ० अ० २, श्लो० ७७ ) ।

८४-८५ । सम्प्रति लिङ्गस्य पूर्वोक्तं श्रेष्ठमध्यकनिष्ठत्वादिभेदत्रयमनूद्य नागरादिप्रासादभेदेन लिङ्गमानमाह—गर्भार्धमिति । गर्भार्धं शिवालयं शिवलिङ्गं कन्यसं कनिष्ठम्, पञ्चत्र्यंशं गर्भपञ्चांशस्य त्र्यंशं शिवलिङ्गं ज्येष्ठम् इति पूर्वोक्तानुवादः । प्रस्तुतमाह—भवन्तीति । तयोर्मध्ये ज्येष्ठ-कनिष्ठयोर्मध्ये नवांशीकृतस्य गर्भस्य पञ्चांशे इत्यर्थः, पूर्वं तस्यैव मध्यमत्वाभिधानात् ; अष्टभाजिते अष्टभिर्विभक्ते नव लिङ्गानि भवन्ति ; तानि च श्रेष्ठमध्यकनिष्ठानीति त्रित्रिभेदानि भवन्तीत्यर्थः । निगमयति—नागर इति । नागरे मन्दिरे नागरस्य लिङ्गस्य मानम् इत्युक्तम् । शिल्परत्ने 'नागरे' इत्यत्र 'वेशरे' इति लिखितं विलक्षणैश्चांशादिभिरयमेव प्रकारोऽभिहितः । तथाच—

अभिकृत्यंशके (२६) गर्भे षोडशांशं तदुत्तमम् ।
त्रयोदशांशमधमं तयोर्मध्येऽष्टभाजिते ॥
नव लिङ्गानि सिध्यन्ति वेसरे तानि कल्पयेत् । ( उ० अ० २, श्लो० ६४-६९ )

विकारांशे तदायामे भूत(भङ्गानि?वेदाग्नि)विस्तरम् ।
(नयदं ?जयदं) पौष्टिकं सार्धकामकं नागरे विदुः ॥८६॥

[ द्राविडलिङ्गानि ]

गर्भे (त्रिसुप्रभागं ?त्रिःसप्तभागे) तु दशां(श?शो) द्राविडेऽधमः ।
(त्र्या?त्रयो)दशांश(के?कं) श्रेष्ठं (गर्भे ?मध्ये)ऽष्टांशेन पूर्ववत् ॥८७॥
त्रिःसप्तांशे निजायामे षट्पञ्चचतुर(शतम् ?शकम्) ।
जयदा( यि?दि) विशालं तु पूर्ववद् द्राविडे मतम् ॥ ८८ ॥

---

इति। काश्यपशिल्पे पुनर्द्वारमानेनेयं कल्पना, परं तत्र नागरादिसंज्ञा नास्ति। तथाच तत्र द्वारमानमभिधाय—

अधमोत्तमयोर्मध्ये वसुभागविभाजिते ।
नवधा सकलोत्तुङ्गं द्वार ( मानं ? मानाद् ) विधीयते ॥

इत्युक्तम्। एतत्तु चित्रम्, सर्वत्रैव मध्यमष्टभिर्विभज्य नव लिङ्गानि विहितानि, परं कथं तथाविधे भागे लिङ्गनवकोत्पत्तिर्भवेदिति शिल्पिन एव कल्पयितुं प्रभवेयुः।

८६। नागरलिङ्गस्य विस्तारक्रमेण नामान्याह—विकारांश इति। तदायामे लिङ्गायामे विकारांशे जयदं पौष्टिकं सार्धकामकञ्च लिङ्गं यथाक्रमं भूतवेदाग्निविस्तरं पञ्चचतुस्त्र्यंशविशालं विदुः। पञ्चांशविस्तृतं जयदम्, चतुरंशविस्तृतं पौष्टिकम्, त्र्यंशविस्तृतं सार्द्धकामकम् इति निष्कर्षः। शिल्परत्ने ( उ० भा० अ० २, श्लो० ६३ ) पुनः 'सार्वकामिकमि'ति तृतीयं नाम द्राविडे प्रासादे एषां स्थानञ्चोक्तम्।

अत्र विकारपदेन षोडश प्रकृतिविकारा उच्यन्ते, काश्यपशिल्पे—

अथोदये कलांशे तु पञ्चांशं स्वस्तिकं भवेत् ।
वेदांशं पौष्टिकं ख्यातं गुणांशं जयदं भवेत् ॥ ( अ० ४९, श्लो० ९१ )

इति यथोक्तांशस्य कलाशब्देनोल्लेखात्। अत्रापि नाम्नां भेदः पौर्वापर्यविपर्ययश्च द्रष्टव्यौ।

८७। द्राविडप्रासादे लिङ्गायामविस्तारौ वक्तुमंशविभागमाह—गर्भ इति। द्राविडे प्रासादे त्रिःसप्तभागे एकविंशतिभागे कृते दशांशोऽधमः त्रयोदशांशकं श्रेष्ठं भवति। मध्येऽष्टांशेनेति पूर्ववत् नागरे इव तयोर्मध्ये अष्टांशेन विभक्ते नवलिङ्गानि भवन्तीत्यर्थः।

८८। सम्प्रति विस्तारमाह—त्रिःसप्तांश इति। निजायाम इति लिङ्गदैर्घ्ये। षट्पञ्चचतुरंशकं विशालं विस्तारं कुर्यादिति शेषः। जयदादीति क्रमेण तेषामंशानां पूर्ववत् जयदादिसंज्ञा स्यादित्यर्थः।

[ वेशरलिङ्गानि ]

वेशरे पञ्चपञ्चांशे गर्भाकारे विमानके ।
त्रयोदशांशकं हीने श्रेष्ठं कुर्याद् विचक्षणः ॥८६॥

[ लिङ्गप्रासादोचितनक्षत्रानयनम् ]

उत्सेधाष्टगुणे सप्तविंशभिर्हरणे ततः ।
शेषमश्वयुजा(द्यं?द्यं) तु

---

काश्यपे—

लिङ्गोच्चे द्विर्नवांशे तु रसभूतयुगांशके ।
गुणांशे शान्तिकादिः स्याद् द्राविडे च चतुर्विधम् ॥ (अ० ४९, श्लो० ९३)

इति द्विर्नवांश इति चतुर्विधमिति च प्रकृताद् भिद्येते ।

८९। वेशरलिङ्गमाह—वेशर इति। प्रमादबहुलोऽयं पाठः ।

शिल्परत्ने—

पञ्चपञ्चांशके दैर्घ्ये वसुसप्तषडंशकैः ।
विस्तारं वेशरे विद्यात् पूर्ववज्जयदादिकम् ॥ इति ( उ० अ० २, श्लो० ६९ )

काश्यपशिल्पे—

वेशरे लिङ्गतुङ्गे तु विंशत्यंशविभाजिते ।
अष्ट वा सप्तषट्पञ्चभागैर्व्यासं प्रकल्पितम् ॥ ( अ० ४९, श्लो० ९४ )

इति चैकार्थबोधकं पद्यद्वयम् ।

९०। प्रसङ्गात् प्रासादस्य लिङ्गस्य च नक्षत्रादीनि वक्तुमादौ नक्षत्रमाह—उत्सेधाष्टगुणे इति। एतानि च शिल्परत्नादौ आयादिरिति नाम्ना व्यपदिश्यन्ते। शुभानाम् एतेषामतिप्राशस्त्यमाह समराङ्गणसूत्रधारे—

आयो व्ययश्च योनि( त्वं ? श्च ) ताराश्च भवनांशकम् ।
गृहनामेति चिन्त्यानि करणानि गृहस्य षट् ।
त्रिभिः शुभैः शुभं वेश्म द्वाभ्यामेकेन चाशुभम् ॥
करणैश्चतुराद्यैस्तु शुभैरतिशुभं भवेत् ॥ (अ० २६, श्लो० ४९—५१ )

इति। इह गृहनाम वर्जयित्वाऽन्येषां पञ्चानां लक्षणानि लिखितानि ।

सम्प्रति व्याख्यायते। कर्तव्यस्य प्रासादस्य लिङ्गस्य वा भाविते उत्सेधे उन्नतिमाने अष्टभिर्गुणिते सप्तविंशत्या हृते च अवशिष्टसंख्यया नक्षत्रं जानीयादिति निष्कर्षः। अश्वयुजाद्य-

[ तस्कराद्यंशानयनम् ]

नक्ष(त्रश्च?त्रे च) चतुर्गुणे ॥९०॥

नवभिर्हरणे (षष्ठमश्यकं ?शेषमंशकं) तस्क(रं ति ?रादि)कम् ।

भुक्तिमुक्तिधनं (राज्ञा षडं का ? राजा षण्डश्चाभयकं) वियत् ।

तस्करं (विषखण्डन्तु ?वियत् षण्डन्तु)

निन्दितश्च सुपाठ(के?कैः) ॥९१॥

---

मिति अश्विन्यादिनक्षत्रम् । शेषसंख्यया नक्षत्रज्ञानञ्च—यथोक्तगुणहरणाभ्यामेकस्मिन्नवशिष्टे अश्विनी, द्वयोर्भरणी त्रिषु कृत्तिकेति क्रमेण । इयमेव रीतिः काश्यपे । तथाच—

* * * अंशमष्टगुणीकृते ।

सप्तविंशतिहृच्छेषमश्विन्यादिक(कं ?)सम्भवेत् ॥ ( अ० ५०, श्लो० ९१ )

इति । समराङ्गणसूत्रधारे तु प्रकारान्तरेण नक्षत्रानयनमुपदिष्टम् । तत्र हि सप्तविंशतिर्नक्षत्राणि जन्मसम्पदादिसंज्ञया नवधा विभक्तानि ; अत एव तत्र हरणमपि नवभिः कृतम् । तथाच—

गणयेत् स्वामिनक्षत्राद् यावत् स्याद् भवनस्य भम् ।

नवभिर्भाजिते तस्मिन् शेषं तारा प्रकीर्त्तिता ॥

( समराङ्गण० अ० २६, श्लो० ४०-४१ ),

एवमेव शिल्परत्नेऽपि ( पूर्व० अ० १९, श्लो० १३-१४ ) । अयमेव हि प्रकारः साधीयान्, एकप्रयासेनैव नक्षत्राणां तच्छुभाशुभानाञ्चाधिगमकत्वात् ।

९१ । अंशानयनप्रकारमाह—नक्षत्रे चेति । नक्षत्रे नक्षत्रमाने चतुर्गुणे चतुर्भिर्गुणिते नवभिर्हृते विभाजिते च शेषमंशकं भवेत् । तेषां संज्ञामाह—तस्करमिति ।

'युगवृद्ध्या नवे ह्रासे त्वंशकं तस्करादयः' ( अ० ४९, श्लो० १०३ ) इति काश्यपे यथोक्तावेव गुणहारौ । परमस्ति नाम्नि विप्रतिपत्तिः । तथाच—

तस्करं भक्तिशक्तिश्च वनं राजञ्च षण्डकम् ।

अभयं धनमृणञ्चैव नवांशकमुदाहृतम् ॥ ( अ० ५०, श्लो० ६१ )

इति । एवं शिल्परत्नेऽपि ( पूर्व० अ० १९, श्लो० २७-२८ ) नामभेदो विद्यते । नवता तु प्राचीनैव । समराङ्गणसूत्रधारे पुनर्गुणहारयोर्नाम्नि संख्यायां च विप्रतिपत्तिः । तथाच—

व्ययं क्षेत्रफले क्षिप्त्वा गृहनामाक्षराणि च ।

भागं त्रिभिर्हरेत्तत्र यच्छेषं सोऽंशको भवेत् ॥

इन्द्रो यमश्च राजा च त्रयो नामभिरंशकाः ।

स्वनामतुल्यफलदा विज्ञातव्याश्चयोऽपि च ॥ (अ० २६, श्लो० ३७-४०)

[ धनर्णयोन्यानयनम् ]

उत्तुङ्गे वसुनन्दाग्निगुणेऽष्ट(काशभिर्हृ ? काष्टभिर्हृ)ते ।
शेषं धनमृणञ्चैव(योजितं ? योनित्वं)स्याद् यथाक्रमम् ।
धना(दिक?धिक)मृणत्वीणं मानं तत् सम्प(दा?दां) पदम् ॥६२॥

---

अस्ति चैषामंशानां करणषट्के प्राधान्यद्योतको ह्यः प्रशंसावादोऽपि तत्रैव—

चतुर (ङ्गो ? ङ्गे) यथा (मन्त्रो ? मन्त्री) मुख्यो लग्ने नवांशकः ।
तथा गृहादिषु प्रोक्तं मुख्यत्वेनांशकत्रयम् ॥ इति ।

( अ० २६, श्लो० ३८-३९ )

अंशेषु निन्दितानंशानाह—तस्करमिति । 'निन्दितं वास्तुपाठकैः' इति शिल्परत्ने (पूर्व० अ० १९, श्लो० २८ ) पाठरत्नम् ।

९२ । सम्प्रत्येकोपक्रमेण धनर्णयोनीनामानयनप्रकारमाह त्रिभिः पादैः—उत्तुङ्ग इति । प्रासादस्य लिङ्गस्य वा उत्तुङ्गे औन्नत्ये औन्नत्यपरिमापके हस्तादावित्यर्थः, वसुना अष्टभिः नन्देन नवभिः अग्निना त्रिभिश्च गुणे गुणिते, अष्टकाष्टभिरिति—अष्ट च कः सूर्योऽर्थाद् द्वादश च अष्ट चेति अष्टकाष्ट तैः अष्टकाष्टभिः अष्टभिर्द्वादशभिरष्टभिश्च हृते विभाजिते यथाक्रमं धनम् ऋणं योनित्वञ्च स्यात्, तथाच—अष्टभिर्गुणिते अष्टभिर्हृतेऽवशिष्टं धनम्, नवभिर्गुणिते द्वादशभिर्हृतेऽवशिष्टं ऋणम्, त्रिभिर्गुणितेऽष्टभिर्हृतेऽवशिष्टं योनित्वमिति निष्कर्षः ।

अत्र श्लोके गुणनसंख्यास्तिस्रः स्पष्टत उपलभ्यन्ते 'वसुनन्दाग्नी'त्यनेन ; हरणसंख्या त्वस्पष्टेति गुणनसंख्यासाम्यपर्यालोचनया 'अष्टकाष्टभि'रिति पाठं परिकल्प्य अष्टभिर्द्वादशभिरष्टभिरिति कष्टेन कल्पितोऽर्थः, ततश्चैतद्भागफलानां त्रित्वात् संख्येयानामपि त्रित्वमावश्यकमिति बुद्ध्या, 'यथाक्रम'पदोपात्तक्रमान्यथानुपपत्त्या 'योजित'पदस्यानर्थक्यानुसन्धानेन च 'योनित्व'-मिति पाठः शुद्धत्वेन कल्पितः । यद्यपि 'योनिश्चे'त्येव पाठः साधीयान् तथाऽपि यथाशोधित-मेवान्यत्रोपलब्ध्या अक्षरसाम्यभूम्ना च तथा कल्पितम् ।

इदमत्र द्रष्टव्यम्—योनिः यथोक्तगुणहाराभ्यामेव सर्वत्राऽऽनीता । आभिः संख्याभि-र्धनर्णयोरानयनन्त्वन्यत्र नोपलभ्यते । तथाच शिल्परत्ने—

अष्टाहते रन्ध्रहृतेऽथ शेषस्त्वायोऽथवाऽत्रापि तिथिस्तु तिथ्या ।
नागे नवघ्ने व्यय एव दिग्भिर्भवेदिदं देशवशात् प्रवेश्यः ॥

( पूर्व० भा० अ० १९, श्लो० ३१ )

इति । एवमत्र अष्टाभिर्गुणिते नवभिर्हृते आयः, नवभिर्गुणिते दशभिर्हृते व्यय इति कल्पितम् ।

[ सूर्यादिवारानयनम् ]

तुङ्गं नवगुणं कृत्वा सप्तभिः त्तपयेत्ततः।
शेषं सूर्यादि(नारं?वारः) स्यात् क्रूरास्तत्र विवर्जिताः ॥६३॥

---

काश्यपे—

* * * तुङ्गं हस्ताष्टवृद्धिदम् ।
नाभिस्तु निविशेषमायामित्युच्यते बुधैः । इत्येकत्र ।

( अ० २६, श्लो० ४-६ )

अत्र द्वितीयार्धे—'नाडिभिस्तूनिते शेषमायमित्युच्यते बुधैरि'ति स्यात् । अन्यत्र च—

अनले गुणिते चाष्टहृते योनिरुदाहृता ।
अष्टभिर्वर्धिते भानुहृते त्वायमुदाहृतम् ॥
नवभिर्गुणिते नाडीहृते शेषमृणं भवेत् ।

(काश्यप० अ० ४९, श्लो० १०२-१०३)

इति यथोक्तसंख्यया गुणमभिधाय भानुहृते आयमाह, यत्र प्रकृते अष्टहरणमुक्तं यत्र च प्रकृते भानुहरणमुच्यते, तत्र ऋणे त्वयं नवभिर्हरणमाह, गुणनन्तु प्रकृतवदेव । तदन्यत्र च पूर्वोदाहृतवदेव आययोन्यादिकमभिधाय—

नवभिर्गुणिते त्वं (श ? शे) राशिभिर्ह्रासयेत्ततः ।
शेषं व्ययमिति ख्यातम् * * * ।

( काश्यप० अ० ५०, श्लो० ५०-५१ )

इति प्रकृतवदेव द्वादशभिर्हरणेन व्ययानयनं दृश्यते । तदत्र व्ययो धनं वा ऋणं वेति शिल्पिभिरनुसन्धेयम् । मात्स्येऽपि अष्टाभिर्भाजिते आयव्ययावाह । तथाच—

'व्यासेन गुणिते दैर्घ्यै अष्टाभिर्वै हृते तथा । यच्छेषमा( यतं ? यं तं )विन्द्यात्' इत्यायमभिधाय—'अष्टाभिर्भाजिते ऋक्षे यः शेषः स व्ययो मतः'

( अ० २५७, श्लो० १५-१६, २१ ) इति व्ययमाह ।

धनर्णयोर्हेयोपादेयत्वमाह—धनाधिकमिति । धनमधिकं यत्रेति, ऋणं क्षीणं यत्रेति च विग्रहद्वयम्, शेषं सुगमम् । 'आयाधिक्यं व्ययं क्षीणं सम्पदामास्पदं सदे'ति काश्यपे ( अ० ४९, श्लो० १०४ ) । इदमत्र द्रष्टव्यम्—वसुभिर्गुणिता तैरेव च भाजिता संख्या विकारमननुभवन्त्येव स्वस्वरूपेणावतिष्ठते इत्यफलाऽनिष्टफला वा ग्रन्थकृतश्चेष्टेत्यवगच्छामः ।

९३ । वारानयनमाह—तुङ्गमिति । स्पष्टम् । एवमेव शिल्परत्न(पूर्व० भा० अ० १५, श्लो० ३३ ) काश्यपशिल्पयोः ( अ० २६, श्लो० ३ । अ० ४९, श्लो० १०१ । अ० ५०, श्लो० ५३ ) ।

[ तिथ्यानयनम् ]

तुङ्गमष्टगुणं कृत्वा तिथिभि(हरणोज्ञतः? र्हरणात्ततः)।
शेषञ्च तिथयः सम्यग् रिक्तापर्व(विजिता? विवर्जिताः) ॥९४॥

[ प्रशस्तचिह्नम् ]

पद्मं शङ्खं ध्वजं छत्रं खड्ग(ः?)स्वस्तिकचामरे।
वज्रं (दगेर्ध्व?दण्डार्ध)चन्द्रौ च(क्रमस्त्याप्यटकः?
चक्रमत्स्यौ घटः) शुभाः॥ ९५ ॥
सौख्यदं चिह्नमित्या(च?द्य)मावर्त्तौ दक्षिणे हि यः।
रक्तश्वेतपीतकृष्णरे(षो?खा) वर्णसुसौख्यदा॥ ९६ ॥

[ लिङ्गे रेखाकरणम् ]

पूजायामे कलांशे तु लिङ्गं चिह्नं दशांशकैः।
पीठस्योर्द्ध्वं द्विभागेन रे(षा?खा) कार्या प्रदक्षिणे॥ ९७ ॥

[ लिङ्गशिरोवर्त्तनम् ]

(सत्र?छत्रा)भमष्टमांशे तु सार्ध(प्यंशं?द्व्यंशे)(षडङ्को?षडंशके)।
त्रपुषाभं विस्तरार्धे (कुकुटाङ्गं? कुक्कुटाण्डं) शिरो मतम् ॥९८॥
त्रिभागे लिङ्गविस्तारे चैकांशेनार्धचन्द्रकम्।
सार्धत्र्यंशेन तुल्यं स्यादष्टांशे बुद्बुदाकृ(तिः?ति)॥ ९९ ॥

---

९५। लिङ्गे प्रशस्तानि चिह्नान्याह—पद्ममिति। स्पष्टम्।

९६। रेखामाह—पूजायाम इति। पूजायामे शिवांशे षोडशभिर्विभक्ते दशभिरंशैर्लिङ्गं चिह्नयितव्यम्। पीठस्य ऊर्द्ध्वद्विभागेन प्रदक्षिणे रेखा कार्येत्यन्वयः। द्वितीयार्धं प्रथमार्धस्यैवानुवाद इति मन्यामहे।

९८। सम्प्रति लिङ्गस्य शिरोवर्तनम् अंशवशेन तस्य संज्ञाश्चाऽऽह द्वाभ्याम्—छत्राभमिति। त्रिभागीकृतस्य लिङ्गस्य ऊर्द्ध्वभागः शिवांश इत्युक्तम्, शिवांशं पुनस्त्रिधा विभज्य लब्ध ऊर्ध्वभागो मुखम्, तत्र वर्तनं भवेदिति वस्तुस्थितिः। वर्त्तनमिति वृत्तक्रियामाह, यथा अर्द्धचन्द्राद्याकारः सम्पद्यते।

शिरोभागे अष्टमांशे अष्टांशे अष्टभिरंशीकृते इत्यर्थः, सार्द्धद्व्यंशे छत्राभं षडंशे त्रपुषाभं वर्त्तनं भवेत्। त्रपुषाभमिति त्रपुषाग्रसदृशमित्यर्थः, त्रपुषं फलविशेषः यस्य 'शशा' इति ख्यातिर्वङ्गेषु ;

[ दुष्टलिङ्गलक्षणम् ]

ऊर्ध्वाधोमध्यहीनं यल्लिङ्गं नाशकरं भवेत् ।
दीर्घं वा सन्धिरे(षा?खा)भिर्युक्तं काकपदा(दिवै?दिकैः)॥१००॥

[ स्फाटिकलिङ्गमानम् ]

एकद्वित्र्यङ्गुला वृद्धिर्हानिरायादिशुद्धये ।
मात्रादि स्फाटिकं लिङ्गं यावदेकादशाङ्गुलम् ॥१०१॥

इति दारुजानि स्फाटिकानि (च) ।

[ अथ बाणलिङ्गानि ]

[ तत्र लिङ्गोत्पत्तिस्थानानि ]

कुरुक्षेत्रे च लिङ्गानि सरस्वत्यां तथा पुनः ।
वाराणस्यां प्रयागे तु गङ्गायाः सङ्गमेषु च ॥ १०२ ॥
यानि वै नर्मदायाश्च अन्तर्वेदे च सङ्गमे ।
केदारे च प्रभासे च बाणलिङ्गं सुखावहम् ॥ १०३ ॥

---

विस्तरार्द्धं कक्कुटाण्डं त्रिभागैकभागे अर्द्धचन्द्रकम् अष्टांशीकृतस्य सार्द्धत्र्यंशेन तुल्यं बुद्बुदाकृति शिरः स्यादित्यर्थः । एवं पञ्चधा वर्त्तनं भवेत् । तथाच शिल्परत्ने—

छत्राभं त्रपुषाकारं कक्कुटाण्डनिभं तथा ।
अर्द्धेन्दुसदृशं वाथ बुद्बुदाभन्तु पञ्चमम् ॥
सर्वेषामपि लिङ्गानां शिरसो वर्त्तनक्रमम् । इति ।

( उ० अ० २, श्लो० ११६-११७ ) ।

१०० । सम्प्रति दुष्टलिङ्गान्याह—ऊर्ध्वाधोमध्यहीनमिति । ग्रन्थान्तरेऽस्य 'लक्षणोद्धार' इति शिरोनाम दृश्यते । तस्य च वर्जनीयत्वमाह—

'शिरसो वर्त्तनोपेतं लक्षणोद्धारवर्जितम्' इति

( काश्यप० अ० ४९, श्लो० १४ ) ।

एतच्च स्फाटिकादिलिङ्गविषयमिति सम्भाव्यते, तत्रैवैतेषां दोषाणां दृष्टत्वात् । तथाच शिल्परत्ने रत्नदोषमधिकृत्य—

रेखा बिन्दुः कलङ्कश्च काकाङ्घ्रिक्षतधूलयः ।
तुषारत्रासरन्ध्राणि यत्नाद्द रत्नेषु वर्जयेत् । इति ।

( उ० भा० अ० १, श्लो० ३५-३६ ) ।

[ बाणलिङ्गपरीक्षा ]

त्रिपञ्च(नारं?वारं) यस्यैव तुलासाम्यं (जनायते?न जायते)
तदा बाणं समाख्यातं शेषं पाषाणसम्भवम् ॥ १०४ ॥

[ वर्ज्यबाणलिङ्गानि ]

स्थूलं वरञ्च दीर्घञ्च (स्फटिकं ? स्फुटितं) (छिन्न?छिद्र)संयुतम् ।
बिन्दुयुक्तञ्च शूलाग्रं कृष्णञ्च (वि?चि)पिटं तथा ॥ १०५ ॥
(वक्तृ?वक्र)ञ्च मध्यहीनञ्च बहुवर्णञ्च यद् भवेत् ।
वर्जयेन्मतिमाँल्लिङ्गं सर्वदोषकरं यतः ॥ १०६ ॥

[ क्वचित् पाषाणस्यापि पूज्यत्वम् ]

महानदीसमुद्भूतं सिद्धक्षेत्रादिसम्भवम् ।
पाषाणं परया भक्त्या लिङ्गवत् पूजयेत् सदा ॥ १०७ ॥

[ यथातथावस्थितस्यापि बाणस्य प्राशस्त्यम् ]

पुष्पपीठमपीठं वा मन्त्रसंस्कारवर्जितम् ।
भुक्तिमुक्तिकरं बाणं सर्वप्रासादपीठकम् ॥ १०८ ॥

[ भोगदबाणलक्षणम् ]

ऊर्ध्वस्थूलं कृशं चाधो यदा लिङ्गं निवेशयेत् ।
तदा भोगं विजानीयात् पुत्रपौ(त्रा?त्र)श्च वर्धते ॥ १०९ ॥

---

१०४। बाणलिङ्गपरीक्षामाह—त्रिपञ्चवारमिति। यस्यैवेत्येवकारो भिन्नक्रमे। यस्य त्रिपञ्चवारं पञ्चदशवारम् एव तुलासाम्यं न जायते प्रतिवारमेव मानं भिद्यते इत्यर्थः, तदा बाणं बाणलिङ्गं समाख्यातं कथितं मुनिभिरिति शेषः ; 'अमेयः खलु भगवानि'ति भावः।

१०७। महानदीति। रूपमण्डने (अ० ४, श्लो० ७८) 'ग्रन्थान्तरे' इत्युपक्रम्यायं श्लोकः पठितः। लिङ्गवदिति बाणवदित्यर्थः, तस्यैव प्रस्तावात्।

१०८। पुष्पपीठमिति। प्राणतोषणीधृतवीरमित्रोदयेऽयं श्लोकः 'पुष्पपीठ'मित्यत्र 'तत् सपीठ'मिति, भुक्तिमुक्तिकरमित्यत्र 'सिद्धिमुक्तिप्रद'मिति 'पीठक'मित्यत्र 'पीठग'मिति च विपरिवर्त्तनेनोपलभ्यते। एवमन्यान्यपि लक्षणानि पौराणिकान्येवेति द्रष्टव्यम्।

ऊर्द्ध्वंकृशं यदा लिङ्गं स्थूलं चाधो निवेशयेत् ।
तदा (भु? मु)क्तिं विजानीयात् संसा(रस्थिति ?
रोच्छित्ति)कारणम् ॥ ११० ॥

[ सर्वावस्थास्वपि बाणस्य पूज्यत्वम् ]

ह्रस्वं दीर्घं (कृश?कृशं)स्थूलं षण्डं कुब्जञ्च वामनम् ।
त्र्य(स्तं?स्र-)पीठं चतुरस्रं स्थूलाग्रं चक्रसंयुतम् ॥ १११ ॥
रे(षा?खा)कीलकसंयुक्तं सुवर्णं च निवर्णकम् ।
रक्तं कृष्णं तथा श्यामं पीतं शुक्लं च पाण्डुरम् ॥ ११२ ॥
सदोषगुणसंयुक्तं बाणं पूज्यञ्च नित्यशः ।
बलाल्लक्ष्मीं समाकृष्य भुज्यते बाणलिङ्गतः ॥ ११३ ॥
तस्माच्छतगुणं (पुष्पं ?पुण्यं) तत्संस्थापनपूजनात् ।
बाणलिङ्गं तथा पूज्यं तत्संस्थापनमुत्तमम् ॥ ११४ ॥

[ बाणस्थापनप्रशंसा ]

सर्वयज्ञतपोदानतीर्थवेदेषु यत् फलम् ।
तत् फलं कोटिगुणितं प्राप्यते लिङ्गस्थापनात् ॥ ११५ ॥
यो लिङ्गं स्थापयेदेकं विधिपूर्वं सदक्षिणम् ।
सर्वागमोदितं पु(ष्पं? ण्यं) कोटिकोटिगुणं भवेत् ॥ ११६ ॥
शतवारं कुरुक्षेत्रे सहस्रं जाह्नवीषु च ।
नर्मदायाञ्च लक्षेण कोटिं च कुरुजाङ्गले ॥ ११७ ॥
कृत्वा स्नानञ्च (पी? पि)ण्डञ्च हुतं दानञ्च भोजनम् ।
गुणितं कोटिवारञ्च सर्वपुण्यं लभेन्नरः ॥ ११८ ॥

---

११० । ऊर्ध्वंकृशमिति । पूर्वं 'भुक्तिमुक्तिकरं बाणम्' इत्युक्तम्, तत्र कीदृशं भुक्तिकरं कीदृशं वा मुक्तिकरमित्येतदाह श्लोकद्वयेन, तत्रापि पूर्वश्लोके भुक्तिदलिङ्गलक्षणमुक्तमितीदानीं मुक्तिदलिङ्गलक्षणमाहेत्यवधार्य अर्थवानपि यथाश्रुतः पाठो विपरिवर्त्तित इति ज्ञेयम् ।

स्थापि(तं? ते) चैकलिङ्गे तु देवकल्पाभिवन्दिते ।
विमानकाञ्चनारूढो सुरवाद्यैस्तु वाद्यते ॥ ११९ ॥

भ्रमते सुर(लिङ्गन्तु ? लोके तु)च्छिन्नसंसार(वर्धनं ? बन्धनः) ।
सर्वसिद्धिकरं चैव सर्वकामफलप्रदम् ॥ १२० ॥

(बाणलिङ्गा तु लिङ्गानामाकर्षाणां ?) स्वयम्भुवा ।
पीठं (प्र? प्रा)सादरूपञ्च यथेष्टं कारयेत् सुधीः ॥ १२१ ॥

[ एकास्त्रादिबाणमाहात्म्यम् ]

एका(स्व? स्त्र)बाणमारभ्य यावच्चतुर्दशा(श्रयम्? स्त्रकम्) ।
पूजया परया भक्त्या सर्वसौख्यप्रदं नृणाम् ॥ १२२ ॥

[ शिवतीर्थोदकलक्षणम् ]

धातवे शतहस्तेषु बाणे पञ्चशतेषु च ।
स्वयम्भूसहस्रहस्ते शिवतीर्थोदकं स्मृतम् ॥ १२३ ॥

[ शिवतीर्थोदकस्य पुण्यजनकत्वम् ]

स्नाने कृते महत् पुण्यं लिङ्गादिषु दिशं प्रति ।

[ शिवतीर्थोदकलङ्घने प्रत्यवायः ]

लङ्घिते च महत् पापं शिवस्नानोदके नृणाम् ॥ १२४ ॥

[ प्रदक्षिणनियमः ]

एकां चण्ड्यां (वरे ? रवौ) स(पत् ? प्त) तिस्रो दद्याद् विनायके ।
चतस्रो विष्णुदेवस्य शिवस्या(र्धं?र्धां) प्रदक्षि(णा?णाम्) ॥१२५॥

[ जैनदेवालये विशेषः ]

जैनदेवाग्रसंस्थाने स्तोत्रमन्त्रार्चनादिकम् ।
नैव (पृष्टिः?दृष्टिः) प्रदातव्या (सन्मुखं?) द्वारलङ्घनम् ॥१२६॥

[ प्रणालदिङ्नियमः ]

पूर्वापरे यदा द्वारं प्रणालं चोत्तरे शुभम् ।
प्रशस्तं सर्वदेवानामिति शास्त्रार्थनिश्चयः ॥ १२७ ॥

[ पिण्डिकाया लक्षणम् ]

लिङ्गायामपृथुक्लृप्तं पिण्डिकानान्तु लक्षणम् ।
(आ?तत्रा)दौ ब्रह्मविष्णोश्च पिण्डिकाना(मुपध्य?)विदुः ।

[ तस्याः स्वजातिकर्त्तव्यत्वम् ]

जात्यैकया विधातव्यं नेष्टमन्योन्यसंकरम् ॥ १२८ ॥

[ तत्र मतान्तरम् ]

आहुः शैलेष्टमेकेचित् पीठं पक्वेष्टकाम(दम्?यम्) ।

[ पीठानां सन्धिस्थानम् ]

उपर्युपरि पीठानां सन्धिरङ्गावसानके ॥ १२९ ॥

[ नालमध्ये कर्णसन्धेर्निषेधः ]

नालस्य मध्यमध्ये च कर्णसन्धिं न सन्धयेत् ।

[ प्रणालभागकथनम् ]

प्रणालन्तु त्रिभागेण तत्तुल्यं चा(ग्रा?ग्रम)र्धकम् ॥ १३० ॥
त्रिधा विभक्तमग्रे तु मध्ये सजलमा(ग ? र्ग)तः ।
कन्दे तु पादमेकैकं मध्यवंशोद्भवाकृ(ती ? ति) ॥ १३१ ॥

[ मेखला ]

पृथुपीठ(स्तुनां?गुणां)शेन मे(ष?ख)ला श्रवणाकृतिः ।

[ खातविधानम् ]

मेखला (च?) त्रिभागेण खातं कुर्यात्तथा परम् ॥ १३२ ॥

---

१२७ । यस्य देवालयस्य पूर्वस्यामपरस्यां वा दिशि द्वारं वर्त्तते तत्र उत्तरस्यां दिशि प्रणालः कर्त्तव्यः । प्रणालो जलनिःसरणमार्गः ।

१३२ । इदानीं पीठिकामाह—मेखलेति । पञ्चश्लोकीयं क्वचिद् विकृतपाठा क्वचिदन्तर्विच्छिन्नेति व्याख्यानायोग्या ।

(याम्योदरतत् ?) संपादमग्रे स्यात् सार्धभागिकम् ।
कूर्मपृष्ठोन्नताकारं दर्पणो(द्भवमस्तकम् ? दरसन्निभम् ) ॥१३३॥

[ पीठम् ]

मेखलामध्यकर्त्तव्या नवपीठन्तु कामदम् ।
भागैकं भूगतं कार्यं त्रिभागं (कर्त्तु?कण्ठ)पट्टिका ॥१३४॥
भा(गो?गा)र्धं मुखपट्टञ्च (स्कन्धसार्धत्रिभागोन्नतम्
?स्कन्धं सार्धत्रिभागतः) ।
स्कन्धश्च पट्टिकाद्व(यं न्द्वं) भागार्धं चान्तरपत्रिका ॥१३५॥
कणकं सार्धद्वयं भागै × × × कञ्चिन्निका मता ।
द्विभागं चान्तरपट्टं (क?च) (पोताविद्विसार्धकाः?) ॥१३६॥
(अर्धयं च मन्नासपट्टि?)कर्तव्यं विधिपूर्वकम् ।
अर्धं स्कन्धपट्टिकाख्या त्रिभागं स्कन्धशोभनम् ॥१३७॥
(अर्धमुखपट्टिका कार्या कर्णके तु भार्गकम् ?) ।
शोभनमष्टभागैकं कर्तव्यं तमशङ्किते ॥१३८॥

[ लिङ्गपीठयोर्न्यूनाधिक्यनिषेधः ]

यावद्दीर्घं भवेल्लिङ्गं तावत् स्यात् पीठविस्तरम् ।
उमा तु पीठिका ज्ञेया लिङ्गं शङ्कर(मु?उ)च्यते ॥१३९॥

[ तयोर्न्यूनाधिक्ये दोषः ]

न्यूनाधिका न कर्तव्या उमा च शङ्करस्तथा ।
न्यूनाधि(क?के) कृते दोषा (त्तरते राष्ट्रविभ्रमम् ?) ॥१४०॥

[ पीठिकाभेदास्तन्नामानि च ]

(१)स्थण्डिला चैव (२)वापी च (३)यक्षी (४)वैरी तथैव च ।
(५)मण्डला (६)पूर्णचन्द्रा च (७)वज्र(८)पद्माकृ(ती?ति)स्तथा ॥१४१॥

(९)अर्धचन्द्रा (१०)त्रिकोणा च विज्ञेया दश पीठिकाः ।

[ पीठिकालक्षणम् ]

चतुरस्रा स्थण्डिला स्यात् संयुता मेख(ला?लै)कया ॥१४२॥
चतुरस्रा यदा वेदी सर्वकामफलप्रदा ।

[ इति स्थण्डिला(१) ]

कर्तव्या मण्डलाकारा मेखलाभिरलङ्कृता ।
मण्डला सा तु विज्ञेया गणानां सिद्धिहेतवे ॥१४३॥

[ इति मण्डला(५) ]

पूर्णचन्द्र (वि?नि)भाकारा मध्यन्यस्तद्विमेखला ।
विज्ञेया पूर्णचन्द्रा सा रुद्राणीशतसंप्रिया ॥१४४॥

[ इति पूर्णचन्द्रा(६) ]

षडस्रा च भवेद्वज्रा मेखलात्रयभूषिता ।

[ इति वज्रा(७) ]

षोडशास्रा भवेत् पद्मा किञ्चिच्च(स्या?स्यान्)
मृणालवत् ॥१४५॥

[ इति पद्मा ८) ]

लग्नज्यधनु(षा?रा)काराऽर्धचन्द्रा चैव सा भवेत् ।

[ इत्यर्धचन्द्रा(९) ]

त्र्यस्रा त्रिकोणा विज्ञेया सा शक्त्या सदृशा भवेत् ॥१४६॥

[ इति त्रिकोणा(१०) ]

[ आसां फलम् ]

स्थण्डिला पीठिका यत्र धनधान्यार्थदायिनी ।
महिषीगोप्रदा वापी यक्षी सर्वार्थदायिनी ॥१४७॥

---

१४६। लग्नज्येति ज्यायुक्तधनुराकृतिरित्यर्थः ; एवं ह्यर्द्धचन्द्राकृतिर्भवेत् ।

१४७। इदानीं पीठिकानां नामभेदेन फलान्याह—स्थण्डिलेति । अत्राऽऽद्यायाः स्थण्डिलायाः परं वापीयक्षीवैरीणां तिसृणां पीठिकानां लक्षणं नोपलक्ष्यते । फलकथनप्रस्तावे पुनर्वापीयक्ष्योर्नामनी दृश्येते, वैरी तु वैरायमाणेव दृष्टिपथं परिहृतवती ।

मण्डला कीर्त्तिबहुला पूर्णचन्द्रा तु शान्तिदा ।
वज्रा शत्रुविनाशाय पद्मा सौभाग्यदायिनी ।
अर्धचन्द्रा सुखाय स्यात्त्रिकोणा शत्रुनाशिनी ॥१४८॥

[ पीठिकानां स्वजातिकर्त्तव्यता ]

शैलजे शैलजा योज्या दारुजे दारुजा शुभा ।
पार्थिवे पार्थि(वा?वी) कार्या लोहजे लोहजोत्तमा ।
रत्नजे धातुजा शस्ता रत्नजाता विशेषतः ॥१४९॥

[ प्रणालव्यवस्था ]

मूलादग्रं प्रणाल(स्या?स्य) प्रमाणाद्धिकं शुभम् ।
जल(मग्नाविभाषेण ?मार्गस्त्रिभागेण)
चाग्रतस्तु सुशोभनम् ॥१५०॥

[ मुखलिङ्गम् ]

सम्मुखं (चैव?चैक)वक्त्रं स्यात् त्रिव(क्त?क्त्रं) पृष्ठतो नहि ।
पश्चिमास्यं स्थितं शुभ्रं कुङ्कुमाभं तथोत्तरम् ।
याम्यं कृष्णकरालञ्च प्राच्यं दीप्ताग्निसन्निभम् ॥१५१॥

[ मुखनामानि ]

सद्यो वामं तथाऽघोरं पुरुषञ्च चतुर्थकम् ।
पञ्चमञ्च तथेशानं योगिनामप्यगोचरम् ॥१५२॥

इति पीठिकामुखलिङ्गाधिकारः ।

वामे गणाधिपत्यञ्च दक्षिणे पार्वती स्मृता ।
नैरृत्ये भास्करं विद्याद् वायव्ये च जनार्दनम् ॥ १५३ ॥

---

१५१ । मुखलिङ्गमाह—सम्मुखमिति । एतत्पूर्वार्द्धत्वेन रूपमण्डने—
'मुखलिङ्गं त्रिवक्त्रं वा एकवक्त्रं चतुर्मुखम्'
( अ० ४, श्लो० १३ )

मातृभिर्मातरस्थानं कारयेद्दक्षिणां दिशम् ।
सौम्ये शान्तिग्रहं कुर्या(द?द्य)क्षाधीशश्च पश्चिमे ॥ १५४ ॥

इत्येकद्वारशिवायतनम् ।

वामे स्नानगृहं कुर्याद् (यशो?)द्वारश्च दक्षिणे ।
मध्ये रुद्रः प्रकर्त्त(व्यं?व्यो) मातृस्थानश्च दक्षिणे ॥१५५॥
(वाम?वामे) देवी महालक्ष्मीरुमा वै भैरवस्तथा ।
ब्रह्मा विष्णुस्तथा रुद्रः पृष्ठदेशे तु कारयेत् ॥ १५६ ॥
चन्द्रादित्यौ स्थितौ कर्णे आग्नेय्यां स्कन्दमेव च ।
ईशाने विघ्नराजं तु धूम्रमीशानगोचरे ॥ १५७ ॥

इति चतुर्मुखशिवायतनम् ।

मातुलिङ्गश्च नागेन्द्र(?) डमरुं चाक्षसूत्रकम् ।
नन्दी मुकुटशोभाढ्यः सर्वाभरणभूषितः ॥ १५८ ॥
खट्वाङ्गश्च कपालश्च डमरुं बीजपूरकम् ।
दंष्ट्राकरालवदनं महाकालन्तु दक्षिणे ॥१५६॥

इति पूर्वप्रतीहारौ ।

तर्जनी च त्रिशूलश्च डमरुं गजमेव च ।
(हरेश्च?हेरम्बो) वामभागे स्याद् भृङ्गी दक्षिणतः शृणु ॥१६०॥
गजं डमरुखट्वाङ्गं तर्जनीवामहस्तकः ।
उभौ च दक्षिणे द्वारे भृङ्गी दक्षिणतः शुभः ॥१६१॥

इति दक्षिणप्रतीहारौ ।

त्रिशूलं डमरुश्चैव खट्वाङ्गश्च कपालकम् ।
डमरुश्च तथा दण्डं बीजपूरं तथैव हि ॥१६२॥

---

इत्यर्द्धं प्राप्यते, युक्तश्चैतत ; इह लेखकप्रमादात् त्रुटितम् । सम्मुखमिति चतुर्वक्त्रे एकं वक्त्रं सम्मुखं स्यात, त्रिवक्त्रे लिङ्गे पृष्ठतः पृष्ठदेशे वक्त्रं न हि कारयेदिति शेषः ।

द्वारे पश्चिमके कार्यः पाण्डुरो वामदक्षिणे ॥ १६३ ॥

इति पश्चिमप्रतीहारौ ।

मातुलिङ्गं मृणालञ्च खट्वाङ्गं पद्मदण्डकम् ।
सितश्चैवोत्तरे द्वारे वामे चैव व्यवस्थितः ॥ १६४ ॥
पद्मदण्डञ्च खट्वाङ्गं मृणालं बीजपूरकम् ।
असि(नो?तो) दक्षिणे भागे उत्तरे द्वार एव च ॥१६५॥

[ इत्युत्तरप्रतीहारौ ]

[ वाहनविधानम् ]

वाहनं यस्य देवस्य तत्तस्याग्रे प्रकल्पयेत् ।
एक-द्वि-त्रि-च (तत्?तुः)पञ्च वा षट्-सप्तपदान्तरे ॥१६६॥
वाहनं मूर्त्तिलिङ्गञ्च मूलप्रासादमानतः ।
वृषभस्य (विभावन्ते?)लिङ्गे दृष्टां नियोजयेत् ।
सूर्यस्याग्रे भवेत् सोमस्तनसूत्रसमोद(यं?यः) ॥१६७॥

---

१६२। अनेन वक्ष्यमाणयोः पश्चिमप्रतीहारयोरायुधानि प्रतिपादितानीति तत्त्वम्। सर्वेषामेव प्रतीहाराणां चतुर्भुजत्वमनुमीयते प्रहरणचातुर्विध्यात्, इह तु द्वितीयार्धे त्रीण्येव प्रहरणानि प्राप्यन्ते। रूपमण्डने तु—'कपालं डमरुं दण्डं बीजपूरं तथा दधत्' ( अ० ४, श्लो० १०४ ) इति यथापूर्वं चत्वार्येवाऽऽयुधानि लभ्यन्ते।

१६३। प्रतिद्वारं द्वौ द्वौ प्रतीहाराविति प्रकृतम्, इह त्वेक एव लभ्यते 'पाण्डुर' इति। रूपमण्डने—'दुर्मुखः पश्चिमे वामे पाण्डुरो दक्षिणे तथा' ( अ० ४, श्लो० १०६ ) इति द्वावेव प्रतीहारौ निर्दिष्टौ। अत्र ग्रन्थकृत्प्रमादादेकः प्रतीहारो लुप्तः किं वा पाण्डुरनामानौ द्वावेव प्रतीहाराविति चिन्तनीयम्। एवञ्च 'पाण्डुरा'विति द्विवचनमेव न्याय्यमुत्पश्यामः। अत्र 'वामदक्षिण' इति युगपदुभयपार्श्वयोरुल्लेखात् पाण्डर इत्येकेनैव नाम्ना निर्दिष्टौ द्वौ प्रतीहाराविति च नायौक्तिकं वक्तुमर्हामः। अपि च पूर्वश्लोके द्विधैवाऽऽयुधानि प्रतिपादितानीत्यपि प्रतीहार-द्वैधं निर्बाधमुपन्यस्यति।

१६४-१६५। उत्तरद्वारप्रतीहारावाह—सितश्चेति। उत्तरे द्वारे वामे सितः दक्षिणे असित इति वर्त्तुलोऽर्थः। तदयं संक्षेपः—पूर्वद्वारोभयपार्श्वयोर्नन्दिमहाकालौ, दक्षिणद्वारपार्श्वयोर्हेरम्ब-भृङ्गिणौ, पश्चिमद्वारपार्श्वयोः पाण्डुरौ, उत्तरद्वारपार्श्वयोश्च सितासिताविति।

[ वाहनदृष्टिकथनम् ]

पादं जानु कटिं यावन् (मर्जौ?मूर्त्तौ)वाहनदृक् शुभा ।
स्था(नं?न) नाशं करोत्यूर्ध्वाऽधोदृष्टिश्च प्रजात्ययम् ॥१६८॥

(धात?धाता) दिवं प्रति(हातः?गतः) कलनेऽस्य रूपं
(तत्यादयुग्ममगमदहाशो हरिहरश्च?) ।
यातौ न पारममरे(ष्वपी?ष्वपि) नंदनी(मा?य-)
मव्य(ता?क्त)रूपममराधिपतेश्च पातु ॥ १६९ ॥

इति श्रीक्षेत्रा × × × × विरचिते वास्तुशास्त्रे रूपावतारे
रुद्रमूर्त्तिलिङ्गाधिकारो नाम षष्ठमो(?)ऽध्यायः ।

---

१६८ । व्याख्यातमिदं प्राक् ( पृ० ८८, श्लो० ६६ ) ।

१६९ । अन्ते अध्यायान्तर्मुख्यतः प्रतिपाद्यमाद्यं महादेवं स्तौति—धातेति । द्वितीयपादे 'तस्माद्युग्ममगमद् बहुशो हरिश्च'ति कथञ्चित् स्यात् । तथाचायमर्थः—अस्य रूपं कलने रूपं कलयितुमित्यर्थः, धाता दिवं प्रतिगतः, हरिश्च तस्माद् धातुरयुग्मं पृथगित्यर्थः, बहून् लोकानगमत्, उभावपि यस्य पारमन्तं न यातौ तस्याव्यक्तं रूपं पातु । 'तवैश्वर्यं यत्नाद् यदुपरि विरिञ्चिर्हरिरधः परिच्छेत्तुं यातौ' इत्यादि स्मृतिरत्र मूलमनुसन्धेयम् ।

# सप्तमोऽध्यायः

—:*:—

[ अथ चतुर्विंशतिस्तीर्थङ्कराः ]

(१)ऋषभश्चा(२)जितश्चैव ((३)सभवेश्या?सम्भवश्चा)(४)भिनन्दनः।
(५)सुमतिः (६)पद्मनाभश्च ((७)सूर्यश्चे?सुपार्श्वः) सप्तमानतः ॥१॥
(८)(चन्द्रः?चन्द्र) प्रभः (९)पुष्पद(न्त ? न्तः) (१०)शीत(ला ? लो) दशमो मतः।
(११)श्रेयांसो (१२)वासपत्न्यश्च (१३)विमलो(१४)ऽनन्त((१५)तद्वकः ? धर्मकौ) ॥ २ ॥
(१६)शान्तिश्च(१७-१८)( पुथारु ? कुन्थनाथार ) (१९)मल्लयो (२०)मुनिसुव्रतः।
(नाभि या ? (२१)नमि (२२)नेमि-पा(२३))र्श्वनाथो(२४)वर्धमानस्ततः परम्।
चतुर्विंशतिरित्येते मतास्तीर्थङ्करा बुधैः ॥ ३ ॥

---

१—३। यावद् दैवतमूर्त्तिं कर्त्तुकामः सम्प्रदायविशेषाणामेव तामभिधाय यद्यन्तरा विरमेत्तदाऽवशिष्टाऽपि जैनदेवतानां मूर्त्तिः किमनेनाज्ञानादवज्ञानाद्वोपेक्षितेति शिष्याणां भ्रमो मा भूदिति जिनानां मूर्त्तिमाह—ऋषभ इति। जिनाश्च सर्व एव समानाकृतयश्च इति तेषां मूर्त्तौ विशेषमनभिधाय विशेषवतीस्तच्छासनदेवतानां मूर्त्तीरेवाग्रे लक्षयिष्यतीति ज्ञेयम्।

जैनानां समये उत्सर्पिण्यवसर्पिणीति द्विधा युगानि भिद्यन्ते। तत्रावसर्पिण्यां जना उन्नताः क्रमेणावनतिं प्रपद्यन्ते, उत्सर्पिण्याञ्चावनता जनाः क्रमेणोन्नतिं लभन्ते। अवसर्पिणी अतीतयुगस्य उत्सर्पिणी वर्त्तमानयुगस्य संज्ञा। अवसर्पिण्याख्ये व्यतीतयुगे चतुर्विंशतिस्तीर्थङ्करा विलीनाः, वर्त्तमाने उत्सर्पिण्याख्ये युगे पुनश्चतुर्विंशतिरुद्बभूवुः। तेषामेवायमधिकारः कालः, त एव च जैनैर्देवाधिकत्वेन पूज्यन्ते मन्यते च देवा अप्येतानर्चयन्तीति। अत्र च वर्त्तमानयुगीयतीर्थङ्कराणामेव मूर्त्तिः क्रमेणोल्लिखितेति ज्ञेयम्। रूपमण्डने पुनः—'एतस्या(सिष ? मव ) सर्पिण्या ( ऋ ? मृ ) षभो ( जिन ? ऽजित ) सम्भवः' (अ० ६, श्लो०) इत्युपक्रमो दृश्यते।

[ जिनानां वर्णाः ]

रक्तौ च पद्मप्रभवासपूज्यौ
शुक्लौ च चन्द्रप्रभपुष्पदन्तौ ।
कृष्णौ पुनर्नेमिमुनी च नीलौ
श्रीमल्लि(पार्श्वे ? पार्श्वौ) कन(कात्विषा ? कत्विषोऽ) न्ये ॥ ४ ।

ऋषभ इति अस्याऽऽदिनाथ इति नामान्तरम् । (६)पद्मनाभस्यापि पद्मप्रभ इति नामान्तरं रूपमण्डने ( अ० ६, श्लो० १), शीलरत्नसूरिकृते चतुर्विंशतिजिनस्तुतिसंग्रहाख्ये ग्रन्थे चोपलभ्यते । ग्रन्थकृताऽप्युत्तरत्र वर्णनिर्णयावसरे 'पद्मप्रभ' इत्येव नाम धृतमिति द्वयमपि साधु । सप्तमानत इति सुपार्श्वः सप्तम इत्यर्थः । (८)चन्द्रप्रभ इति, चन्द्रप्रभुरिति जिनस्तुतौ सूचनायामुपलभ्यते । मूलग्रन्थे पुनः—

'चन्द्रप्रभ त्रिभुवनाधिपते प्रसीद सौभाग्यसुन्दरविभो कुशलावलीद'

इति यथोक्तमेव नाम दृश्यते । यच्च जैनपद्मपुराणे 'शशिभृत्प्रभुः' ( पर्व० २० श्लो० ८ ) इत्युपलभ्यते, तत्र 'शशभृत्प्रभः' 'शशभृत्प्रभु'र्वा भविष्यतीति सम्भावयामः। (९) पुष्पदन्त इत्यस्य रूपमण्डने ( अ० ६, श्लो० २ ), जिनस्तुतौ, पद्मपुराणे च 'सुविधि'रिति नाम । यद्यपि 'तक्षक' इत्यत्र लिपिकृत्प्रमादबुद्ध्या 'धर्मक' इति कल्पनमतिसाहसं तथाऽपि यथार्थपाठोद्धारे बद्धपरिकराणामस्माकं न केवलं लिपिकृत्प्रमादोच्छेदे तात्पर्यं सङ्कोचनीयम् , दर्शितमेतदर्वाग् दर्शयिष्यते चेत ऊर्द्ध्वमपि । उपलभ्यते च 'धर्मक' इति नाम जैनपद्मपुराणादौ रूपमण्डने च ( अ० ६, श्लो० ३१ )। एवञ्च 'पुष्पदन्त' इत्यत्राप्यपेक्षिता शुद्धिर्न कृतेति न्यूनतां छन्दस्यासञ्जयता कथञ्चित् सुखमनुभूयते । यद्वा उभयत्राप्यनपेक्षिता शुद्धिस्तन्त्रान्तरे तथाविधाभिधानस्य सम्भवादिति दिक् ।

नमीति । नाथपदस्य सर्वत्रैवान्वयः, नमिनाथो नेमिनाथः पार्श्वनाथश्चेति । किञ्च ऋषभ इत्यादीनि सर्वाण्येव नामानि नाथान्तानीति ज्ञेयम् । वर्धमान इत्यस्य महावीर इति नामान्तरम् अस्यैवायं शासनकालः । तथाच—'पश्चिमो वीरो शासनं यस्य वर्त्तते' इति ( जै० प० २०।१० )

४ । जिनानां वर्णानाह—रक्तौ चेति । जैनपद्मपुराणे पुनरन्यथैव वर्णनिर्देशः । तथाच—

चन्द्राभश्चन्द्रसंकाशः पुष्पदन्तश्च कीर्त्तितः । प्रियङ्गुमञ्जरीवर्णः सुपार्श्वो जिनसत्तमः ॥
अपक्वशालिसङ्काशः पार्श्वो नागाधिपस्तुतः । पद्मगर्भसमच्छायः पद्मप्रभजिनोत्तमः ॥
किंशुकोत्करसंकाशो वासुपूज्यः प्रकीर्त्तितः । नीलाञ्जनगिरिच्छायो मुनिसुव्रततीर्थकृत् ॥
मयूरकण्ठसंकाशो जिनो यादवपुङ्गवः । सुतप्तकाञ्चनच्छायाः शेषा जिनवराः स्मृताः ॥

इति (पर्व० २० श्लो० ६३—६६) ।

[ जिनानां ध्वजाः ]

(१)वृषो (२)गजोऽ(३)श्वः (४)प्लवगः (५)क्रौञ्चो (ज्वं ? (६)ऽब्जं)
(७)स्वस्तिकः (८)शशः ।
(९)मकरः (१०)श्रीवत्स(षट्भि ? (११)खड्गी) (१२)महिषः
(१३) शूकरस्तथा ॥ ५ ॥
(१४)श्येनो (१५)वज्र(१६)मृग(१७)च्छागा (नद्या ? (१८)नन्द्या)
वर्त्तो (१९)घटोऽपि च ।
(२०)कूर्मो (२१)नीलोत्पलं (२२)शंखः (२३)फणी (षिह्वो ? (२४)सिंहो)
ऽर्हतां ध्वजाः ॥ ६ ॥

[ जिनानां जन्मभानि ]

(१)उत्तराषाढ(२)रोहिण्यौ (३)मृगशीर्षं (४)पुनर्वसुः ।
(५)मघा (६)चित्रा (७)विशाखा(८)श्चाऽनुराधा (९)मूलमेव च ॥७॥
(१०)पूर्वाषाढा (११)श्रुतिश्चैव (१२)शताभो(१३)त्तर (भद्रपं? भाद्रपत्) ।
(१४)स्वाती च (१५)पुष्य(१६)भरणी(१७)कृत्तिका (१८)रेवती क्रमात् ॥८॥
(१९)अश्विनी (२०)श्रवणा(२१)श्विन्यौ तथा (२२)चित्रा
(२३)विशाखिका ।
(२४)उत्तरा फल्गुनी चेति जिनानां जन्म
( नानि ? भानि ) वै ॥ ९ ॥

---

५-६ । जिनानां ध्वजान् यथाक्रममाह—वृष इति ।

७-९ । यथाक्रमं जन्मनक्षत्राण्याह—उत्तरेति । मृगशीर्षमित्यत्र 'ऐन्द्रमृक्षम्' इति जैनपद्मपुराणे पाठः । विशाखेति तदर्थः । तत्र 'चान्द्रमृक्षम्' इति वा, व्याकरणसंस्कारः पुराणेऽनावश्यक इति 'ऐन्दमृक्षम्' इति वा पाठो भवेन्न वेति चिन्तनीयम् । स्वातीत्यत्र 'रेवती'ति ( २०।५० । ) रेवतीत्यत्र रोहिणीति ( २०।५४ ) उत्तरा फल्गुनीत्यत्र 'हस्ते'ति ( २०।६० ) पाठा जैनपद्मपुराणे । रूपमण्डने तु 'रेवती पुष्यभरणी कृत्तिका रेवती क्रमात्' ( अ० ६, श्लो० ८ ) इत्यपपाठः ।

[ जिनानां जन्मराशयः ]

(१)धनु(२)र्वृषोऽथ (३)मिथुनं (४)मिथुनं (५)सिंह(६)कन्यके ।
(७)तुला(८)वृश्चिक(९)चापानि (१०)धनु(११)र्मकर(१२)कुम्भकौ ॥ १० ॥
(१३)मीनो (१४)मीनः ( कर्म ? (१५)कर्क ) (१६)मेषौ (१७)वृषो
(१८)मीनश्च (१९)मेषकः ।
(२०)मकरो (२१)मेष(२२)कन्ये च (२३)तुला (२४)कन्येति
राशयः ॥ ११ ॥

[ जिनोपासकयक्षनामानि ]

स्याद् (१)गोमु(ख्ये ? खो) (२)महायक्ष(३)स्त्रिमुखो (४)यक्षनायकः ।
(५)तुम्बरः (६)कुसुमश्चापि (७)मातङ्गो (८)विजयो
( (९)जयः ? ऽजितः ) ॥ १२ ॥
(१०)ब्रह्मा (११)यक्षेट्(१२)कुमारः (१३)षण्मुखः (१४)पाताल(१५)किन्नरः ।
(१६)गरुडो (१७)गन्धर्वो (१८)यक्षेट् (१९)कुबेरो (२०)वरुणोऽपि च ।
(२१)भ्रकुटि(२२) र्गोमेघ(२३)पार्श्वो (२४)मातङ्गोऽर्ह(डु ? दु )
पासकाः ॥ १३ ॥

[ जिनानां शासनदेवताः ]

(१)चक्रे(२)श्वर्यजितबला (३)दुरिता[ रि ]श्च (४)कालिका ।
(५)महाकाली (६)श्याम(७)शान्ता(८)भ्रकुट्य ( स्प ? श्च )
(९)सुतारका ॥ १४ ॥
(१०)अशोका (११)मानवी (१२)चण्डा (१३)विदिता (१४)चाङ्कुशी तथा ।
(१५)कन्दर्पा (१६)निर्वाणी (१७)बला (१८)धरणी(१९)धरणप्रिया ॥१५॥

---

१२ । 'तुम्बर' इत्यत्र 'तुम्बरु'रिति रूपमण्डने (अ० ६, श्लो० १२) । प्रातिस्विकलक्षणनिर्णय-वेलायां जय इत्यत्राजित इति नाम समुपलभ्यते ; परं तत्र छन्दोभङ्गादिदोष आपतेदिति जय एव क्षोदक्षमो लक्ष्यते न तु तत्राजित इत्यवधेयम् ।

(२०)नरदत्ता च (२१)गान्धार्य(२२)धिका (२३)पद्मावती तथा ।
(२४)सिद्धायका चेति जैन्यः क्रमाच्च् शासनदेवताः ॥ १६ ॥

[ अथ यक्षाणां मूर्त्तिलक्षणम् ]

अथातः संप्रवक्ष्यामि यक्षिणीयक्षमूर्त्तयः ।
ऋष(भो ? भे) गोमुखो यक्षो हेमवर्णो गजासनः ॥ १७ ॥
वराक्षसूत्रं पाशश्च बीजपू(रं) करेषु च ॥ १८ ॥

[ इति गोमुखः १ ]

चक्रेश्वरी हेमवर्णा तार्क्ष्यारूढाऽष्टबाहुका ।
वरं बाणं चक्रपाशांकुश(वक्त्रा ? शक्त्य)शनिर्धनुः ॥१९॥

[ इति चक्रेश्वरी १ ]

अ( ति ? जि )तस्य महायक्षो (हर्मा ? हंसा)रूढश्चतुर्मुखः ।
वरमुद्गरा( शा ? शनि )पाशाङ्कुशशक्त्यभयानि
बीजपूरं च ॥ (?) २०॥

[ इति महायक्षः २ ]

चतुर्भुजा गौरवर्णा गोधारूढाऽपराजिता ।
वरं चैव तथा पाशमङ्कुशं बीजपूरकम् ॥ २१ ॥

[ इत्यपराजिता ? अनितबला २ ]

सम्भवे त्रिमुखो यक्षः श्यामो मयूरवाहनः ।
नकुलगदाभयाक्षं नागश्च बीजपूरकम् ॥ २२ ॥

[ इति त्रिमुखः ३ ]

---

१७। इदानीं यस्य तीर्थङ्करस्य यो यक्ष उपासकः, या च शासनदेवता तान् क्रमेण वक्तुमाह—अथात इति। तत्र एकेन श्लोकेन यक्षमूर्त्तीरन्येन शासनदेवतामूर्त्तीर्वक्ति। एवमेव चतुर्विंशतितीर्थङ्कराणाम् उपासकान् शासनदेवताश्च प्रतिपादयतीति द्रष्टव्यम्।

२०। बाहुबाहुल्यादायुधबाहुल्यं ततश्चाक्षरबाहुल्यं छन्दस इति सोढव्यमेव तत्।

दुरितारिर्गौरवर्णा यक्षिणी महिषासना ।
वरदं चाक्षसूत्र(ञ्च ? ञ्चा)भयञ्च बीजपूरकम् ॥ २३ ॥

[ इति दुरितारिः ३ ]

श्यामव(र्णा ? र्णो) गजारू(ढा ? ढ) ईश्वर-
(श्वा ? श्चा)भिनन्दने ।
मातुलिङ्गाक्षसूत्रञ्च अङ्कुशं नकुलं तथा ॥ २४ ॥

[ इति यक्षनायकः ४ ]

कालिका श्यामवर्णा स्या(त्) पद्मारूढा चतुर्भुजा ।
वरं पाशाङ्कुशं नागं दक्षिणा( खश्च ? धश्च ) सृष्टितः ॥२५॥

[ इति कालिका ४ ]

तार्क्ष्यस्थं (वरदं ? तुम्बरं) श्वेतं सुमतौ तु चतुर्भुजम् ।
वरदं च तथा शक्तिनागपाशं गदा(धरे ? करे) ॥ २६ ॥

[ इति तुम्बरः ५ ]

महाकाली ( महे ? हेम )वर्णा पद्मारूढा चतुर्भुजा ।
वरदं नागपाशं चाङ्कुशं स्याद् बीजपूरकम् ॥ २७ ॥

[ इति महाकाली ५ ]

( पद्मपन्नस्व ? पद्मनाभस्य ) कुसु ( मे ? मो )
नीलो हरिणवाहनः ।
बीजपूराभयं चैवाक्षसूत्रं नकुलं तथा ॥ २८ ॥

[ इति कुसुमः ६ ]

---

२४ । ईश्वर इति यक्षनायक इत्यर्थः ।

२५ । दक्षिणाधश्च सृष्टित इति सृष्टिक्रमेण अनुलोमेनेत्यर्थः । दक्षिणाधश्च इति दक्षिणयोर्हस्तयोरधःक्रमेण ।

२८ । यद्यपि 'पद्मपन्नस्व' इत्यत्र 'पद्मप्रभस्य' इत्येव शुद्धिः स्वाभाविकी पद्मप्रभश्च नामान्तरमित्युक्तम्, तथाऽपि मूले तथाविधपाठानुपलम्भादियं शुद्धिरस्माभिः कृता ।

श्यामा च श्यामवर्णा स्यान्नरारूढा चतुर्भुजा ।
वरं बाणाभयं चापं तस्या हस्तेषु च क्रमात् ॥ २९ ॥

[ इति श्यामा ६ ]

सुपार्श्वे नीलवर्णः स्यान्मा ( तङ्गे ? तङ्गो ) गजवाहनः ।
हस्तेषु (निल? शूलं)पाशं चाङ्कुशं च नकुलं तथा ॥ ३० ॥

[ इति मातङ्गः ७ ]

शान्ता [ भवेत् ] सुवर्णास्या गजारूढा चतुर्भुजा ।
वरदं चाक्षसूत्रं चाभयं तस्मात्त्रिशूलकम् ॥ ३१ ॥

[ इति शान्ता ७ ]

चन्द्रप्रभस्य विजयो त्रिनेत्रो हंसवाहनः ।
द्विभुजो नीलवर्णः स्याच्चक्रं च मुद्गरं क्रमात् ॥ ३२ ॥

[ इति विजयः ८ ]

भृकुटिः पीतवर्णा स्यात् सिंहारूढा चतुर्भुजा ।
खड्गं तथा मुद्गरश्च परशुं खेटकं क्रमात् ॥ ३३ ॥

[ इति भृकुटिः ८ ]

अजितः पुष्पदन्तस्य कूर्मारूढ (ः) सितो भवेत् ।
बीजपूराक्षसूत्रश्च कुन्तश्च नकुलं क्रमात् ॥ ३४ ॥

[ इत्यजितः, जयः ९ ]

सुतारका श्वेतवर्णा वृषारूढा चतुर्भुजा ।
वरदं चाक्षसूत्रं चाङ्कुशं च कलशं भवेत् ॥ ३५ ॥

[ इति सुतारका ९ ]

---

३० । नकुलं वाद्ययन्त्रविशेषः ।

३२ । 'त्रिनेत्र' इत्यत्र 'द्विनेत्र' इति पाठः श्रेयान्, द्विभुजमूर्तौ नेत्रत्रयस्य विरलदर्शनत्वात् । पूर्वपदे सन्धिजा विकृतिरप्येतदेव मतमनुकूलयति ।

३३ । भ्रुकुटिरित्युद्देशश्लोके (७।१४) ।

शीतले नाथे [स्याद्] ब्रह्मा त्र्यक्षः (श्वेतमुखाज्वरथः?)।
लुङ्गं मुद्गरपाशौ चाभयाद्याङ्कुशगदानकुलम् ॥ ३६ ॥

[इति ब्रह्मा १०]

अशोका (मुद्र ? मुद्ग)वर्णा स्यात् (प्रमा ? पद्मा)
रूढा चतुर्भुजा।
वरदं नागपाशं चाङ्कुशं वै बीजपूरकम् ॥ ३७ ॥

[इत्यशोका १०]

श्रेयांस ईश्वरो यक्षस्त्र्यक्षः श्वेतो वृषासनः।
मातुलिङ्गं गदां चैवाङ्कुशं च कमलं क्रमात् ॥ ३८ ॥

[इति यक्षेट् ११]

चतुर्भुजा गौरवर्णा मानवी सिंहवाहना।
अङ्कुशं वरदं हस्तं नकुलं मुद्ग(लं ? रं) तथा ॥ ३९ ॥

[इति मानवी ११]

वासपूज्ये कुमारः स्याच् श्वेतो वै हंसवाहनः।
मातुलिङ्गञ्च बाणञ्च धनुर्नकुलमेव च ॥ ४० ॥

[इति कुमारः १२]

विमले षण्मुखः श्वेतः (शिषी ? शिखि) स्थः फलचक्रभृत्।
बाणं खड्गञ्च पाशाद्यमभयाङ्कुशखेटकम्।

---

३६। 'श्वेतमुखोज्ज्वल' इति वा, 'श्वेतमुखोऽब्जगः' इति वा 'श्वेतमुखाम्बुज' इति वा स्यात्। अतिसाहसं पुनः 'त्र्यक्षश्चाष्टभुजोऽब्जगः' इति कल्पनम्। लुङ्गमिति मातुलुङ्गः, अम्लरसः फलविशेषोऽयम्।

४०। वासपूज्यस्य यक्षः कुमारोऽनेन लक्षितः, क्रमप्राप्ता शासनदेवता चण्डा पुनर्न लक्षिता, तदयं लिपिकृत्प्रमादो वा ग्रन्थकृतः स्खलनं वेति सुधीभिश्चिन्तनीयम्।

प्रचण्डा श्यामवर्णा स्याद् अश्वारूढा चतुर्भुजा।
वरदं च तथा शक्तिर्गदाम्बुजमनुक्रमात् ॥

इति रूपावतारे।

धनुश्चक्रञ्च नकुलं दक्षिणाधःकरक्रमात् ।

[ इति षण्मुखः १३ ]

पद्मस्था विदिता पीता बाणपाशाहिकार्मुकम् ॥ ४१ ॥

[ इति विदिता १३ ]

पाताल ( त्रि ? स्त्रि ) मु ( खा ? खोऽ ) नन्ते

र(क्ता ? क्तो) मकरवाहनः ।

पद्मखड्गं तथा पाशमक्षं खेटञ्च नाकुलम् ॥ ४२ ॥

[ इति पातालः १४ ]

अङ्कुशी गौरवर्णा स्यात् पद्मारूढा चतुर्भुजा ।

खड्ग ( स्त ? न्त ) था नागपाशमङ्कुशं खेटकं तथा ॥४३॥

[ इत्यङ्कुशी १४ ]

किन्नरस्त्रिमुखो धर्मे लोहि( ते ? तः ) कूर्मवाहनः ।

बीजपूरं गदां चाभयाक्षमा [ ला ] ब्जनाकुलम् ॥ ४४ ॥

[ इति किन्नरः १५ ]

कन्दर्पा गौरवर्णा स्यान्मत्स्यारूढा चतुर्भुजा ।

उत्पलं चाङ्कुशं हस्तेऽभयं पद्मं क्रमाद् भवेत् ॥ ४५ ॥

[ इति कन्दर्पा १५ ]

गरुडः शान्तिनाथस्य श्यामः शूकरवाहनः ।

वाराहवदनो बीजपूरपद्माक्षनाकुलैः ॥ ४६ ॥

[ इति गरुडः १६ ]

निर्वाणो गौरवर्णा स्यात् पद्मारूढा चतुर्भुजा ।

पुस्तकं चोत्पलं पद्मं कमण्डलुः क्रमाद् भवेत् ॥ ४७ ॥

[ इति निर्वाणी १६ ]

---

४१ । बहुबाहुरयं षण्मुख इति सम्भाव्यते आयुधबाहुल्यदर्शनात् ।

४२ । त्रिमुखत्वात् पातालः षड्भुज इति षडेवाऽऽयुधानि ।

४४ । किन्नरोऽपि त्रिमुख त्वात् षड्भुजः ।

कुन्थनाथस्य गन्ध(र्वो हिंस ? र्वः सिंह) स्थः श्यामवर्णभाक्
वरदं नागपाशं चाङ्कुशं वै बीजपूरकम् ॥ ४८ ॥

[ इति गन्धर्वः १७ ]

गौरवर्णा मयूरस्था बीजपूरत्रिशूलने ।
( पद्ममुषंधिका ? ) चैव स्याद् बला नाम यक्षिणी ॥४६॥

[ इति बला १७ ]

अरुनाथस्य यक्षेन्द्रस्त्रिनेत्रः शेषवाहनः ।
षण्मुखः श्यामवर्णा(स्या ? स्यो) मातुलिङ्गं शिरस्तथा ॥५०॥

खड्गं मुद्गरपाशौ चाभयाक्षाङ्कुशशूलकम् ।
खेटं धनुश्च नकुलं भुजा द्वादश कीर्त्तिताः ॥ ५१ ॥

[ इति यक्षेट् १८ ]

धारिणी यक्षिणी नीलपद्मवर्णासनस्थिता ।
मातुलिङ्गोत्पलं चाक्षमालापद्मं करेषु च ॥ ५२ ॥

[ इति धारिणी १८ ]

मल्लौ (सुतः?सितः) (कुषोरोह?कुबेरोऽथ) रथारूढश्चतुर्मुखः ।
वरपशुं लमभया मुद्गरं शक्तिलुङ्गकम् ॥ ५३ ॥

[ इति कुबेरः १९ ]

कृष्णवर्णा चतुर्हस्ता पद्मस्था धरणप्रिया ।
वरदं चाक्षसूत्रञ्च शक्तिर्वै मातुलिङ्गकम् ॥ ५४ ॥

[ इति धरणप्रिया १९ ]

त्रिनेत्रो वरुणो यक्षो धवलो मुनिसुव्रते ।
वृषवाहश्चतुर्वक्त्रो जटामुकुटमण्डितः ॥ ५५ ॥

---

५३ । पशुं लमिति वरदमित्यादिवद् बाहुविशेषणम् ; पशुंः परशुपर्यायः ।

मातुलिङ्गं गदाबाणं शक्तिः पाशं धनुस्तथा ।
पद्मं च नकुलं चेति दक्षिणाधःकरक्रमात् ॥ ५६ ॥

[ इति वरुणः २० ]

वरदन्ता गौरवर्णा सिंहारूढा सुशोभना ।
वरदं चाक्षसूत्रं त्रिशूलं च बीजपूरकम् ॥ ५७ ॥

[ इति वरदन्ता २० ]

भृकुटि(र्नेमि ? र्नमि)नाथस्य पीतस्त्र्यक्षश्चतुर्मुखः ।
वृषवाहो मातुलिङ्गं शक्तिश्च मुद्गराभयौ ॥ ५८ ॥

[ इति भृकुटिः २१ ]

अक्षं वज्रं परशुलं नकुलं ( माथातस्तु? ) ।
गान्धारी वरखड्गं खेटं लुङ्गं हंसारूढा सिता
( प्रोक्तकायो? ) ॥ ५९ ॥

[ इति गान्धारी २१ ]

नेमिनाथस्य गोमेधो नर(स्थास्त्रिमूषर ? स्थस्त्रिमुखः) सितः ।
बीजपूरं पशुं चक्रं शक्तिशूलं च नाकुलम् ॥ ६० ॥

[ इति गोमेधः २२ ]

सिंहारूढाऽम्बिका(याश्च लुंबीनागयाकुलम् ? ) ।
अङ्कुशं च तथा (पु?पत्रं) त(था?स्या) हस्तेषु कारयेत् ॥६१॥

[ इति अम्बिका २२ ]

---

५९ । अक्षमिति । अर्धमिदं किं भृकुटेरायुधप्रतिपादनपरमाहो गान्धार्या इति न निश्चिनुमः । द्वाभ्यां द्वाभ्यामर्धाभ्यामेकैकस्य लक्षणसमाप्तिरित्यस्मिन् प्रकरणे दृश्यते, तत्क्रमादरे तु गान्धार्या आयुधप्रतिपादनपरमिदमर्धमिति भवति ।

अक्षवज्रपरशुनकुलं(मथानुस्तु ?)गान्धारी यक्षिणी ।
वरखड्गखेटलुङ्गं हंसारूढा(स्तिता कायो?) ॥

इति रूपावतारे एतन्मतप्रतिपादकम् अपरित्यक्तमूलदोषविषमं पद्यम् ।

६१। 'सिंहारूढाम्बि(क?का)का(र्य?र्या) उमनागपाशकम्' इति रूपावतारपाठपर्यालोचनया 'सिंहारूढाम्बिका मातुलिङ्गञ्च नागपाशकम्' इति पूर्वार्धे पाठः सम्भाव्यते ।

पार्श्वः श्रीपार्श्वनाथस्य कूर्मारूढो गजाननः ।
बीजपूरोरगं नागं नकुलं श्यामवर्णभृत् ॥ ६२ ॥

[ इति पार्श्वः २३ ]

पद्मावती रक्तवर्णा (कुकुं ?कुक्कु)टस्था चतुर्भुजा ।
पद्मं पाशाङ्कुशं बीजपूरं हस्तेषु कारयेत् ॥ ६३ ॥

[ इति पद्मावती २३ ]

महावीरस्य मातङ्गः श्यामः स्याद् गजवाहनः ।
दक्षिणे नकुलं हस्ते वामे स्याद् बीजपूरकम् ॥ ६४ ॥

[ इति मातङ्गः २४ ]

सिद्धायका नीलवर्णा सिंहारूढा चतुर्भुजा ।
पुस्तकं चाभयं चैव बाणं स्यान्मातुलिङ्गकम् ॥ ६५ ॥

[ इति सिद्धायका २४ ]

[ इति जिनानां यक्षयक्षिणीमूर्त्तयः ]

अथ द्वितीयभेदेन चक्रे ( श्वरी )
द्वादशभुजाष्टचक्रे वज्रयोर्द्वयमेव च ।
मातुलिङ्गाभयं चैव पद्मस्था ग(रुो ? रुडो)परि ॥ ६६ ॥
कैलासमोशरणाब्जसिद्धावर्त्तिसदाशिवम् ।
सिंहासनं धर्मचक्रमुपरीह छत्रत्रयम् ॥ ६७ ॥

---

६५ । एतेषां जिनानां शासनदेवतानाञ्च मध्ये चत्वारो मुख्या इति रूपमण्डनपर्यालोचनया प्राप्यते । तथा च रूपमण्डने—

जिनस्य मूर्त्तयोऽनन्ताः पूजिताः ( सौख्यसर्व ? सर्वसौख्य )दा ।
चतस्रोऽतिशयैर्युक्तास्तासां पूज्या विशेषतः ॥
श्रीआदिनाथो नेमिश्च ( पर्वं ? पार्श्वो ) वीर (चतु ? श्चतु)र्थकः ।
चक्रे ( चर्या ? श्वर्य )म्बिका पद्मावती सिद्धायकेति च ॥

इति ( अ० ६, श्लो० २५-२६ ) ।

६७ । कैलासं सोमशरणं ( सिधि ? सिद्धि ) वर्त्तिसदाशिवम् ।
सिंहासनं धर्मचक्रमुपरीन्द्रातपत्रकम् ॥ इति रूपमण्डने (अ० ६, श्लो० २७) ।

श्रीवत्सश्च तथाऽशोकं वृषा वृश्चिकदुन्दुभिः ।

[ प्रतीहाराः ]

इन्द्र इन्द्रजयश्चैव माहेन्द्रो ( वी ? वि ) जयस्तथा ॥ ६८ ॥
धरणेन्द्रो पद्मकश्च सुनाभः सुरदुन्दुभिः ।
इत्यष्टौ च प्रतीहारा (वि ? वी) तरागे तु शान्तिदाः ॥६९॥

[ प्रतीहाराणां स्वरूपम् ]

फलवज्राङ्कुशं दण्डमिन्द्रसव्ये (ध्वज?जय)स्तथा ।
द्वौ वज्रौ फलदण्डन्तु माहेन्द्रसव्ये विजयस्तथा ॥ ७० ॥
( यदायुथयोगोद्भवा त्रिपञ्चफणतोऽर्द्ध्वं गाः ?) ।
धरणेन्द्र(ः) पद्मकश्च सर्वशान्तिकरौ स्मृतौ ॥ ७१ ॥
यक्षरूपाधिका(रं च? राश्च) निधिहस्ताः शुभो(दराः? दयाः) ।
सुना(भं ? भो) दुन्दुभिश्चैव सर्वे शान्तिप्रदायकाः ॥७२॥
इत्यष्टौ च प्रतीहारा जिनेन्द्रस्य च शान्ति(दः ? दाः ) ।
नगरादिपुरग्रामे सर्वविघ्नप्रणाशनाः ॥ ७३ ॥
मुक्त्यर्थं विश्वमेतद् भ्रमति च बहुधा देवदैत्याः पिशाचा
रक्षो गन्धर्वयक्षो नरमृगपशवो नैव मुक्तिं विजग्मुः ।
एकः श्रीवीतरागः परमपदसुखे मुक्ति(र्ना?मार्गे)विलीनो
* वन्द्यस्तेना(ग?द्य)जैनः सुरगण(म)नुजैः सर्वसौख्यस्य
हेतुः ॥ ७४ ॥

इति श्रीक्षेत्रात्मज ( सूत्र )भृन्मण्डनविरचिते वास्तुशास्त्रे रूपावतारे जिनमूर्त्तिचतुर्विंशतियक्षयक्षिण्यधिकारो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

# अष्टमोऽध्यायः

अथ गौरीं प्रवक्ष्यामि प्रमाणं मूर्त्तिलक्षणम् ।
चतुर्भुजा त्रिनेत्रा च सर्वाभरणभूषिता ।
गोधासनोपरिस्था च कर्त्तव्या सर्वकामदा ॥ १ ॥

[ इति गौरीमूर्त्तीनां सामान्यलक्षणम् ]

( उत्तमा?उमा च ) पार्वती गौरी ललिता च श्रिया तथा ।
कृष्णा च हिम( वन्ति ? वन्ती ) च रम्भा च सावित्री तथा ।
त्रिखण्डा तोतला चैव त्रिपुरा द्वादशोदिताः ॥ २ ॥

[ इति गौरीनामानि ]

अक्षसू( त्रा?त्रं ) च कमलं दर्पणञ्च कमण्ड( लु ? लुं ) ।
उमाना( म्नि?म्नी ) भवेन्मूर्त्तिः पूजिता त्रिदशैरपि ॥ ३ ॥

[ इत्युमा ]

अक्षसूत्रं शिवं देवं गणाध्यक्षं कमण्डलुम् ।
अग्निकुण्डोभये पक्षे पार्वती पर्वतोद्भवा ॥ ४ ॥

[ इति पार्वती ]

---

१। पञ्चमाध्याये वैष्णवप्रकरणे शिलाचक्रलक्षणं विष्णोर्मूर्त्त्यन्तराणि च प्रतिपादितानि । षष्ठे शैवे शिवमूर्त्तिः शिवलिङ्गानि प्रसङ्गतो मण्डपविषये विशेषाश्च प्रतिपादिताः । अन्तरा सप्तमे जैनाधिकारे जिनतदुपासकतच्छासनदेवताः सलक्षणाः साभिधानाः प्रतिपाद्याष्टमे शाक्ताधिकारे शक्तीनां मूर्त्तीर्वक्तुमासां गौर्यंशतया मूलीभूतां गौरीं लक्षयति—अथेति । 'चतुर्भुजा त्रिनेत्रा च सर्वाभरणभूषिते'ति अविशेषेण सर्वासामेव गौरीमूर्त्तीनां लक्षणम् ; अत एव प्रत्येकलक्षणे भुजनेत्रादीनामुल्लेखो न कृतः । 'गौर्याः प्रवक्ष्यामी'ति रूपमण्डने पाठः । (९।१) ।

२। कास्तावद् गौर्या मूर्त्तय इत्यपेक्षायामाह—उमा चेति । अयमासाम् उद्देशः । रूपमण्डने अयमुद्देशनिर्देशो नास्ति । तत्र 'अथ गौर्याः प्रवक्ष्यामी'त्युपक्रम्यैव क्रमेणाऽऽसां लक्षणानि लिखितानि ।

४। 'अग्निकुण्डोभये पक्षे' इत्यत्र 'पक्षद्वयेऽग्निकुण्डञ्च' इति रूपमण्डने ( ९।२ ) ऋज्वर्थः पाठः ।

अक्षसू( त्रोभय?त्राभये) पद्मं तस्योर्द्ध्वे तु कमण्डलुम् ।
गौर्या( या?श्च ) मूर्त्तिरित्युक्ता कर्त्तव्या शिवशासिनी ॥ ५ ॥

[ इति गौरी ]

अक्षसूत्रं च वीणे द्वे कमण्डलु ( : ) करेषु च ।
ललिता च तदा नाम सिद्ध( चामर ? चारण )सेविता ॥ ६ ॥

[ इति ललिता ]

गोधासनाक्षसूत्रा च ( म ? अ )भयं वरदं करम् ।
श्रिया मूर्त्तिस्तदा नाम (ग्रहे?गृहे) पूज्या (श्रियोपमा?श्रिये सदा)॥

[ इति श्रिया ]

अक्षसूत्रं कमण्डलुं हृदये च पुटाञ्जलि ( : ? ) ।
पञ्चा (ग्रवश्च?ग्नयश्च ) कुण्डेषु कृष्णा नाम सुशोभना ॥ ८ ॥

[ इति कृष्णा ]

हिमवन्ती शैलराजी ( शब्दवस्यात् परीसुता ? ) ।
(पद्मदर्पणोभवा ?) तु वीवाहे तु माहेश्वरी ॥ ९ ॥

[ इति हिमवन्ती ]

कमण्डल्वक्षवज्राङ्कुशं गजासनसंस्थिता ।
(अ?सा)प्रतीतोद्भ(वा ? वद्)रूपा रम्भा च सर्वकामदा ॥१०॥

[ इति रम्भा ]

---

६ । ललिता रूपमण्डने नास्ति । 'सिद्धचामरसेविते'त्यस्य 'सिद्धामरनिषेविते'त्यर्थं तात्पर्यं वा कृतशुद्धौ पाठे तात्पर्यं वेति चिन्तनीयम् ।

८ । पञ्चाग्नयश्च कुण्डेष्विति उभयतः पार्श्वयोरग्निकुण्डपञ्चकान्वितेत्यर्थः । अत्र 'पक्ष-द्वयेऽग्निकुण्डञ्चे'ति पार्वतीवदेव पाठो भवेन्न वेति चिन्तनीयम् । इयमपि रूपमण्डने नास्ति ।

९ । हिमवन्त्या लक्षणं पाठविकाराद् दुरुन्नेयम् । इयमपि रूपमण्डने नास्ति ।

१० । सा रम्भा प्रतीतोद्भवद्रूपा प्रतीतं ख्यातम् उद्भवद् रूपं यस्याः तादृशी, यस्या रूपं प्रतिक्षणमेव नवनवीभूतं सत् प्रख्यायते इत्यर्थः । सोपसर्गेण भवतिना वर्त्तमानकाल-भाविना शत्रा च रूपस्य प्रतिक्षणोत्पद्यमानत्वं लभ्यते । रूपमण्डने—

अक्षसूत्रं पुस्तकञ्च धत्ते पद्मं कमण्डलुम् ।
चतुर्वक्त्रा तु सा(वि ? त्री) श्रोत्रियाणां गृहे हिता ॥ ११ ॥

[ इति सावित्री ]

अक्षसूत्रं वज्र(शक्ति?शक्ती) तस्याधश्च कमण्डलुः ।
( त्रिखण्ड?ण्डां ) पूजयेन्नित्यं सर्वकामफलप्र(दा?दाम् ) ॥१२॥

[ इति त्रिखण्डा ]

शूलाक्षसूत्रं दण्डञ्च (श्वेतचामकरे?श्वेतचामरकं ) तथा ।
श्वेतदेहा भवे (देही?देवी ) तोतला पापनाशिनी ॥ १३ ॥

[ इति तोतला ]

पाशाङ्कुशाभयवरं चतुर्हस्तेष्वनुक्रमात् ।
त्रिपुरा नाम संपूज्या वन्दिता त्रिदशैरपि ॥ १४ ॥

[ इति त्रिपुरा ]

इति द्वादश गौर्यः

वक्ष्यामि गौर्यायत (नं ? न) देवतानामनुक्रमम् ।
वामे (स्याद्धि?सिद्धिः) श्रिया सौम्ये सावित्री चैव पश्चिमे ॥१५॥
( पृष्टिः?पृष्ठे ) कर्णे तथा द्वाभ्यां भगवती सरस्वती ।
ईशाने च गणेशः स्यात् कुमार(म? श्चा)स्त्रिकोणके ॥ १६ ॥

---

कमण्डल्वक्षसूत्रञ्च बिभ्राणा वज्रमङ्कुशम् ।
गजासनस्थिता रम्भा कर्त्तव्या सर्वकामदा ॥ (अ० ९, श्लो० ९)

इति रम्भालक्षणमुपलभ्यते ।

१२ । त्रिखण्डा रूपमण्डनं न मण्डयति ।

१३ । शूलाक्षसूत्रं दण्डञ्च बिभ्राणा चैव चामरम् ।
तोतला कथिता चेयं सर्व( कोप ? पाप )प्रणाशिनी ॥

इति निःसन्दिग्धार्थः पाठो रूपमण्डने ( अ० ९, श्लो० ६ ) ।

१५—१७ । गौर्यायतनं लक्षयति—वक्ष्यामीत्यादिना । वामे इति दक्षिणस्यां दिशि,

कुण्डलाभ्यामलङ्कृता सर्वाभरणभूषिता ।
मध्ये देवी प्रतिष्ठा( प्या?प्या ) चेश्वरस्य सदा प्रिया ॥ १७ ॥

[ इति गौर्यायतनम् ]

अभयाङ्कुशपाशं दण्डं जया चैव तु पूर्वतः ।
सव्यापसव्ययोगेन ( न ? वि )जया नाम सा भवेत् ॥ १८ ॥

अभयाङ्कुशपाशदण्डम् अजितासव्येऽपराजिता ।
अभयवज्राङ्कुशदण्डं विभक्ताङ्कुशापसव्ये मङ्गला ।
अभ( या?यं ) शङ्खपद्मदण्डं मोहिन्य( पि सव्ये सभिनी?पसव्ये स्तम्भिनी ) ॥ १९ ॥

जया च विजया चैव अजिता चापराजिता ।
विभक्ता मङ्गला चैव मोहिनी स्तम्भिनी तथा ।
गौर्यायतने शस्ता (च?श्च) अष्ट (स्याद्?स्युः)द्वारपालिकाः ॥२०॥

[ इति गौर्याः प्रतीहाराः ]

---

सौम्य इत्युत्तरस्याम्, एतेन पश्चिमास्या प्रतिमेति ग्रन्थकर्त्तुरभिप्रायः प्रतिभाति । पृष्ठे कर्णे तथा द्वाभ्यामिति—

'पृष्ठकर्णद्वये कार्या भगवती सरस्वती'

इति रूपमण्डने ( अ० ५, श्लो० ९ ] संस्कारशुद्धः पाठः । अत्र ऐशानाग्नेययोर्वक्ष्यमाणत्वात् 'पृष्ठकर्णद्वय'पदेन वायुनैर्ऋतकोणद्वयं बोध्यम् । एवञ्च—मध्यवर्त्तिन्यां प्रतिमायां पूर्वास्यायां सत्यामेव वायुनैर्ऋतकोणद्वयं पृष्ठतः स्यादिति पूर्वं पश्चिमास्यपरतामवलम्ब्य यद् व्याख्यातं तद् व्याहतमित्यन्यथा व्याख्यायते—वामे वामभागे पूर्वास्यत्वादुत्तरस्यां दिशीत्यर्थः, सौम्ये दक्षिणे भागे दक्षिणस्यां दिशीत्यर्थः ।

अत्र गौर्यायतने पूर्वस्यां दिशि मूर्त्तिविशेषाश्रवणात् 'लिङ्गस्याग्रे न कर्त्तव्या ह्यर्चारूपेण देवता' (अ० ३, श्लो०—) इतिवदत्रापि गौर्यग्रे मूर्त्तिर्न विधेयेत्यायाति, तत्र लिङ्गपदस्योपलक्षण-परत्वव्याख्यानाद्वा ।

१८-१९ । इदानीं गौर्याश्चतसृषु द्वार्षु चतस्रो द्वारपालिका आह—अभयेति । पूर्वादितः प्रादक्षिण्येन ( पूर्व-दक्षिण-पश्चिमोत्तरक्रमेण ) प्रतिद्वारं द्वे द्वे द्वारपालिके वामदक्षिणोदुम्बरयोः

दण्डञ्च परशुं पद्मं मोदकञ्च गजाननम् ।
गणेशं मूषकारूढं सिद्धिदं सर्वकामदम् ॥ २१ ॥

[ इति गणेशः ]

---

क्रमेण कार्यं इति वर्त्तुलार्थः । तत्र पूर्वे द्वारे वामोदुम्बरे जया दक्षिणोदुम्बरे विजया, एवं दक्षिणे अजितापराजिते, पश्चिमे विभक्ता-मङ्गले, उत्तरे मोहिनी-स्तम्भिन्यौ इति ज्ञेयम् ।

अत्र 'विजया नाम सा भवेत्' (१८) इत्यत्र 'विजया तामसा भवेत्' इति रूपमण्डने (अ० ९, श्लो० ११) प्रामादिकः पाठः, प्रतिद्वारं द्वारपालिकानां यथाश्रुतद्वित्वभङ्गप्रसङ्गात्, अनूद्देशश्लोके तामसाया अपाठाच्च । सुखबोधार्थं चित्रे गौर्या आयतनदेवताः प्रतीहाराश्च निवेश्यन्ते—

[ गौर्यायतनम् ]




[ कोष्ठमध्ये यथोक्ता आयतनदेवताः । कोष्ठाद् बहिर्द्वयोर्द्वयोर्द्वारोदुम्बरयोः पूर्वादिक्रमेण यथोक्ता जयाविजयादिद्वारदेवताश्च ]

२१ । अथ गणेशमूर्तीराह—दण्डञ्चेति । अत्राऽऽदर्शे श्लोकत्रयानन्तरम् 'इति हेरम्बः'

वरं तथाऽङ्कुशं दण्डं परशुं चाभयं क्रमात् ।
कपालञ्च शरश्चाक्षमालापाशगदा करे ॥ २२ ॥
पञ्चवक्त्रं त्रिनेत्रञ्च हेरम्बञ्च गणेश्वरम् ।
मूषके च समारूढं सर्वकामार्थसाधकम् ॥ २३ ॥

इति हेरम्बः

रक्ताङ्गो गजवक्त्रः स्याद् रत्नकुम्भं तथाऽङ्कुशम् ।
परशुञ्च तथा द( न्तोऽन्तं ) दक्षिणाधःकरक्रमात् ॥ २४ ॥

इति गजाननः

---

इत्येवं पुष्पिका दृश्यते। परं प्रथमश्लोके चतुर्णाम्, द्वितीये च दशानामायुधानां दर्शनादिह गणेशस्य पृथक् लक्षणादर्शनात्, रूपमण्डने ( अ० ९, श्लो० १६-१७ ) उभयोरेव पृथक् लक्षण-दर्शनाच्च एतच्छ्लोकानन्तरम् [ इति गणेशः ] इत्येवं बन्धन्यन्तः पुष्पिकैका निवेशिता। शिल्प-रत्ने आयुधानां भेदो दृश्यते यथा—

विघ्नेशं सपरश्वधाक्षवटिकादण्डोल्लसल्लुण्डुकै-
र्दोर्भिः पाशसृणीस्वदन्तवरदाढ्यैर्वा चतुर्भिर्युतम् ।
शुण्डाग्राहितबीजपूरमुरुकुक्षिं त्रीक्षणं संस्मरेत्
सिन्दूराभमिभास्यमिन्दुशकलाद्याकल्पमब्जासनम् ॥

( शि० उ० अ० २५, श्लो० ५७ )

इति। परमिदं गणेशस्य वा वक्ष्यमाणवक्रतुण्डस्य वा लक्षणं नोभयोरपि वेति सुधीभिर्भाव्यम्। तत्र तु 'अथ बीजगणपति'रित्युपक्रम्य लक्षणान्येतानि लिखितानि दृश्यन्ते।

२२। इदानीं हेरम्बं निर्दिशति—वरमिति। अत्र कण्ठतोऽनुक्तत्वेऽपि एतन्मते अयं दशभुज इत्यायाति, आयुधानां तावत्संख्याकत्वदर्शनात्। शिल्परत्नेऽपि 'अथ हेरम्बः' इत्युपक्रम्य सार्धश्लोकत्रयेण तल्लक्षणमुक्तम्, तत्रापि दशभुजत्वमेव दृश्यते ( उ० अ० २५, श्लो० ५८-६१ )। रूपमण्डने तु—

वरं तथाऽङ्कुशं दण्डं दक्षिणे पार्श्वभागयोः ।
वामे कपालं बाणाक्षं पाशं कौमोदकी तथा ॥

( अ० ९, श्लो० १६ ) इति विषमः पाठो विषमा चोभयतः पार्श्वयोरायुधरचना दृश्यते।

२३। पञ्चवक्त्रं त्रिनेत्रमिति गणेशहेरम्बयोः साधारणं लक्षणम्, गणेशलक्षणे वक्त्रनेत्रयो-रनुल्लेखात्, अत एव 'हेरम्बञ्च गणेश्वर'मित्यत्रोभयोरेव विशेष्यपरताऽभ्युपेया न त्वेकस्य विशेषणपरताऽपि।

लम्बोदरं त्रिनयनं पाशाङ्कुशधरं परम् ।
वरदाभयहस्तञ्च चलत्कर्णं ( समाचरम्? सचामरम् ) ॥२५॥

इति वक्रतुण्डः

उच्छिष्टं मूषकस्थञ्च त्र्यक्षं व्यालोपवीतिनम् ।
भग्नदन्ताक्षसूत्रञ्च परशुं मोदकक्रमात् ॥ २६ ॥

इत्युच्छिष्टगणपतिः

सिन्दूराभं त्रिनेत्रञ्च ( म?अ )भयं मोदकं (वच?तथा) ।
टङ्कं शरोऽक्षमाला च मुद्गरं चाङ्कुशं तथा ।
त्रिशूलं चेति हस्तेषु दधानं कुन्दवत् सितम् ॥ २७ ॥

इति हेरम्बः

पाशाङ्कुशौ कल्पलता ( भृङ्ग?भृङ्गं ) बिभ्रत् करेषु च ।
शशिमौलिस्त्रिनेत्रश्च रक्तः क्षिप्रगणाधिपः २८ ॥

[ इति क्षिप्रगणपतिः ]

---

२५। वक्रतुण्डं लक्षयति—लम्बोदरमिति। प्रमाणान्तरानुपलम्भेऽपि ग्रन्थकृता कृतया पुष्पिकया वक्रतुण्ड एवायं न लम्बोदर इति जानीमः।

२६। उच्छिष्टगणपतिमाह—उच्छिष्टमिति। अयं रूपमण्डने नास्ति। शिल्परत्ने तु बीजगणपतिप्रस्तावे—

रक्ताक्षमालां परशुञ्च दण्डं भक्ष्यञ्च दोर्भिः परितो दधानम् ।
हेमावदातं त्रिदृशं गजास्यं लम्बोदरं तं शिरसा नमामि ॥

( उ० अ० २१, श्लो० ६६ )

इति प्रकृतोच्छिष्टगणपतिलक्षणान्वितः कश्चिद् गणपतिर्लक्षितो दृश्यते। 'भक्ष्यं' मोदकम्।

२७। सिन्दूराभमिति। नायं रूपमण्डने न वा शिल्परत्ने उपलभ्यते। पूर्वं द्वाविंशत्रयोविंशश्लोकाभ्यामेको हेरम्बो लक्षितः पुनरपरोऽपि लक्ष्यत इत्यहो हेरम्बग्रहिलता ग्रन्थकर्त्तुः।

२८। पाशाङ्कुशाविति। अयमपि रूपमण्डने नास्ति, अस्ति च शिल्परत्ने; परं तत्र भृङ्गस्थाने 'स्वरदः' पदं करोति। तथाच—

धृतपाशाङ्कुशकल्प (क) लतिकास्वरदश्च बीजपूरयुतः ।
शशिशकलकलितमौलिस्त्रिलोचनोऽरुणतनुश्च गजाननः ॥

इति। एवञ्चात्र 'भृङ्गमि'त्यत्र 'दण्डमि'ति पाठः कल्पनीयो न वेति सुधीभिश्चिन्तनीयम्।

उत्तरे तु सदा गौरी याम्ये चैव सरस्वती ।
पश्चिमे यक्ष (राज्यं?राजः) च बुद्धिः पूर्वे व्यवस्थि (तः?ता)॥२९

इति गणेशायतनम्

सर्वे च वामनाकारा (:) पुरुषाननसौम्य (तः?भाः) ।
तर्जनी परशुं दण्डमविघ्नो दण्डहस्तकः ॥ ३० ॥
तर्जनीदण्डापसव्ये स भवेद् विघ्नराजकः ।
तर्जनीखड्गवरदं दण्डहस्तः सुवक्त्रकः ॥ ३१ ॥

---

२९। इदानीं गणेशायतनदेवानाह—उत्तर इति। लेखकप्रमादादत्र कोणदेवताप्रतिपादकमेकं पद्यं त्रुटितमिति सम्भाव्यते। तच्च—

वामाङ्गे गजकर्णन्तु सिद्धिं दध्याच्च दक्षिणे ।
पृष्ठकर्णे तथा द्वौ च धूम्रको बालचन्द्रमाः ॥

(रूप० अ० ९, श्लो० १९)

इति रूपमण्डनोक्तवदेव भवेद् इति सम्भावयामः।

३०। गणेशप्रतीहारानाह—सर्व इति। रूपमण्डने 'सौम्याश्च पुरुषाननाः' इति द्वितीयपादे सुखसेव्यः पाठः। अष्टौ गणेशप्रतीहारा दक्षादिद्वारतो युग्मशः स्थापनीया इति वर्त्तुलार्थः। क्रमस्तु गौर्यायतनदृष्ट्या समुन्नेयः। शिल्परत्ने एकैकं वृक्षमाश्रिताभ्यामग्रादिदिशमलङ्कुर्वतीभ्यां द्वाभ्यां द्वाभ्यां द्वारदेवताभ्यां गणेशायतनमलङ्कृतमिति दृश्यते। तथाच—

अग्रेऽथ विल्वमभितश्च रमारमेशौ तद्दक्षिणे वटजुषौ गिरिजावृषाङ्कौ ।
पृष्ठेऽथ पिप्पलजुषौ रतिपुष्पबाणौ सव्ये प्रियङ्गुमभितश्च महीवराहौ ॥

(उ० अ० २९, श्लो० ४६)

इति। एवञ्चैषां यथाक्रममायुधानि च तत्रैवोक्तानि—

ध्येयौ च पद्मयुगचक्रदरैः पुरोक्तौ पाशाङ्कुशाख्यपरशुत्रिशिखैरथान्यौ ।
युग्मोत्पलेक्षुमयचापशरैस्तृतीयावन्त्यौ शुकाह्वकलमाग्रगदारथाङ्गैः ॥

(उ० अ० २९, श्लो० ४७)

इति। परमिदं प्रतीहाराणामायतनदेवतानां वा लक्षणमिति यद्यपि दुरुन्नेयम्, तथाप्यायुधदर्शनात् प्रतीहारा एवैते इति निश्चिनुमः नाऽऽयतनदेवताः, आयतनदेवतानां क्वापि प्रहरणानुपलब्धेः।

३१। अत्र चतुर्थचरणे 'दण्डहस्तः सुवक्त्रकः' इति रूपमण्डने (अ० ९, श्लो० २२) पाठः।

तर्जनीदण्डापसव्ये बलवान्तकदक्षिणे ।
तर्जनीबाणचापश्च दण्डश्च गजकर्णकः ॥ ३२ ॥
तर्जनीदण्डापसव्ये गोकर्णाकृतिपश्चिमे ।
तर्जनीपद्माङ्कुशं च दण्डहस्तः सुसौम्यकः ॥ ३३ ॥
तर्जनीदण्डापसव्ये स चैव शुभदायकः ।
( य?द )त्तद्वारादि(कू ?)सर्वेषु अष्टौ चैव शुभावहाः ॥ ३४ ॥
तर्जनीदण्डापसव्ये बलवान्तकदक्षिणे ।
तर्जनीबाणचापश्च दण्डश्च गजकर्णकः ३५ ॥

इति गणेशप्रतीहाराः

कार्त्तिकेयं प्रवक्ष्यामि तरुणादित्य( सं?स ) प्रभम् ।
कमण्डलोद्वर्णाभं कुमारं सुकुमारकम् ॥ ३६ ॥
गण्डकैश्चि(रकै ?कुरै)र्युक्तं मयूरवरवाहनम् ।
स्थानी(यं ?ये) खेटनगरे भुजा द्वादश कल्पयेत् ॥ ३७ ॥

---

३९ । द्वात्रिंशश्लोकतुल्यमिदं पद्यं सम्पातायातमिति सम्भाव्यते ।

३६ । कार्त्तिकेयमाह—कार्त्तिकेयमिति । स्थानभेदेन स्थाप्यमानोऽयं द्वि-चतु-द्वादश-भुजत्वेन त्रिधा भवति । तत्र स्थानीये खेटनगरे वा द्वादशभुजः, खर्वटे चतुर्भुजः, ग्रामे वने वा द्विभुज इति शिल्परत्नसम्मतं तत्त्वम् । तथाच—

स्थानीये खेटके वाऽपि कुमारो लिख्यते यदा ॥
भुजा द्वादश कुर्वीत खर्वटे चतुरो भुजान् ।
ग्रामे वने द्विबाहुः स्यात्·········इति ।

( शिल्प० उ० अ० २९, श्लो० १२९-१३० )

'कमण्डलोद्वर्णाभम्' इत्यत्र 'कमलोदरवर्णाभम्' इति रूपमण्डने पाठः ( अ० ९, श्लो० २६ )। एवञ्च 'तरुणादित्यसप्रभमि'त्यनेनौज्ज्वल्यम्, 'कमलोदरवर्णाभमि'त्यनेन च वर्ण-प्रकर्षः प्राप्यते ।

३७ । 'स्थानीयं खेटनगरे' इत्यत्र 'स्थानीये खेटके वाऽपि' इति शिल्परत्ने 'स्थापनीया-खेटनगरे(?)' इति रूपमण्डने पाठः । गण्डकैश्चिकुरैर्युक्तमिति गण्डदेशविलम्बिभिः केशैः 'गालपाट्टा' इति प्रसिद्धैः शिखण्डकविशेषैर्युक्तमित्यर्थः ।

चतुर्भुजः ( कर्पटे ? खर्वटे ) स्याद् वने ग्रामे द्विबाहुकः ।
शक्तिपाशं तथा खड्गं शरः शूलं तथैव च ॥ ३८ ॥
वरदश्चैकहस्तः स्यादथवाऽभ(व?य) दो भवेत् ।
एते दक्षिणतो ज्ञेया ( : ) केयूर( वणकोद्व ?
कटकोज्ज्वलाः) ॥ ३९ ॥
धनु ( : ) पताका मुष्टिश्च तर्जनी तु प्रसारि(का?ता) ।
खेटकं ताम्रचूडश्च वामहस्तेषु शस्यते ॥ ४० ॥

[ इति द्वादशभुजः ]

द्विभुजस्य करे शक्तिर्वामे ( स्या?ऽन्यः ) कुक्कुटोपरि ।

[ इति द्विभुजः ]

चतुर्भुजे शक्तिपा( शो? शौ ) वामतो दक्षिणे ( च
सः ? त्वसिः )॥ ४१ ॥
वरदोऽभयदो वा(पी?पि) दक्षि(णे स्या?णः स्यात्) तुरीयकः ।

[ इति चतुर्भुजः ]

कार्त्तिकेय( मयं?मिमं ) शुभ्रं कर्त्तव्यं सर्वकामदम् ॥ ४२ ॥

इति कार्त्तिकेयः ।

---

स्थानीये इति स्थितियोग्ये खेटनगरे कर्षकग्रामे इत्यर्थः ।

३८ । खर्बटे क्षुद्रनगरे । रूपमण्डने—

चतुर्भुजः कर्पटे स्याद् वने ग्रामे द्विबाहुकः ।
दक्षिणे शक्तिपाशश्च खड्गं पाशं त्रिशूलकम् ॥ इति
( अ० ९, श्लो० २८ ) ।

४१ । वामे करे शक्तिरन्यः करः कुक्कुटोपरीत्यन्वयः ।

४२ । तुरीयक इत्यत्र तुरीयकमिति रूपमण्डने प्रामादिकः पाठः ।

पञ्चलीलया वक्ष्यामि शास्त्रभेदैस्तु भेदिताः ।
(१)लीलया ( (२)लील?लीला )(३)लीलाङ्गी (४)ललिता च
(५)( लि?ली )लावती ॥ ४३ ॥

तप्तकाञ्चनवर्णाभा बालसूर्यसमप्रभा ।
सुवक्त्रा च सुनेत्रा च ( स्य?स्व )रूपारूपदायिनी ॥ ४४ ॥
अक्षमाला तथा कुण्डी अधोहस्तेषु कारयेत् ।
द्वौ हस्ता( वि? वी ) दृशौ सर्वा(रू?वू)र्द्ध्वहस्तौ निगद्यते ॥४५॥
मृणालयु(ग्मे ?ग्मैः) लीलया च लीला स्यात् पद्मपुस्तकैः ।
लीला( ग्नी ? ङ्गी ) पाशपद्माभ्यां ललिता च ( व्रजां ? वज्रा- )
ङ्कुशैः ॥ ४६ ॥
पाशाङ्कु(श ? शैः ) लीलावती लीलया(ः) पञ्च कीर्त्तिताः ।

इति पञ्चलीलयाः ।

अस्यानन्तर(तं ? तो ) व(क्ष्ये ? क्ष्ये) नव दुर्गा(ः)
शुभावहा(ः) ॥ ४७ ॥

---

४३ । इदानीं पञ्चलीलया लक्षयति । पञ्चलीलया इति नवदुर्गादिवत् लीलयादिपञ्चकमित्यर्थः । रूपमण्डने संज्ञास्वरूपनिर्देशिका आद्या पद्यद्वयी नास्ति । विचिन्वन्तोऽपि वयं पञ्चलीलया-लक्षणं समराङ्गणसूत्रधार-काश्यपशिल्पशिल्परत्नादिषु नोपलब्धवन्तः ।

४५ । सर्वासामेवाधोहस्तेषु अक्षमाला कुण्डी चेति प्रहरणद्वयम् ; ऊर्द्ध्वहस्तानां विशेषो वक्ष्यत इत्यर्थः । 'कुण्डी'त्यत्र 'अम्बुपात्रम्' इति रूपमण्डने पाठः । सर्वावूर्द्ध्वहस्ताविति राश्य-पेक्षया द्विवचनम् । 'निगद्यत' इति शैल्पं पदम् ।

४६ । मृणालयुग्मैरिति हस्तयोर्युग्मं युग्मं मृणालमित्यर्थः, 'पद्मे युग्मे' इति रूपमण्डने पाठः । 'पद्मपुस्तकैरि'ति बहुवचनमविवक्षितम्, एवमुत्तरत्र । सर्वत्र विशेषणे तृतीया ।

४७ । नवदुर्गा आह—अस्येति । रूपमण्डने महालक्ष्मीक्षेमङ्करी-हरसिद्धयस्तित्र एव लक्षिताः । एताः सर्वाश्चतुर्बाहवः । किमिति बाहव एव केवलं लक्षिता इति न लक्षयामः ।

(अदो ? आदौ) तत्र(१) महालक्ष्मी(२) (न ? नं)न्दा
(३)क्षेमकरी तथा ।
(४)सर्वती (५) महरण्डा च (६) भ्रमणी (७)सर्वमङ्गला ॥ ४८ ॥
(८)रेवती (९)हरसिद्धिश्च नवदुर्गाभिधानकम् ।

[ इति नवदुर्गानामानि ]

(पृथुमे ? पृथगे) कैकस्यानुक्रमं कथयिष्याम्यनुक्रमात् ॥४९॥
वरदं त्रिशूलं खेटं पानपात्रञ्च बिभ्रती ।
नागनीलकण्ठमध्ये महालक्ष्मी(ः) प्रकीर्त्तिता ॥ ५० ॥

[ इति महालक्ष्मीः ]

अक्षसूत्रं खड्गखेटं पानपात्रं तथोत्तमम् ।
नन्दा नाम (संख्या ? समाख्या)ता पूज्यते नन्दहेतवे ॥ ५१ ॥

[ इति नन्दा ]

वर(दं ?) त्रिशूलं पद्मं च पानपात्रं विधृत् करे ।
क्षेमङ्करी तथा नाम क्षेमारोग्यप्रदायिनी ॥ ५२ ॥

[ इति क्षेमङ्करी ]

कमण्डलुं चक्रखेटं पानपात्रं तथोत्तरे ।
सर्वती च तदा नाम ( सर्वकृष्ट ? ) प्रदायिनी ॥ ५३ ॥

[ इति सर्वती ]

खड्गं तथा त्रिशूलं च घण्टापात्रं तथोन्नतम् ।
महरण्डा (तथोन्नाम ? तथा नाम) वन्दिता त्रिदशैरपि ॥५४॥

[ इति महरण्डा ]

---

४८ । 'क्षेमकरी'त्यत्र 'क्षेमङ्करी'ति लक्षणनिरूपणवेलायाम् ।

४९ । अनुक्रमं क्रमेण एकैकस्याः कथयिष्यामि लक्षणमिति शेषः ।

५० । नागनीलकण्ठयोरुपादानप्रयोजनमनुसन्धेयम् ।

खड्गं डमरुखेटपाशं बिभ्रती च करोत्तमैः ।
भ्रामणी च तदा नाम भ्रामयेद् दुष्टचेतसः ॥ ५५ ॥

[ इति भ्रमणी ]

अक्षसूत्रं तथा वज्रं घण्टापात्रं तथोत्तमम् ।
सर्वमङ्ग(ल ? ला) मङ्गल्या सर्वविघ्नविनाशिनी ॥ ५६ ॥

[ इति सर्वमङ्गला ]

दण्डत्रिशूलं खट्वाङ्गं पानपात्रं च बिभ्रती ।
रेवती च तदा नाम सर्वशान्तिप्रदायिनी ॥ ५७ ॥

[ इति रेवती ]

कमण्डलुं खड्गडमरुं पानपात्रं तथा शुभम् ।
हरसिद्धिस्तदा नाम सर्वस्य सिद्धिहेतवे ॥ ५८ ॥

[ इति हरसिद्धिः ]

इति नवदुर्गाः ।

क्षेत्रपालो विधातव्यो दिग्वासा घण्टभूषितः ।
कर्त्तिकां डमरुं बिभ्रद्दक्षिणे तु करद्वये ॥ ५९ ॥
वामे शूलं कपालं च मुण्डमालोपवीतकः ।
करोटि(नी ? नि)करोदारमालाग्रन्थितशेखरः ॥ ६० ॥

इति क्षेत्रपालः ।

---

५५ । उद्देशश्लोके 'भ्रमणी'ति वर्त्तते अत्र च भ्रामणीति दृश्यते, कतरदेतयोः परिवर्त्तनमर्हतीत्यनिश्चिन्वानैरस्माभिः क्वापि न व्यापारितो हस्तः, परं प्रथमपरित्यागे मानाभावं मन्यमानैः पुष्पिकायां 'भ्रमणी'ति विहितम् ।

५९-६० । क्षेत्रपालं लक्षयति—क्षेत्रपाल इति । शिल्परत्नेऽयमादौ सात्त्विकादिभेदेन त्रिधा भिद्यते सात्त्विकश्च द्विभुजचतुर्भुजत्वेन पुनर्द्विधेति साकल्येन चतुर्विधः । रूपमण्डने पुनरेक एव चतुर्भुजः । तथाच—

क्षेत्रपालो विधातव्यो दिग्वासा घण्टभूषितः ॥
( कार्त्तिकां ? कर्त्तिकां ) डमरुं बिभ्रद्दक्षिणे तु करद्वये ।
वामे शूलं कपालञ्च मुण्डमालोपवीतकम् ।
करोति(?)कटितोदारसर्पग्रन्थितशेखरः ॥ इति (अ० ९; श्लो० ७४-७५) ।

अथातः संप्रवक्ष्यामि (मात ? मातृ)रूपाणि ते (जया ? जय) ।
तत्र ब्राह्मी चतुर्वक्त्रा (पाठ ? षड्)भुजा हंससंस्थिता ॥ ६१ ॥
पिङ्गलीभूषणोपेता मृगचर्मोत्तरीयका ।
वरं सूत्रं कजं धत्ते दक्षबाहुत्रये क्रमात् ॥ ६२ ॥
वामेषु पुस्तकं (कुण्डी ? कुण्डीं) बिभ्र(त्ती ? ती) चाभयप्रदा ।

[ इति ब्राह्मी ]

माहेश्वरी वृषारूढा पञ्चवक्त्रा त्रिलोचना ॥ ६३ ॥
बालेन्दुभृज्जटाजूटसुशोभा सर्वसौख्यदा ।
षड्भुजा ( दर ? वर )दा दक्षे सूत्रं डमरुकं तथा ॥ ६४ ॥
शूलं घण्टाभयं वामे सैव धत्ते महाभुजा ।

[ इति माहेश्वरी ]

कौमारी रक्तवर्णा स्यात् षड्वक्त्रा सार्कलोचना ॥ ६५ ॥
रविबाहुर्मयूरस्था वरदा शक्तिधारिणी ।
पताका बिभ्रती दण्डं (पानं ? पाशं) बाणञ्च दक्षिणे ॥ ६६ ॥

---

करोटीति। करोटिनिकरेण ललाटास्थिसमूहेन ग्रथिता या उदारा महती माला तया ग्रन्थितः शेखरः शिरस्यकेशजूटो यस्य सः। अयमेव पाठः साधीयानिति प्रतिभाति, शिल्परत्ने (उ० अ० २९, श्लो० १०८) 'नानानागविभूषितत्व'स्योक्तत्वेऽपि रूपमण्डनीयपाठश्चिन्त्य एव।

६१। इदानीं सप्त मातॄर्लक्षयति—अथात इति। 'जय' इति विश्वकर्मणोऽन्यतममानसपुत्रस्य नाम। शिल्पशास्त्रस्य प्रवक्ता विश्वकर्मा बोद्धव्यश्च तत्पुत्रेष्वन्यतमो जयो नामेति प्रसिद्धिरिति युज्यत एव तत्सम्बोधनम्।

६२। पिङ्गली सुवर्णम्। कजं पद्मम्। दूरभिन्नमेवास्य लक्षणं शिल्परत्न- ( उ० अ० २९, श्लो० ७६ ) रूपमण्डनयोः ( अ० ९, श्लो० ६१-६३ )। तयोरियं चतुर्भुजा।

६३। इयमपि चतुर्भुजा शिल्परत्नरूपमण्डनयोः।

६५। सार्कलोचनेति। सा अर्कलोचनेति च्छेदः, अर्कलोचना द्वादशनेत्रा। यद्वा, अर्कलोचनैः सह वर्त्तमानेति विग्रहः। रविबाहुर्द्वादशभुजा। इयमपि शिल्परत्न-रूपमण्डनयोश्चतुर्भुजा।

वामे चापमधो घ(ण्टा ? ण्टां) कमलं कुक्कुट(स्त्व ? न्त्व)धः ।
परशुं बिभ्रती दक्षे तदधस्त्वभयान्विता ॥ ६७ ॥

[ इति कौमारी ]

वैष्णवी तार्क्ष्यगा श्यामा षड्भुजा वनमालिनी ।
वरदा (दा ? ग)दिनी दक्षे दधती चाऽऽयुधस्रजम् ॥ ६८ ॥
शङ्खचक्राभ(या ? यैः) वामे (सचैर्य ? सा चैव) विलसद्भुजा ।

[ इति वैष्णवी ]

कृष्णवर्णा तु वाराही शूकरास्या महोदरा ॥६९॥
वरदा दण्डिनी खड्गं बिभ्रती दक्षिणे सदा ।
खेटपाशाभ(या ? यैः)वामे सैव चापि लसद्भुजा ॥७०॥

[ इति वाराही ]

ऐन्द्री सहस्रदृक् सौम्या हेमाभा गजसंस्थिता ।
वरदा सूत्रिणी वज्रं बिभ्रत्यूर्द्ध्वं तु दक्षिणे ।
वामे तु कलशं पात्रमभयं तदधःकरे ॥ ७१ ॥

[ इति ऐन्द्री ]

चामुण्डा प्रेतगा रक्ता विकृतास्याऽहिभूषणा ।
दंष्ट्र(दा ? ला) क्षीणदेहा च गर्त्ताक्षी भीमरूपिणी ॥ ७२ ॥
दिग्बाहुः क्षामकुक्षिश्च मुसलं ( चक्रयं ? चक्रकं ) शरः ।
अङ्कु(शी ? शं) बिभ्रती खड्गं ... ... चाप्यथ वामतः ॥७३॥
खेटं पाशधनुर्दण्डकुठारं (वे ? चे)ति बिभ्रती ।

[ इति चामुण्डा ]

---

६९ । शङ्खचक्राभयैरिति । वामभागे शङ्खचक्रादिभिर्विलसद्भुजेत्यन्वयः ।

७१ । ऊर्द्ध्वं इत्यूर्द्ध्वक्रमेण ।

७३ । 'अङ्कुशं बिभ्रती खड्गं' इत्यनन्तरं त्रुटितस्थाने 'सव्ये' इति स्यात् ।

चण्डिका श्वेतवर्णा स्या(त्रावा ? च्छवा)रूढा च षड्भुजा ।
जटिला च लसत्त्र्यक्ता वरदा शूलधारिणी ॥ ७४ ॥
कर्त्तिकां बिभ्रती दत्ते पाशपात्राभयान्यतः ।

[ इति चण्डिका ]

इत्ये(हं ? ता ) मातरः प्रोक्ता रूपभेदव्यवस्थया॥ ७५ ॥
भैरवं कारयेत्तत्र नृत्यमानं विकारणम् ।
गणेशमादौ कर्त्तव्यमन्ते कुर्याच्च भैरवम् ॥ ७६ ॥
मातृणां मध्यतः कार्याः पंक्ति(शो ? शः ) चण्डिकादयः ।
वीरेश्वर(स्य ? श्च ) भगवान् वृषारूढो धनुर्धरः ॥ ७७ ॥
( वीणाहस्त ? वीणां हस्ते )त्रिशूलश्च बाणं चैव प्रकारयेत् ।
वीरेश्वरस्य रूपं तु मातृणामग्रतो भवेत् ॥ ७८ ॥

इति मातरः ।

[ अथ द्वादश सरस्वत्यः ]

एकवक्त्रा(ः) चतुर्भुजा मुकुटेन विराजिता(ः) ।
प्रभामण्डलसंयुक्ता(ः) कुण्डलान्वितशेखरा(ः) ॥ ७९ ॥

[ इति सरस्वतीनां साधारणलक्षणम् ]

अक्षपद्मं वीणापुस्तकं महाविद्या प्रकीर्त्तिता ।

[ इति महाविद्या—१ ]

अक्षं पुस्तकं वीणा पद्मं महावाणी च नामतः ॥ ८० ॥

[ इति महावाणी—२ ]

---

७६ । प्रसङ्गान्मात्रायतने कर्त्तव्यानामन्येषां नामान्याह—भैरवमिति । गणेशमादाविति । अत्र आद्यन्तादिपदानि किंसम्बन्धीनीति न विद्मः । 'मध्ये च मातृकाः कार्या अन्ते तेषां विनायकः' ( अ० ९, श्लो० ७४ ) इति रूपमण्डने सन्निवेशस्य वैपरीत्यं दृश्यते । कतरदेतयोर्युक्ततरमिति शिल्पिन एव निर्धारयन्तु ।

७९-८० । इदानीं द्वादश सरस्वतीर्लक्षयन् प्रथममासां साधारणं लक्षणमाह—एकवक्त्रा इति । एताः सरस्वत्यो नेतरत्र लभ्यन्ते । यत्र यत्र पुस्तकमिति त्र्यक्षरेण नाम्ना छन्दसोऽपकृतम् , तत्र तत्र पुस्तमिति पाठेऽपि न क्षतिः ।

वराक्षपद्मपुस्तकं शुभावहा च भारती ।

[ इति भारती—३ ]

वराम्बुजाक्षपुस्तकं सरस्वती प्रकीर्त्तिता ॥ ८१ ॥

[ इति सरस्वती—४ ]

वराक्षं पुस्तकं पद्मम् आर्या नाम प्रकीर्त्तिता ।

[ इत्यार्या—५ ]

वरपुस्तकाक्षपद्मं ब्राह्मी नाम सुखावहा ॥ ८२ ॥

[ इति ब्राह्मी—६ ]

वरपद्मवीणापुस्तकं महाधेनुश्च नामतः ।

[ इति महाधेनुः—७ ]

वरश्च पुस्तकं वीणा वेदगर्भा तथाऽम्बुजम् ॥ ८३ ॥

[ इति वेदगर्भा—८ ]

अक्षं तथाऽभयं पद्मं पुस्तकेनेश्वरी भवेत् ।

[ इतीश्वरी—९ ]

(असपत्तं ? अक्षं पद्मं) पुस्तकश्च महालक्ष्मीस्तथोत्पलम् ॥८४॥

[ इति महालक्ष्मीः—१० ]

अक्षं पद्मं पुस्तकं च महाकाल्यभयं तथा ।

[ इति महाकाली—११ ]

अक्षपुस्तकमभयं पद्मं महासरस्वती ॥ ८५ ॥

[ इति महासरस्वती—१२ ]

इति द्वादश सरस्वत्यः ।

अष्टादश(जया ? भुजा) कार्या भद्रकाली मनोहरा ।
(अ ? आ)लीढस्थानसंस्था तु कर्त्तव्या सौख्यदायका ॥ ८६ ॥
अक्षमाला त्रिशूलश्च खड्गश्चक्रं करेषु च ।
वामे तु चापं कर्त्तव्यं शङ्खपद्मौ तथैव च ॥ ८७ ॥

---

८६ । आलीढेति । दक्षिणं पादमग्रतः कृत्वा वामपादाकुञ्चनमालीढस्थानम्, तेन सन्तिष्ठत इति आलीढस्थानसंस्था ।

श्रुव(स्रुचौ ? स्रुचौ) च कर्त्तव्यौ तथा वैदिकमण्डलुः ।
दण्डशक्तिश्च कर्त्त(व्यं ? व्या) कृष्णाजिनहुताशनौ ॥ ८८ ॥
(अ ? ह)स्तानां भद्रकाल्यास्तु भवेत् (कौतस्तु ?) शोभनः ।
एकश्चैव महाभाग रत्नपात्रधरो भवेत् ॥ ८९ ॥

इति भद्रकाली ।

निगद्यते ह्यथो चण्डी हेमभासा सुरूपिणी ।
त्रिनेत्रा यौवनस्था च पीतपीनपयोधरा ॥ ९० ॥
एकवक्त्रा तु सुग्रीवा बाहु(वं ? विं)शतिसंयुता ।
शूलासिशक्तिचक्राणि गदाशङ्खपवीन(पी ? पि) ॥ ९१ ॥
ऊर्द्ध्वादिक्रमयोगेण बिभ्रती सासवा शुभा ।
शस्त्रोद्यतकरः क्रुद्धस्तद्ग्रीवासम्भवः पुमान् ॥ ९२ ॥
शूलभिन्नो वमद्रक्तो रक्त(भू ? भ्रू)मूर्द्धजेक्षणः ।
सिंहेन खाद्यमानश्च पाशाबद्धो गले भृशम् ॥ ९३ ॥
यात्यहो क्रान्तसिंहा च सव्यं द्योलीढगासुराः (?) ।
चण्डी चोद्यतशस्त्रा च महिषासुरघातिनी ॥ ९४ ॥

इति चण्डी ।

---

९१ । इह बाहुर्विंशतिपर्याप्तानामायुधानामुल्लेखो नास्ति । यद्यपि 'ऊर्द्ध्वादिक्रमयोगेण' इति परत उक्तया निर्दिष्टान्येवाऽऽयुधानि वामे दक्षिणे चेत्यायाति आदिपदसामर्थ्यात्, तथाऽपि न साकल्यतो विंशतिर्भवन्त्यायुधानि, मूले अष्टानामेवाऽऽयुधानां निर्देशात् । आग्नेये तु—

'शूलासिशक्तिचक्राणि पाशं खेटायुधाभयम् ।
डमरुं शक्तिकां वामैर्नागपाशञ्च खेटकम् ॥
कुठाराङ्कुशचापांश्च घण्टाध्वजगदास्तथा ।
आदर्शमुद्गरान् हस्तैः'······ ॥ ( अ० ५०, श्लो० १-३ )

इति विंशतिरेवाऽऽयुधानि प्रतिपादितानि ।

९४ । 'याम्याङ्घ्र्याक्रान्तसिंहा च सव्याङ्घ्रिर्नीचगासुरे' इत्याग्नेये (अ० ५०, श्लो० ५) ।

चण्डिकायतनोक्ता (च ? नां) कथयिष्याम्यनुक्रमम् ।
वेतालो वरटश्चैव पिङ्गाक्षो भृकुटिस्तथा ॥ ९५ ॥
धूम्रकः कण्ठहक् चैव रक्ताक्षश्च सुलोचनः ।
दंष्ट्राननश्च विकटः कोपस्फुरद्दशनोज्ज्वलः ॥ ९६ ॥
तर्जनी खट्वाङ्गं चैवोर्द्ध्वं स्या ( स्याद् ) डमरुदण्डकौ ।
वेतालस्तु समाख्यातः सव्यापसव्ये करटकः ॥ ९७ ॥
अभयं खड्गखेटश्च दण्डं पिङ्गललोचनः ।
अभयापसव्ययोगेन भवेद् भृकुटिनामतः ॥ ९८ ॥
तर्जनीवज्राङ्कुशदण्डं धूम्रको नाम कीर्त्तितः ।
सव्यापसव्ययोगे च भवेत् (कक ? कुक)दनामकः ॥ ९९ ॥
तर्जनीत्रिशूलहस्तं खट्वाङ्गं दण्डमेव च ।
रक्ताक्षो नाम तस्यैव सव्यापसव्ये सुलोचनः ॥ १०० ॥

इति चण्डिकाप्रतीहाराः ।

दिव्याम्बुजकरा ( कुर्या ?कार्या ) सर्वाभरणभूषिता ।
गौरी शुक्लाम्बरा देवी रूपेणाप्रतिमा भुवि ॥ १०१ ॥
प्रथमा चतुर्भुजा कार्या देवी सिंहासने शुभा ।
सिंहासनं प्रकर्त्तव्यं कमलं चारु(व ? क)र्णिकम् ॥ १०२ ॥

---

९९। आयुधप्रतिपादनावसरे शततमश्लोके 'ककुद' इति नामदर्शनादिहापि तदेव नाम युक्तमिति 'धूम्रकः ककुदश्चैव' इति पाठः स्यात् ।

वेता (ल ? लः) करटश्चैव पिङ्गाक्षो भृकुटिस्तथा ।
सूत्रकः कङ्कदश्चैव रक्ताक्षश्च सुलोचनः ॥ ( अ० ५, श्लो० ५१-५२ )

इति रूपमण्डने नाम्नो वैलक्षण्यमुपलभ्यते ।

९७। करटक इति पूर्वं 'वेतालो वरटश्चैव' इति घोषवद्वर्णनिमित्तक-विसर्गसन्धिदर्शनात् सन्नपि रूपमण्डने 'करट' इति पाठो नोपात्तः, अत्र पुनः 'करट' इति दृश्यते । परमत्र साधकबाधकप्रमाणाभावादेकाक्षरमात्रकृता 'वरटे'ति शुद्धिः शक्यसम्पादनेति मन्यामहे ।

अष्टपत्रं महाभा(ग ? गा) कर्णिकायान्तु संस्थिता ।
विनायकवदासीना देवी कार्या महाभुजा ॥ १०३ ॥
बृहन्नालं करे कार्यं तस्याधः कमलं शुभम् ।
दक्षिणे यादवश्रेष्ठः केयूरप्रान्तसंस्थितः ॥ १०४ ॥
वामेऽमृतघटः कार्यस्तथा तस्या मनोहरः ।
तस्या (:) सव्यौ क(रे ? रौ) कार्यौ विल्वशङ्खध(रे ? रौ) क्रमात् ॥ १०५ ॥
आवर्जितघटं कार्यं तत्पृष्ठं च करद्वयम् ।
देव्याश्च मस्तके पद्मं तथा कार्यं मनोहरम् ॥ १०६ ॥

इति लक्ष्मीः ।

---

१०२-३ । सिंहासनमिति । चारुकर्णिकम् अष्टपत्रं कमलं सिंहासनं प्रकर्त्तव्यं सिंहासनत्वेन कल्पनीयम् । तस्य कर्णिकायां महाभागा देवी संस्थिता इत्यन्वयः । 'अष्टपत्राम्बुजस्योर्द्ध्वं लक्ष्मीः सिंहासने शुभे । विनायकवदासीना सर्वाभरणभूषिता ॥' इति रूपमण्डनीय-(अ० ९, श्लो० ९७) पाठदर्शनादम्बुजोपरि सिंहासनं तत्र लक्ष्मीर्विनायकवदासीना इत्यर्थः सम्पद्यते । अयमेव यदि प्रमाणं तदा 'सिंहासनं प्रकर्त्तव्यं कमले चारुकर्णिके । अष्टपत्रे' इति पाठपरिवर्त्तनेनात्रत्यं पादत्रयं शोधनीयम् । विनायकवदासीनेत्यनेन किं लक्ष्यत इति न विद्मः ।

१०६ । आवर्जितघटमिति—

'आवर्जितघटं कार्यं तत्पृष्ठे च करिद्वयम्'

इति स्यात् । अस्यार्थः—तस्या देव्याः पृष्ठे पृष्ठपार्श्वयोरित्यर्थः, आवर्जितघटम् अवनमितकलसद्वयं करिद्वयं हस्तिनौ कार्यम् इति । इदं मतान्तरम् 'उत्तप्तहाटकनिभा करिभिश्चतुर्भिरावर्जितामृतघटैरभिषिच्यमानां' इत्यन्यत्रोक्तेः,

मुक्तागौरैश्चतुर्भिर्द्विपपतिभिरथो पुष्करोद्यद्घटास्या-
न्निर्यद्द्रवाभिषिक्ता करकमललसत्पद्मयुग्माभयेष्टा ।
नानाकल्पाभिरामा द्रुतकनकनिभा रक्तपङ्केरुहस्था
रम्याङ्गी सुप्रसन्ना वितरतु विपुलां सन्ततं श्रीः श्रियं वः ॥

इति शिल्परत्नवचनाच्च (उ० भा० अ० २४ श्लो० ९) । करिद्वयपक्षमप्यनुगृह्णाति—

क्षेत्रे कोल्लापुरादन्ये महालक्ष्मीर्यदाऽर्च्यते ।
लक्ष्मीवत् सा तदा कार्या रूपाभरणभूषिता ॥ १०७ ॥
दक्षिणाधः करे पात्रमूर्द्ध्वे कौमोदकी भवेत् ।
वामार्धे खेटकं धत्ते श्रीफलं तदधःकरे ॥ १०८ ॥

इति महालक्ष्मीः ।

कात्यायन्याः प्रवक्ष्यामि रूपं दशभुजं तथा ।
त्रयाणामपि देवानामनुकारानुरूपिणी ॥ १०९ ॥
जटाजूटसमायु(क्तं ? क्तां) मध्ये न्दुकृतलक्ष(णम् ? णाम्) ।
लोचनत्रयसंयुक्तां पद्मेन्दुसदृशान(नम् ? नाम् ) ॥ ११० ॥
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ।
नवयौवनसंयुक्तां सर्वाभरणभूषिताम् ॥ १११ ॥
सुचारुवदनां तद्वत् पीनोन्नतपयोधराम् ।
त्रिभङ्गस्थानसंस्थानां महिषासुरसूदनीम् ॥ ११२ ॥

---

शुभ्रैर्भद्रयपुष्करैरितघटश्च्योतद्विशुद्धोदकैः
स्नायन्तीमतिहृद्यरूपविभवां नीलोल्लसत्कुन्तलाम् ।
शुभ्राकल्पविशेषविभ्रमरसामुत्तप्तहेमप्रभां
वन्दे बाहुयुगप्रसक्तकमलां देवीं सरोजासनाम् ॥

इति शिल्परत्नीयमेव पद्यान्तरम् ( उ० भा० अ० २४, श्लो० १० ) ।

१०७ । कोल्लापुरादन्ये अन्यस्मिन् क्षेत्रे इत्यन्वयः ।

१०९ । कात्यायनीमूर्त्तिमाह—कात्यायन्या इति । प्रायेणाविकलं मत्स्यपुराणीयं दशभुजाध्यानमिदम् । ( अ० २६०, श्लो० ५५-६५ ) विकलानि स्थानानि यथावसरं प्रदर्शयिष्यन्ते । त्रयाणामपीति, ब्रह्मविष्णुमहेश्वराणां प्रतीकरूपामित्यर्थः । 'अनुकारानुकारिणीम्' इति मात्स्ये ।

११० । 'अर्धेन्दुकृतशेखरामि'ति द्वितीयचरणे, 'पूर्णेन्दुसदृशाननामि'ति चतुर्थचरणे मात्स्यानुमतः पाठः ।

१११ । 'नवयौवनसम्पन्नामि'ति तृतीयचरणगतो मात्स्ये पाठः ।

११२ । 'सुचारुदशनामि'ति प्रथमपादे 'महिषासुरमर्दिनीमि'ति चतुर्थपादे मात्स्यानुगतः पाठः ।

त्रिशूलं खड्गचक्रौ च बाणं शक्तिं च दक्षिणे ।
वामे ( च ) खेटकं चापं पाशमङ्कुशमेव च ॥ ११३ ॥
घण्टां वा परशुं वाऽपि वामहस्ते नियोजयेत् ।
अधस्तान्महिषं तद्वद् विशिरस्कं प्रकल्पयेत् ॥ ११४ ॥
शिरश्छेदोद्भवं तद्व( दा ? द्दा )नवं खड्गपाणिनम् ।
हृदि शूलेन निर्भिन्नं निर्य(द्दन्त?दन्त्र)विभूषितम् ॥ ११५ ॥
रक्तर(क्तिक ? क्तीकृ)ताङ्गश्च रक्तविस्फारितेक्षणम् ।
वेष्टितं नागपाशैश्च भृकुटीभीषणान (ना ? नम् ) ॥ ११६ ॥
देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् ।
किञ्चिदूर्द्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ॥ ११७ ॥

इति कात्यायनीमूर्त्तिः ।

[ नृत्ये संस्थानवैशिष्ट्यम् ]

भङ्गे भङ्गे मुखं कुर्याद्ध( स्ते ? स्तौ ) दृष्टिं च नर्त्तने ।
हस्तकाद्यं भवेल्लोके कर्मणोऽभिनयेऽखिलम् ॥ ११८ ॥

---

११३ । 'त्रिशूलं दक्षिणे दद्यात् खड्गं चक्रं क्रमादधः ।
तीक्ष्णबाणं तथा शक्तिं वामतोऽपि निबोधत ॥
खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च ।' इति मात्स्ये ।

११४ । 'वामतः सन्निवेशयेदि'ति मात्स्ये पाठः । 'प्रकल्पयेदि'त्यत्र 'प्रदर्शयेदि'ति मात्स्ये पाठो ध्येयपरत्वेन निर्देशाद् यथा सुश्लिष्ट एवमिहापि निर्मेयत्वेनोपपादनात् 'प्रकल्पयेदि'त्येव पाठः प्रकृतोपयोगी ।

११६ । एतस्माच्छ्लोकात् परं 'सपाशवामहस्तेन धृतकेशञ्च दुर्गया । वमद्रुधिरवक्त्रञ्च देव्याः सिंहं प्रदर्शयेत् ॥' इत्ययं श्लोकोऽधिको मात्स्ये ।

११८ । 'भैरवं कारयेत्तत्र नृत्यमानं विकारणम्' ( ८।७७ ) इत्यादिपद्ये नृत्यन्मूर्त्तिदर्शनात्तदुपयोगितयाऽस्थान एव नृत्यसंस्थानं दर्शयितुमाह—भङ्गे भङ्गे इति । नर्त्तने भङ्गे भङ्गे नर्त्तनस्य प्रतिविच्छेदं प्रतिपादक्षेपमिति यावत्, मुखं हस्तौ दृष्टिञ्च कुर्याद् विदध्यात्, नर्त्तनविषयोपयोगितया मुखादीनि विन्यस्येदित्यर्थः । अथवा तृतीयश्लोके 'आस्येनाऽऽलम्बयेद् गीतम्' इति दर्शनाद् गीतस्य भङ्गे भङ्गे मुखं कुर्यात्, नृत्ये हस्तौ दृष्टिञ्च कुर्यादित्यर्थः कार्यः ।

[ हस्तादीनां रसाभिव्यञ्जकता ]

यतो हस्तस्ततो दृष्टि (य ? र्य) तो दृष्टिस्ततो मनः ।
यतो मनस्ततो भावो यतो भावस्ततो रसः ॥ ११९ ॥

---

मुखादीनां प्रातिस्विकं विषयम् 'आस्येनाऽऽलम्बयेद् गीतम्' इत्यादौ दर्शयिष्यति । कथमेवं कुर्यादित्यपेक्षायामाह—हस्तकाद्यमिति । यतः हस्तकाद्यं मुखहस्तदृष्टयः लोके कर्मणश्चलनभोजनादेरभिनये अवस्थानुकारे अखिलं सप्रयोजनं भवेत् । यथाहि लोके वाचा स्वं स्वं मनोगतं प्रकाश्यते एवमेव हस्तादेरिङ्गितेनापि तत् प्रकाशयितुमर्हेदित्यर्थः । अत्र पूर्वार्धे मुखस्य प्राङ्निर्देशादिह 'मस्तकाद्यम्' इत्येव पाठः साधीयानिति प्रतिभाति । यथाश्रुतपाठे 'हस्तकाद्यम्' इत्यत्राऽऽदिपदम् आद्यन्तयोर्मुखदृष्ट्योर्ग्राहकम् ।

११९। सम्प्रति हस्तादीनां रसाभिव्यक्तौ कारणतामाह—यत इति । अत्र नृत्यप्रसङ्गात्तदुपयोगितया रसस्यैव चरमभाविफलत्वमुक्तम्, समराङ्गणसूत्रधारे तु—

रसानामथ वक्ष्यामो दृष्टीनां चेह लक्षणम् ।
तदायत्ता यतश्चित्रे भावव्यक्तिः प्रजायते ॥ (अ० ८२, श्लो० १)

इति चित्रविषयत्वेन भावाभिव्यक्तेरेव चरमफलत्वमुक्तम् । तत्र भावाभिव्यक्तेर्दृष्ट्यायत्तत्वं दृष्टिव्यङ्ग्यत्वम्, रसायत्तत्वं रसानुसारित्वमिति विवेकः ।

सम्प्रति व्याख्यायते—यतो यस्मिन् विषये हस्तः प्रवर्त्तते, हस्तो यं विषयं प्रतिपादयतीत्यर्थः, दृष्टिरपि ततस्तत्रैव भवेत्, हस्तानुगुणविषये एव दृशं प्रवर्तयेदित्यर्थः । यत्र दृष्टिस्तत्र मनः, मनोऽपि दृष्ट्यनुकूलविषये निवेशयेदित्यर्थः । यत्र मनस्तत्र भावः तस्य मनोविकाररूपत्वात् ; यथोक्तं 'निर्विकारात्मके चित्ते भावः प्रथमविक्रिये'ति । यत्र भावश्चित्तविक्रिया तत्रैव रसो भवेत्, रसस्य विभावानुभावव्यभिचारिभावव्यङ्ग्यस्थायिभावरूपत्वेन तस्य भावस्य चाविनाभावत्वेन प्रतीतेः । अत्र हस्तदृष्टिमनसां व्यापारः कर्त्तृसाध्यः, इतरयोस्तु व्यापारः प्रतिबन्धापगममात्रेण यदृच्छयोत्पद्यत इति भेदः, रसस्तु फलीभूत इति न तस्य व्यापारचिन्ता । अत्र भावपदेन स्थायी भाव उच्यते । अत्र च चित्रे रसाभिव्यञ्जनार्थमुपक्षिप्तमिदं पद्यमिति प्रत्यक्षयोर्हस्तदृष्ट्योरेवात्रोपयोगो न त्वप्रत्यक्षस्य मनसः, तथाऽप्यस्य दृष्टिप्रेरकत्वेन भावकारणत्वेन चोपन्यासो नानुपयोगमर्हति । एवं यद्यपि चित्रे भावरसयोर्विवेकोऽप्यनतिप्रयोजनीयस्तथाऽपि रसस्य मुख्यफलत्वेऽविसंवादात्तदुपस्थापनञ्चोपयुज्यत इति ज्ञेयम् ।

यस्य खलु चित्रस्य हस्तौ युद्धायोद्युक्तौ तस्य कथं भावः स्यात् कथं वा दृष्टिरित्यादिसंशयापनुत्त्यर्थमयमारम्भः । तथा च यस्य हस्तौ युद्धव्यापृतौ तस्य प्रायेणोत्साहो भावो दृष्टेरुज्ज्वलत्वादिना शिल्पिना प्रतिपाद्येतेत्यर्थः । उक्तञ्च समराङ्गणे—

[ नृत्ये आस्यादीनां प्रातिस्विकविषयनिरूपणम् ]

(अङ्गे?आस्ये)नाऽऽलम्बयेद् गीतं हस्तेनार्थं प्रकल्पयेत् ।
चक्षुर्भ्यां च भवेद् भावः पादाभ्यां तालनिर्णयः ॥ १२० ॥

[ ग्रन्थकृतः स्वाहङ्कारपरिहारः ]

श्रीविश्वकर्मणः शास्त्रे पुराणभरतागमे ।
रूपसंख्याऽप्यनेकाऽस्ति लेशोऽयं लिखितस्ततः ॥ १२१ ॥

[ ग्रन्थसमाप्तिः ]

यस्या नो कलयन्ति रूपमखिलं ब्रह्मादयो देवता
गौर्या विश्वमिदं विचित्ररचनाश्चर्यं समुत्पद्यते ।

---

प्रोक्तं रसानामिदमत्र लक्ष्म दृशाञ्च संक्षिप्ततया तदेतत् ।
विज्ञाय चित्रं लिखतां नराणां न संशयं याति मनः कदाचित् ॥
( अ० ८२, श्लो० ३९ ) इति ।

१२० । पुनरपि नृत्यादौ विशेषमाह—आस्येनेति । अत्र यथाश्रुतपाठे सामान्यवाचिना अङ्गशब्देन अङ्गविशेषो मुखं लक्ष्यते, यथा नदीविशेषजोऽपि गाङ्गेयः शान्तनवो नदीज इति । श्लोकः स्पष्टार्थः । समराङ्गणसूत्रधारे—

हस्तेन सूचयन्नर्थं दृष्ट्या च प्रतिपादयन् ।
सजीव इति दृश्येत सर्वाभिनयदर्शनात् ॥
इति ( अ० ८२, श्लो० ३३-३४ ),

आङ्गिके चैव चित्रे * * * साधनमुच्यते ।
( भवेदत्रादत ? ) स्तस्मादनयोश्चित्रमाश्रितम् ॥

इति यथोक्तमर्थमनुवदन्निव तस्य चित्रोपकारकत्वमपि व्यादिदेश । नन्दिकेश्वरविरचिते अभिनयदर्पणे ( Calcutta Sanskrit Series, No. V. )—

चक्षुर्भ्यां दर्शयेद् भावं पादाभ्यां तालमादिशेत्'

इति द्वितीयचरणपरिवृत्त्याऽयं श्लोकः, अविकलः पूर्वश्लोकश्च वर्त्तते ।

१२१ । सम्प्रति ग्रन्थकर्त्ता स्वकृतेरसमग्रत्वमन्यच्छायायोनित्वञ्च प्रत्याययति—श्रीविश्वकर्मण इति । पुराणे मात्स्याग्नेयविष्णुधर्मोत्तरादौ भरतागमे भरतकृतनाट्यसूत्रादौ च रूपसंख्याऽपि, न केवलं नृत्यगीतादिगतविशेष इत्यपेरर्थः, अनेका अस्ति, मया तु ततो लेशोऽल्पमात्रं लिखितः । आस्तां नाम नृत्यगीतादिविषयके विशेषे न्यूनता तत्रास्माकमनधिकारात्, यत्त्वस्मदधिकृतायां रूपसंख्यायामप्यसामग्र्यं तदेव मां दुःखाकरोतीति भावः ।

कल्पान्तावसरे सुरासुरगणो यस्यां समालीयते
तस्मात् ( स्या ? सा ) जगदम्बिकाऽखिलजगद्वन्द्या सुखं
यच्छतु ॥ १२२ ॥

इति श्रीक्षेत्रात्मज [ सूत्र ? ]-भृन्मण्डनविरचिते वास्तुशास्त्रे रूपावतारे
देवीमूर्त्तिलक्षणाधिकारो नाम अष्टमोऽध्यायः ॥ ८ ॥

समाप्तोऽयं ग्रन्थः ।

---

[ श्रीउमामहेश्वरार्पणमस्तु । शके १७५६ जयनामसंवत्सरे ( ज्ये ? ज्यै ) ष्ठे मासे कृष्णपक्षे त्रयोदश्यां भृगुवासरे समापितम् । सखोपन्तदादालिमये अष्टेकरयां चा पुस्तकावरूस नकल तयार केली आसें ॥ शके ॥ १७६८ ॥ जयनामसंवत्सरे माघकृष्ण ११ एकादश्यां मन्दवारे तारी २ माहे मार्च सन्न १८६७ इसवी रोजी नारायणकल लिहिणार त्र्यंबकाजी नारायण भरसा शीराहणार श्रीकन्हाडक्षेत्रस्थेन लिखि(त)म् ॥ स्वार्थं परोपकारार्थम् । श्रीकृष्णार्पणमस्तु ॥ श्री शुभं भवतु ॥
श्रीमहालक्ष्मी प्रसन्न ग्रन्थसं० ॥ ६०० ॥ ]*

---

१२२ । अस्याध्यायस्य देवीमूर्त्तिलक्षणाधिकारत्वेन, देवीनाञ्च गौरीप्रकृतिकत्वेन ग्रन्थ-समाप्तौ गौरीं स्तौति—यस्या नो इति । सा 'यस्मात् न कलयन्ती'त्यादि 'तस्माद'खिल-जगद्वन्द्येति हेतुहेतुमद्भावः ।

वैषम्याद् विषयस्य वा विरमणात्तत्सम्प्रदायस्य वा
मौर्ख्यादाक्षरिकस्य वा स्खलनतस्तस्यावधानस्य वा ।
सम्प्राप्ता य इह प्रमादनिचया याथार्थ्यबोधद्विष-
स्तांस्तान् शोधयितुं यथामति समालम्बि प्रयासो मया ॥

औदास्यतोऽत्र विदुषां न दृशां निपातः
सञ्जात इत्यनपनीतदुरूहभावे ।
शास्त्रे न शिल्पविषये विवृतिः सुकल्पा
ज्ञात्वाऽपि दिङ्नियमने मम कल्प एषः ॥

उपेन्द्रमोहनाख्येन कोटालीपाडजन्मना ।
साङ्ख्यतीर्थेन विप्रेण कालीक्षेत्रप्रवासिना ॥
काव्यप्रकाशं संस्कर्त्राऽष्टमतो दशमावधि ।
टीकेयं देवतामूर्त्तिगोचरा विहिता मया ॥

---

* आदर्शे लिपिज्ञतः स्वकीयोऽयं लेख उपलभ्यते ।

देवतामूर्त्तिप्रकरणस्थ-पाठेषु

# *रूपावतारे भेदाः

## प्रथमाध्याये

† १३। (१) 'हस्तादेर्वेद-' इत्यत्र 'हस्तादिवेद-'।

१५। (४) 'द्विभागा' इत्यत्र 'द्विभागे'।

१६। (४) 'द्विभागे' इत्यत्र 'द्विभागा'।

षोडशश्लोकात् परम्—

भागमेकं भवेत् पीतं (?) कनिष्ठा मध्यमो(न्त ? त्त )मा।
या प्रोक्ता द्वारमानेन साऽर्चा श्रेष्ठा प्रकीर्त्तिता॥ इत्यधिकम्।

१८। (३) 'दशहस्तादितो' इत्यत्र 'दशहस्तादिना'।

२०। (१) 'चतुरस्रीकृते' इत्यत्र 'चतुरस्रे कृते'।

२१। (३) 'दशांशेन' इत्यत्र 'दशांशोना'। (४) 'पञ्चांशेन' इत्यत्र 'पञ्चांशोना'।

२३। (२) 'शैलरत्न-' इत्यत्र 'स्वर्णरत्न-'। (४) 'शुभा' इत्यत्र 'तथा'।

२४। (३) 'स्फुटिताऽप्यर्च्या' इत्यत्र 'स्फुटिता पूज्या'।

(४) 'दुःखदायिका' इत्यत्र 'दोषदायका'।

२५। (३) 'काष्ठपाषाणजा भग्नाः' इत्यत्र 'काष्ठपाषाणनिष्पन्नाः'।

२६। ‡(५) 'वराहो वा' इत्यत्र 'वराहोऽथ'।

३६। षट्त्रिंशः श्लोकः सप्तत्रिंशश्लोकस्य प्रथमपादश्च न स्तः।

४०। (४) 'शमीत' इत्यत्र 'शमति'।

४१। (३) 'भूमेर्गोदानात्' इत्यत्र 'भूमौ गोदानात्'।

४४। (२) '............' इत्यत्र 'चैव जनमरकम्'।

४५। (१) 'नर्त्तनं' इत्यत्र 'नदनं'। (४) 'महद् भयम्' इत्यत्र 'भयं महत्'।

---

* एतद्ग्रन्थविवरणं भूमिकायां द्रष्टव्यम्।

† सर्वसङ्ख्या अङ्काः श्लोकानाम्, बन्धनीस्थाश्च श्लोकपादानामित्यनुसन्धेयम्।

‡ (५)-(६) इत्यङ्कद्वयं षट्पादश्लोकविषयम्।

४८। (४) '-स्तथा' इत्यत्र '-स्तदा'।

४६। (१) 'देवतायात्रा-' इत्यत्र 'दैवतयात्र-'।

५०। (२) 'प्रोद्भूतवैकृतं' इत्यत्र 'प्रोद्भूतं वैकृतम्'।

५२-५३। 'वेदव्यासे' इत्याद्यर्धात् परमर्धत्रितयं नास्ति।

अध्यायान्ते 'देवतामूर्त्तिप्रकरणे' इत्यत्र 'रूपावतारे'।

## द्वितीयाध्याये

१। (३) 'क्रमादशगुणं' इत्यत्र 'क्रमादष्टगुणं'।

(४) 'जनसंख्यैः कराङ्गुलैः' इत्यत्र 'जैनसंख्यैः करोऽङ्गुलैः'।

४। (१) 'तलमुखं' इत्यत्र 'तालमानं'।

५। (२) 'जनस्तथा' इत्यत्र 'जिनस्तथा'।

६। (१) 'पञ्चतालैश्च' इत्यत्र 'पञ्चतालञ्च'।

६। (२) 'ब्रह्मात्मा' इत्यत्र 'ब्रह्माद्या'। (५) 'जितेन्द्राश्च' इत्यत्र 'जिनेन्द्राश्च'।

१२। द्वादशश्लोकात् परम्—

'तालैः षोडशभिः क्र(द्दे ? दे) वीरूपाणि कारयेत्'। इत्यधिकम्।

२८। (१) 'विस्तर-' इत्यत्र 'विस्तरे'।

३०। (१) 'दीर्घे' इत्यत्र 'दैर्घ्ये'।

३३। (३) 'जरायुजाढ्यं' इत्यत्र 'जरायुजाद्यं'। (४) 'विश्वरूपं' इत्यत्र 'विश्वरूपी'।

अध्यायान्ते 'रूपावतारे देवतामूर्त्तिप्रकरणे' इत्यत्र केवलं 'रूपावतारे'।

## तृतीयाध्याये

१। (२) 'ब्रह्मांशे' इत्यत्र 'नवांशे'।

४-५। चतुर्थ-पञ्चमश्लोकौ न स्तः।

७। (१) 'मानुषं' इत्यत्र 'मानुष्यः'। (३) 'ब्रह्मविष्णवंशाः' इत्यत्र 'ब्रह्मविष्णवी(शं ? शाः)'।

८। (३) 'पैशाचके' इत्यत्र 'पैशाचिके'। (४) 'ब्रह्मांशे लिङ्गमैश्वरम्' इत्यत्र 'ब्रह्मांशं लिङ्गमीश्वरम्'।

६। (१) 'द्वारादयोऽष्टधा' इत्यत्र 'द्वारोदयोऽष्टधा'।

१६। षोडशश्लोको नास्ति।

२१ । (१-२) '-रेकनाभिर्जिने' इत्यत्र '-रेकनाभिजिने' ।

२२ । (४) 'ग्रहा मातृगणा-' इत्यत्र 'महामातृगणा-' ।

२३ । (३) 'दृष्टियातहितं' इत्यत्र 'दृष्टिघातहतं' । (४) 'पुराघं' इत्यत्र 'पुरा-( ग्रां?ग्रं )' ।

२७ । (१) 'सदनं' इत्यत्र 'वदनं' ।

२८ । अस्य श्लोकस्य स्थाने 'ज्ञात्वा स विश्वकर्मा सर्वद्यः' इति पाठः ।

अध्यायान्ते 'देवतामूर्त्तिप्रकरणे' इत्यत्र 'रूपावतारे' ।

## चतुर्थाध्याये

१ । (२) 'कमण्डलुवरान्वितः' इत्यत्र 'कमण्डलुकरान्वितः' ।

४ । (१) '-नामानं' इत्यत्र '-नामाऽयं' ।

५ । सपुष्पिक-पञ्चमश्लोकस्थाने 'अक्षसूत्रं पुस्त' इति पाठः ।

६ । (४) 'पितश्चाध्ययने रतः' इत्यत्र 'तपश्चाध्ययनोद्यतः' ।

१३ । (४) 'तं त्रिलोचनम्' इत्यत्र 'तत्त्रिलोचनम्' ।

१५ । (२) 'गृहाश्चैवोत्तरे' इत्यत्र 'ग्रहाश्चैवोत्तरे' ।

१७ । अस्य श्लोकस्य पूर्वार्धस्थाने—

'पद्मं शुचाऽक्षदण्डश्च सत्यभामा तु वामतः' इति पाठः

(४) 'कमण्डलुश्च' इत्यत्र 'कमण्डलु स' ।

१८ । (३-४) 'दण्डागमस्त्रवाक्कालं जयश्च' इत्यत्र 'दण्डागममस्त्रवाक्फलजयस्य' ।

१९ । (४) 'खड्गयुग्' इत्यत्र 'खेटको' ।

२० । (४) '-निभवः' इत्यत्र '-विभवः' ।

२१ । (२) 'ते जय' इत्यत्र 'तेजसः' ।

२३ । (२) 'सोम एव च' इत्यत्र 'सौभ एव च' ।

२४ । (४) 'पाणिवल्लभौ' इत्यत्र 'पाणिपल्लवौ' ।

२५ । (४) 'प्रधाना पद्म-' इत्यत्र 'प्रधानपद्म-' ।

२८ । (३) 'भर्गमूर्त्तिः' इत्यत्र 'भोगमूर्त्तिः' ।

३२ । (२) 'होमजलीलकम्' इत्यत्र 'होमजकीलकम्' ।

३३ । (१) 'सुदर्शना करा' इत्यत्र 'सुदर्शनकरा' ।

३६ । (१) 'आग्नेय तु' इत्यत्र 'आग्नेय्यां तु' ।

३७ । (४) '× × श्च' इत्यत्र 'प्राच्यां स्थाप्यश्च' ।

३८। (३) '-भगाम्बिकेश:' इत्यत्र 'भगोऽम्बिकेशा:'।

३९। अस्य श्लोकस्य पूर्वार्धं—

'श्रीकण्ठसूर्या(:)स्युरथोऽम्बिकाजा (:)
प्रदक्षिणं मध्यविदिक्षु पूज्या: ।' इति पाठः।

(४) 'विघ्नातिपरसंस्था:' इत्यत्र 'विघ्नानि परत्र सं वा ?'।

४०। (२) 'आनन्दश्चान्तक-' इत्यत्र 'आनन्दश्चाङ्गद-'।

(क) चत्वारिंशश्लोकस्य परार्धम् उत्तरपद्यञ्च न स्तः।

४२-४६। द्वाचत्वारिंशश्लोकात् षट्चत्वारिंशश्लोकान्तायां पञ्चश्लोक्यां पाठो विसंष्ठुलः।

४८। अष्टचत्वारिंशश्लोकस्य परार्धं—

'वामश्रुचवरे दोर्भ्यः शशाङ्कस्य निरूप्यते' इति पाठः।

५५। (१) 'शौरितिलसम्यमासं' इत्यत्र 'शौरिं नीलसमाभासं'।

५८। (१) 'गृहाः किरीटिनः कुर्यान्' इत्यत्र 'गृहाः किरीटिनः कार्या:'।

५९। (१) 'वरदं वज्राङ्कुशञ्च' इत्यत्र 'वद (?) वज्राङ्कुशं'।

६०। (४) 'मेषारूढं हुताशनम्' इत्यत्र 'मेषारूढो हुताशनः'।

६२। (२) 'कतिका' इत्यत्र 'कर्त्तिका'।

(४) 'श्वानरूपञ्च' इत्यत्र ( 'स्वा ? श्वा )नारूढञ्च'।

६४। (४) 'तलो दिशि' इत्यत्र 'ततो दिशि'।

६५। (१) '-निधिबीजपूरं' इत्यत्र '-निधिकरञ्चैव'।

(३) 'मृगारूढं' इत्यत्र 'गदारूढं'।

६६। (४) 'मित्रकोणके' इत्यत्र 'ईशकोणके'।

६७। (२) 'आदित्याद्या:' इत्यत्र 'आदित्यामी' (?)।

(४) 'पालकस्य:' इत्यत्र 'पालकः सः'।

अध्यायान्ते 'देवतामूर्त्तिप्रकरणे रूपावतारे' इत्यत्र केवलं 'रूपावतारे'।

पञ्चमाध्याये

२। (२) 'खाडशूलधरं लिखेत्' इत्यत्र 'क्षत्रियाणां फलप्रदौ'।

(३) 'क्षत्रियाणां फलप्रदौ' इत्यत्र 'त्रिविक्रमो वामनश्च'।

४। (४) 'चात्रिकाणां' इत्यत्र 'चक्रिकाणां'।

८। अस्य पूर्वार्धं—

'केशवः पद्म-शं-चं-गो मधुसूदनश्च शं-प-गः' इति पाठः।

(४) 'प-शं-ग-च' इत्यत्र 'प-शं-ग-चैः'।

१२। (१) 'नृसिंहश्च-प-गं-शश्च' इत्यत्र 'नृसिंहश्चक्र-पं-गं-शं'।

१३। (१) 'श-प-चां-गः' इत्यत्र 'श-पं-चागः'। (३) 'शं-च-ग-पः' इत्यत्र 'शं-च-प-गः'।

१४। (२) 'सृष्टिमाग्रतः' इत्यत्र 'सृष्टिमार्गतः'। (४) 'सर्वत्रेणायुध-' इत्यत्र 'सर्वत्रैवाऽऽयुध-'।

१५। (४) 'च वर्त्तुला' इत्यत्र 'सुवर्त्तुला'।

१८। (२) 'निद्राकुला' इत्यत्र 'छिद्राकुला'। (३) 'रेषाकुषा' इत्यत्र 'रेखाकुला'।

१९। (२) 'पायुनः' इत्यत्र 'या पुनः'।

(३) 'चक्राऽथनामा' इत्यत्र 'चक्राऽथवा सा'।

२०। (१) 'सुरत' इत्यत्र 'सुरक्ता'।

(२) 'निषण्णा पाति-' इत्यत्र 'लक्ष्णा पांक्ति-'।

(३) 'पूजयेद् यः' इत्यत्र 'पूजयेच्च'।

२१। (२) 'पार्श्वभिन्ना विभेदिका' इत्यत्र 'पार्श्वभिन्नविभेदिता'।

२४। (४) 'कृष्णकर्षकम्' इत्यत्र 'कृष्णवर्णकम्'।

२६। (१) 'समे चक्रे' इत्यत्र 'श्यामचक्रे'।

(२) 'नान्तरायिके' इत्यत्र 'नान्तरायके'।

२९। (३) 'रेप्यायां' इत्यत्र 'रेखाणां'।

३७। (३) 'एकवस्यैक' इत्यत्र 'एकचक्रस्य'।

(४) 'संज्ञाः स्युः पञ्च' इत्यत्र 'संज्ञाः पञ्च'।

३८। (५-६) 'दारिद्र्यमटनं' इत्यत्र 'दारिद्र्यं मदनं'।

३९। अस्य पूर्वार्धं—

'चक्रे तु मध्यदेशस्थे तेषामाख्यानकं शृणु' इति पाठः।

४०। (३) 'अनन्तश्चेदिति ज्ञेयः' इत्यत्र 'अनन्तश्चेति विज्ञेयः'।

४१। (१) 'एकपद्मान्तिका' इत्यत्र 'एक( पद्मकिता ? पद्माङ्किता )'।

(२) 'दक्षिणार्त्तसंस्थिता' इत्यत्र 'दक्षिणावर्त्तसंस्थिता'।

४२। (२) 'पद्मनादि य अङ्किता' इत्यत्र 'पद्मेन गदयाऽङ्किता'।

(४) 'सप्तसम्पद्-' इत्यत्र 'सदा सम्पद्-'।

(५-६) पञ्चम-षष्ठ-पादयोः—

'लाञ्छनेन विना माया सा प्रशस्ता तु सा स्मृता (?)' इति।

४३। (२) 'वाप्यर्थं यद् गदा' इत्यत्र 'वाप्यथ वा गदा'।

४४। (२) 'रोगजं' इत्यत्र 'रोगतो'। (३) 'तस्य' इत्यत्र 'तत्र'।

(४) 'ग्रहै रोगै-' इत्यत्र 'ग्रहैर्दुष्टै-'।

४५। (१) 'विकटास्या' इत्यत्र 'कोटरास्या'।

(४) '-प्येषामङ्केन' इत्यत्र '-ण्येवमङ्केन'।

४७। (१-२) 'पीतवर्णाभमहावक्त्र्' इत्यत्र 'पीतवर्णाभं ( सह ? महा )चक्रं'।

४८। (१) 'पृष्ठदिग्भागे' इत्यत्र 'मध्यदिग्भागे'।

५०। (१) 'जयदुस्वशुभासक्तो ननः' इत्यत्र 'जपदुःखं सुभासक्तो मानः(?)'।

५१। (१) 'शुभे' इत्यत्र 'समे'।

५२। (१) 'चतुश्चक्रं' इत्यत्र 'चतुर्वक्त्रं'।

५३। (१) 'कूर्माङ्कितास्तु ये' इत्यत्र 'कूर्माङ्किता(ः)श्रिये'।

(२) '-दायकाः' इत्यत्र '-कारका(ः)।

अस्मात् श्लोकात् परम् ऊनचत्वारिंशश्लोकतुल्यम्—

'परमेष्ठ्यजितक्रोधस्तथा नारायणोऽन्तकः।
अनन्तश्चेति विज्ञेयो नानामूर्त्तिस्तु ये तः(?)'॥ इति पद्यम्।

५५। (३) 'नरसैन्यस्य' इत्यत्र 'परसैन्यस्य'।

५६-५७। षट्पञ्चाश-सप्तपञ्चाशश्लोकयोः स्थाने—

'अङ्कितं··ग्रंथ चक्रं स्यात् यजतादिवताद्भुवि' इति पाठः।

अतः परम्—

'हला( कुष ? कुश )धरं चैव चक्रमध्ये व्यवस्थितम्।
( बलं भद्रकितं ? बलभद्राङ्कितं ) चक्रं वाञ्छितार्थफलप्रदम्'॥

इति पद्यमधिकम्।

५८। (४) 'सीतायाः' इत्यत्र 'तृतीयः'।

५९। (२) 'धृतरूपिणः' इत्यत्र 'धृतिरूपिणः'।

(४) '-प्रदश्च यत्' इत्यत्र '-प्रदं हि तत्'।

६२। (२) 'यश्चक्रमुद्घाटयेन्नरः' इत्यत्र 'यो मूल्यमुद्घाटयेन्नरः'।

६८। अतः परं पुष्पिकायाम् 'इति पन्नगाशनः' इत्यत्र 'इति गरुडः'।

६९। (६) 'वामबाहुषु' इत्यत्र 'सर्वबाहुषु'।

७२। (१) 'महावराहं' इत्यत्र 'नृवराहं'।

७५। (३) 'शिलमुषलौ' इत्यत्र 'शीरमुषलौ'।

७७। (४) 'ध्वजपीनसटाश्रिताम्' इत्यत्र 'ध्वजपीतसमाश्रितम(?)'।

७९। (१) 'पुरुषाकस्यै' इत्यत्र 'पुरुषस्यैव'।

८०-८१। अशीतितमैकाशीतितमश्लोकयोः पौर्वापर्यविपर्ययः।

८३। (३) 'श्वेतं स्फटिक-' इत्यत्र 'श्वेतस्फटिक-'।

८५। (४) 'लिनात् प्रविशारदः' इत्यत्र 'लिखेच्चित्रविशार(दैः? दः)'।

८६। (४) '····शिरोधृतः' इत्यत्र 'दुर्निरीक्षशिरोधरः'।

८८। (१-२) 'कर्तव्यमतिजानु-' इत्यत्र 'कर्तव्यः प्रतिजानुं'।

९०। (४) 'प्राक् कार्यस्तु' इत्यत्र 'प्रागवत् कार्यः'।

९१। (२) 'धृष्टबाहु' इत्यत्र 'ह्रष्टबाहु'।

९२। (२) 'दक्षिणास्त्रचतुष्टयम्' इत्यत्र 'दक्षिणास्त्रे चतुष्टये'।

९८। (२) 'विश्वं समुद्भवः' इत्यत्र 'विश्वसमुद्भवः'।

१०८। (२) 'वासुदेवं करम्' इत्यत्र 'वासुदेवकम्'।

१११। (३) '-चक्रं चेदं' इत्यत्र '-चक्रं च दण्डं'।

११३। (३) 'पद्मागमोक्ता' इत्यत्र 'पद्मगं चोक्ता(?)'।

११४। (१) 'तर्जनीबाणचापञ्च' इत्यत्र 'पद्मिनीचापबाणञ्च'।

अध्यायान्ते 'देवतामूर्तिप्रकरणे' इत्यत्र 'रूपावतारे'।

षष्ठाध्याये—

२। (२) 'कुण्डलास्यमलङ्कृतम्' इत्यत्र 'कुण्डलाभ्यामलङ्कृतम्'।

४। (१) 'जटाकृतचन्द्रदेवं' इत्यत्र 'जटाचन्द्राकृतिं'।

६। (१) 'दंष्ट्राकरालविकटास्यं' इत्यत्र 'दंष्ट्राकरालवदनम्'।

८। (४) 'शशाङ्ककृतशेखरम्' इत्यत्र 'शङ्करं कृतशेखरम्'।

८-९। अष्टम-नवमश्लोकयोः पूर्वापरीभावपरिवृत्तिः।

११। (१) 'खट्वाङ्गं चक्रपालञ्च' इत्यत्र 'खट्वाङ्गञ्च कपालञ्च'।

* १३। (३-४) 'वामे अक्षसूत्रञ्च' इत्यत्र 'वामेऽक्षसूत्रञ्चैव'।

१४। (२) '-विभूषितम्' इत्यत्र '-विभूषणम्'।

१५। (४) 'नागेन्द्रासनभूषितम्' इत्यत्र 'नागेन्द्रोरुविभूषितम'।

१८। (४) 'वरदाभयपाणिकम्' इत्यत्र 'वरदाभयपाणिनम्'।

१९। एकोनविंशः श्लोको नास्ति।

२०। (२) '-हस्तं त्रिशूलिनम्' इत्यत्र '-हस्ते त्रिशूलिनम्'।

२१। (४) 'चित्रैश्वर्यसमन्वितम्' इत्यत्र 'चित्रैश्वर्यफलप्रदम्'।

२२। (३) 'खड्गचापशिरः-' इत्यत्र 'खड्गचापशरः'।

२५। (३) 'पञ्चवक्त्रभयं' इत्यत्र 'पञ्चास्यमभयं'।

२६। अस्य परार्धे—

'इच्छाज्ञा(नं ? न )कलायुक्तत्रिनेत्रं ( व ? वि )ज्ञानार्णवम्' इति पाठः।

२७। (४) 'कर्णे वै तालपत्रकम्' इत्यत्र 'कर्णयोस्ताडपत्रकम्'।

२८। (४) 'स्वदक्षिणे' इत्यत्र 'च दक्षिणे'।

२९। (१) 'अर्धे तस्य त्रयो रूपः' इत्यत्र 'अर्धस्तस्य स्त्रियो रूपं'।

३०। (४) 'गणेशं व्याप्य' इत्यत्र '(मणेश चाथ ? गणेशश्चाथ)'।

३१। एकत्रिंशश्लोकात् परम्—

† 'अंलिङ्गितवामहस्तं नागेह द्वितीये कर।
हरस्कन्धनुमाहस्तं दर्पणां द्वितये कर॥' इत्यधिकम्।

३३। (२) 'कृष्णार्धेनस्तु' इत्यत्र 'कृष्णार्धेन तु'।

३५। अस्मात् श्लोकात् परम् 'इति गरुडध्वजः' इत्यधिकम्।

४४। (३) 'ऋद्धामुखगतः' इत्यत्र 'रज्यागतमुखः'।

४६। पुष्पिकायां 'हरिहरपितामहः' इत्यत्र 'हरांहीरराय-पीतामहः' इति विशेषः।

४७-४८। चन्द्राङ्कपितामहलक्षणात्मकं श्लोकद्वयं नास्ति।

४९। अस्य श्लोकस्य परार्धं परस्य च पूर्वार्धं नास्ति।

५३। (४) 'वामार्धादि-' इत्यत्र 'वामोर्ध्वादि-'।

---

* अत्रेदं द्रष्टव्यम्—छन्दोभङ्गभयान्मूले 'वामे अक्षसूत्रञ्चे'त्यकृतसन्धिः पाठ एव पूर्वमनन्य-गत्या सन्निवेशित आसीत्, पाठान्तरं तु छन्दः पालयदेवाऽऽत्मानं सुसंहितमकरोत्।

† 'आलिङ्गितो वामहस्ते नागेन्द्रो द्वितीये करे।
हरस्कन्ध उमाहस्तो दर्पणं द्वितीये करे॥' इति स्यात्।

५५ । (१) '-खट्वाङ्गपात्राणि' इत्यत्र '-खट्वाङ्गपाशानि' ।

५६ । (१) 'हरिहरस्यापि' इत्यत्र 'हरिहरश्चापि' ।

५८ । (२) 'द्वात्रिंशभेदमर्जयः' इत्यत्र 'द्वाविंशभेदमूर्त्तयः' ।

६० । (४) 'ततः पुनः' इत्यत्र 'पुनः स्मृतः' ।

६३ । यथोक्तपूर्वार्धात् परम्—

'क्रमेण नव लिङ्गानि षट्करान्तानि संख्यया ॥

षोडशाङ्गुलमारभ्य एकैकाङ्गुलवर्धनात् ।

लिङ्गानि रसहस्ता(तत् ? न्तम्) अष्टाविंशोत्तरं शतम्' ॥ इति पाठः ।

६६ । (४) 'हिन्ताश्चागरुडः शुभः' इत्यत्र 'हिन्तालश्चागरुः शुभ(म् ? :)' ।

६८ । पुष्पिकायां 'दारुजाती' इत्यत्र 'दारुजानि' ।

७० । (२) 'भयत्रिंशत्' इत्यत्र 'त्रयस्त्रिंशत्' । (३) 'न च' इत्यत्र 'नव-' ।

७२ । (४) '-मघोरेश्वरम्' इत्यत्र '-मघोरकम्' ।

७३ । (३) '-महोरास्त्रं' इत्यत्र '-मघोरास्त्रं' ।

७६ । (१) '-भूतवेदान्तं' इत्यत्र '-भूतवेदान्त-' ।

७७ । (१) 'रित्यादियुगलं चान्ते' इत्यत्र 'हस्तादियुगलत्वान्ते' ।

(४) 'भव-' इत्यत्र 'नव-' ।

७८ । अस्य श्लोकस्य परार्धे—

'प्रासादा कन्यासे ज्याष्ठा सिमामानमिदं स्मृतम्' इति पाठः । *

७९ । (१) 'गर्भे पञ्चांशके' इत्यत्र 'गर्भपञ्चांशके' ।

८० । (२) 'दारुणे' इत्यत्र 'दारुजे' ।

८१ । अस्य श्लोकस्य पूर्वार्धे—

'मृद्दारुलोहशैलाश्च दैर्घ्यमर्कजिनांशकै(:)' इति पाठः ।

८२ । (१) 'नवनागं तु' इत्यत्र 'नवभागं तु' ।

८४ । (२) 'शिवालयम' इत्यत्र 'शिवायतम्' ।

८५ । (३) 'नागरे' इत्यत्र 'नगरे' ।

८६ । (३) 'नयदं' इत्यत्र 'जयदं' ।

८७ । (१) 'गर्भे त्रिसुप्रभागं' इत्यत्र '(भगा ? गर्भा)त्रिसप्तभागे' ।

---

* व्यपनीतलेखकप्रमादमिदमर्धं प्रकृतपाठमनुकरोत्येवेति द्रष्टव्यम् ।

८८। (२) 'चतुरं शतम्' इत्यत्र 'चतुरंशकम्'। (३) 'जयदायि' इत्यत्र 'जयदादि-'।

९१। अस्य श्लोकस्य प्रथमार्धे—

'नवभिर्हरणे शिष्टमंशकं तस्करादिकम्' इति पाठः।

(३-४) 'राज्ञा षण्डं काभयकं' इत्यत्र 'राजा षण्डं चाभयकं'।

(६) 'सुपाठके' इत्यत्र 'सुपाठकैः'।

९२। (५) 'धनादिक-' इत्यत्र 'धनाधि(प-? क-)'।

९४। (४) 'विजिता' इत्यत्र 'विवर्जिताः'।

९५। (४) 'क्रमस्त्याप्यटकः' इत्यत्र 'चक्रमत्स्यौ घटः'।

९६। (३-४) '-कृष्णरेषो वर्णसुसौख्यदा' इत्यत्र '-कृष्णा रेखा वर्णेषु सौख्यदा'।

९८। अस्य श्लोकस्य पूर्वार्धे—

'छत्राभमष्टमांशेन सार्धद्वय'शषडंशके' इति पाठः।

९९। (४) 'बुद्बुदाकृतिः' इत्यत्र 'बुद्बुदाकृति'।

१००। (४) 'काकपदादिवै' इत्यत्र 'काकपदादिकैः'।

१०१। पुष्पिकायां 'दारुजानि स्फाटिकानि' इत्यत्र 'स्फटिकानि'।

१०५। (१) 'वरञ्च' इत्यत्र 'खण्डञ्च'।

१०६। अस्य चतुर्थपादीय'-दोषकरं यतः' इत्यारभ्य 'मन्त्र' (१०८ श्लो० २ पा०) इत्यन्तोऽंशो नास्ति।

१०९। एतत्पूर्वार्धात् परं १०७-१०८-तम-श्लोकद्वयी ततः पुनरयं पूर्णः श्लोक इति विसंष्ठुला लिपिपद्धतिः।

(४) 'पुत्रपौत्राश्च' इत्यत्र 'पुत्रपौत्राणि'।

१११। (३) 'न्यस्तं पीठं' इत्यत्र 'न्यस्तं विपीठम्'।

११३। (४) 'भुज्यते' इत्यत्र 'पूज्यते'।

११४। (३) 'तथा' इत्यत्र 'ततः'।

११८। (१) 'पीण्डञ्च' इत्यत्र 'पिण्डञ्च'।

११९। (१) 'स्थापितं' इत्यत्र 'स्थापिते'।

१२०। (२) '-वर्धनम्' इत्यत्र '-बन्धनः'। (३) '-करं' इत्यत्र '-करे'।

(४) '-प्रदम्' इत्यत्र '-प्रदे'।

१२२। (१) 'एकास्व-' इत्यत्र 'एकास्त्रं'। (२) '-श्रयम्' इत्यत्र '-स्त्रकम्'।

१२३। (१) 'धातवे' इत्यत्र 'घटे वै'। (३) 'सहस्रहस्ते' इत्यत्र 'हस्तसाहस्र'।

१२४। अस्मात् श्लोकात् परम्—

घाटे जगति मध्ये तु बाणे गर्भगृहं भवेत्।

स्वयम्भूपीठिकास्थाने चले चण्डो न विद्यते ॥' इत्यधिकम्।

१२५। (१) 'एकं चण्ड्यां वरे सपत्' इत्यत्र 'एकां चण्ड्या रवेः सप्त'।

(४) 'शिवस्यार्धं प्रदक्षिणा' इत्यत्र 'शिवस्यार्धप्रदक्षिणम्'।

१२८। अस्य श्लोकस्य स्थाने—

'लिङ्गानामष्टधा कृत्वा पीरिकाणान्तु लक्षणम्।

आदौ ब्रह्मा च विष्णोश्च पीरिका( सु ?सू )च्छ्रयं विदुः' ॥ इति पाठः।

१२९। (२) '-कामदम्' इत्यत्र '-कामय(म)'।

१३०। (४) 'तत्तुल्यं चाग्रार्धकम्' इत्यत्र 'तुल्यं चाग्रार्धकं त्रिधा'।

१३१। (१) 'त्रिधा विभक्तमग्रे तु' इत्यत्र 'विभागाकृतिमग्रे तु'।

(४) 'मध्यवंशोद्भवा' इत्यत्र 'मध्यवङ्क्षोद्भवा'।

१३२। (२) 'श्रवणाकृति' इत्यत्र 'वापराजिते'।

(क) अस्योत्तरार्धं परश्लोकपूर्वार्धश्च १३४श-श्लोकपूर्वार्धात् परं वर्त्तेते।

१३३। (१-२) 'याम्योत्तरतत्संपादमग्रे' इत्यत्र 'याम्योत्तरतत्सपादमग्र'।

(क) अस्मात् श्लोकात् परम्—

'उष्टपेये त्रुपीस्याशा(?)प्रतिभाजिताम्' इत्यधिकम्।

१३५। (२) 'सार्धत्रिभागोन्नतम्' इत्यत्र 'सार्धत्रिभागिकम्'।

१३६। (१-२) 'सार्धद्वयं भागै × × × कश्चिन्निका मता' इत्यत्र

'सार्ध(दाय ? भागं) तु भागैकं चिपिका मता'। इति।

अस्य श्लोकस्योत्तरार्धे—

'द्विभागे चान्तरा पट्टी कपोतालि(:)द्विसार्धका' इति पाठः।

१३७। (१) 'अर्धयं च मग्नासपट्टी' इत्यत्र 'सार्धपञ्च ग्रासपट्टी'।

१३८। अस्य श्लोकस्य पूर्वार्धे—

'(अर्धमुखं ? अर्धं मुख-)पट्टिका च कर्णके तुर्यभागिकम्' इति पाठः।

१४१। (२) 'वैरी' इत्यत्र 'वेदी'।

१४२। (१) 'अर्धचन्द्रा त्रिकोणा च' इत्यत्र 'अर्धकोणा च'।

१४८। (३-४) 'सुखाय स्यात्त्रिकोणा' इत्यत्र 'सुखावात्तैथ त्रिकोणा'।

१५० । 'प्रणालस्या' इत्यत्र 'प्रणालस्य' । (३) 'जलमग्नाविभाषेण' इत्यत्र 'जल-मार्गो विधानेन' ।

(क) अस्मात् श्लोकात् परम्—

'मुखलिङ्गं त्रिवक्त्रं स्यादेकवक्त्रं चतुर्मुखम्' इत्यधिकम् ।

१५१ । (२) 'त्रिवक्त' इत्यत्र 'त्रिवक्त्रं' । (३) 'पश्चिमास्यं स्थितं' इत्यत्र 'पश्चिमास्यासितं' ।

१५३ । (२) 'स्मृता' इत्यत्र 'तथा' ।

१५४ । (१) '-र्मातरस्थानं' इत्यत्र 'मातरं स्थाप्य' । (४) 'कुर्यादक्षाधीशश्च' इत्यत्र 'कुर्याद् यक्षाधीशश्च' ।

१५६ । (१) 'वाम' इत्यत्र 'वामे' ।

१६० । (३) 'हरेश्च' इत्यत्र 'हेरम्बो' । (४) 'शृणु' इत्यत्र 'स्थितः' ।

१६५ । (३) 'असिनो' इत्यत्र 'असितो' ।

१६६ । (३) '-द्वित्रिचतत्-' इत्यत्र '-द्वित्रिचतुः-' ।

१६९ । अस्य द्वितीयपादे—

'तस्मादयुग्ममगमद् बहुशो हरिश्च' इति पाठः ।

(३) 'नन्दनीमा' इत्यत्र 'वन्दनीया' ।

(क) पुष्पिकायाम्—'श्रीक्षेत्रा × × विरचिते' इत्यत्र श्रीक्षेत्रात्मजसूत्रभृन्मण्डन-विरचिते' ।

सप्तमाध्याये

१ । (३) 'पद्मनाभश्च' इत्यत्र 'पद्मप्रभश्च' ।

(४) 'सूर्याश्रे सप्तमानतः' इत्यत्र 'सुपार्श्वः सप्तमो मतः' ।

२ । (४) '-नन्ततक्षकः' इत्यत्र 'नन्दमन्दकः' ।

३ । अस्य पूर्वपादत्रये—

'धर्मः शान्तिश्च (क)कुन्थेरुमल्लियो मुनिराप्तृतः ।

(ख) 'तेमिर्नेनिपाश्वे नाथो' इति पाठः ।

४ । (४) '-मल्लिपार्श्वे' इत्यत्र '-मल्लिपार्श्वौ' ।

५ । (२) 'शशः' इत्यत्र 'शशी' ।

---

(क) 'कुन्थारमल्लयो मुनिसुव्रतः' इत्येव स्यात् । (ख) 'नेमिर्नमिः पार्श्वनाथो' इति स्यात् ।

६ । (२) 'नन्द्यावर्त्तौ' इत्यत्र 'नन्दावर्त्तौ' । (४) 'षिह्नो' इत्यत्र 'सिंहो' ।
अतः परं 'इति जैनलाञ्छनानि' इति पुष्पिकाऽधिका ।

७ । (३) 'विशाखाश्वा-' इत्यत्र 'विशाखा चा-' ।

८ । (३) 'स्वाती च' इत्यत्र 'रेवती' ।

९ । (१) 'श्रवणाश्विन्यौ' इत्यत्र 'श्रवणादित्यौ' ।
अतः परं—'इति (क) जनानक्षत्रा' इति पुष्पिकाऽधिका ।

१० । (३) 'तुलावृश्चिक-' इत्यत्र 'कुम्भवृश्चिक-' ।

११ । (१) 'कर्ममेषौ' इत्यत्र 'कर्कमेष-' ।

१२ । (३) 'तुम्बरः' इत्यत्र 'तुवरा' । (४) 'विजयो जयः' इत्यत्र 'विजयोऽजि(म ? तः)' ।

१३ । (३) 'अकुटि-' इत्यत्र 'भकुटि-' ।

१४ । (१) '-र्यमितबला' इत्यत्र '-र्यजिनबला' । (२) 'कालिंका' इत्यत्र 'पालका' ।
(३) 'श्यामशान्ता' इत्यत्र 'श्यामा त्राता' ।

२० । (३) 'वरमुद्रराशा-' इत्यत्र 'वरमुद्रराक्ष-' ।

२४ । (३-४) '-सूत्रश्च (ख)अङ्कुशं' इत्यत्र '-सूत्रश्चाङ्कुशश्च' ।

२६ । (४) 'गदाधरे' इत्यत्र 'गदाकरे' ।

२८ । (१) 'पद्मपन्नस्त' इत्यत्र 'पद्मप्रभस्य' ।

३० । (३) 'निलपाशं' इत्यत्र 'विल्वपाशौ' ।

३१ । (१) 'शान्ता सुवर्णास्या' इत्यत्र 'शान्ता (ग) सुवर्णा स्यात्' ।
(३-४) 'चाभयं' इत्यत्र 'च भवेत्' ।

३६ । (२) 'श्वेतमुखाब्जरथः' इत्यत्र 'श्वेतश्चतुर्मुखः' ।
अस्य द्वितीयार्द्धं—
'-ब्जस्याकुगमुद्गरपाशावभवयाक्षंकुशगदानकुलम्' इति पाठः ।

३७ । (१) 'मुद्रवर्णा' इत्यत्र 'मुद्गवर्णा' । (२) 'प्रमारूढा' इत्यत्र 'पद्मारूढा' ।

३८ । (४) 'कमलं' इत्यत्र 'कलशं' ।

३९ । (४) 'मुद्गलं' इत्यत्र 'मुद्गरम्' ।

---

(क) 'जिननक्षत्राणि' 'जन्मनक्षत्राणि' वा स्यात् । (ख) अत्रापि पूर्ववत् छन्दोभेदभीतिरेव मूले सन्धिविच्छेदहेतुर्द्रष्टव्यः । (ग) 'सुवर्णवर्णा स्यात्' इति स्यात् ।

* ४०। चत्वारिंशश्लोकात् परम्—

प्रचण्डा श्यामवर्णा स्यादश्वारूढा चतुर्भुजा।

वरदं च तथा शक्तिगदाम्बुजमनुक्रमात् ॥ इत्यधिकम्।

† ४१। (२) 'शिषीस्थः' इत्यत्र 'शिखिस्था'।

४४। अस्य श्लोकस्योत्तरार्धं—

बीजपूरगदा चाभयाऽक्षमालाऽब्जनाकुला' इति पाठः।

४६। (३) 'वाराहवदनो' इत्यत्र 'वराहवदनो'।

४९। (२) '-त्रिशूलने' इत्यत्र '-त्रिशूलकै(:)।

(३) 'पद्मसुषांधिका' इत्यत्र 'पद्मं सुषण्डिका'।

५०। (२) 'शेषवाहनः' इत्यत्र 'शङ्खवाहनः'।

५२। (२) '-पद्मवर्णासनस्थिता' इत्यत्र '-वर्णा पद्मासनस्थिता'।

५३। (१) 'सुतः कुषेरोह' इत्यत्र 'सितकुबेरो(च ? ऽथ )'।

५४। अस्य श्लोकस्य परार्धं—

'दावाशक्तिपाशधनुस्तथा पद्मं च नकुलम्। चेति दक्षिणाधकरक्रमात्

वरदं चादसूत्रञ्च च शक्तिर्वा मातुलिङ्गकम्।' इति क्रमहीनः पाठः।

५७। (१) (क) 'वरदन्ता' इत्यत्र 'नरदत्ता'।

५८। (१) 'भृकुटिर्नेमिनाथस्य' इत्यत्र 'भृकुटिर्नमनाथस्य'।

५९। अस्य श्लोकस्य स्थाने—

'अक्षवज्रपरशुनकुलं मथानस्तु गान्धारी यक्षिणी।

वरखड्गखेटलुङ्गं हंसारूढास्तिता कायो ॥' इति पाठः।

६१। अस्य श्लोकस्य पूर्वार्धं—

सिंहारूढाऽम्बि(ककार्यं ? का कार्या) डम(रुं) नागपाशकम्' इति पाठः।

(४) 'तथा हस्तेषु' इत्यत्र 'तस्य हस्तेषु'।

---

* एतदंशमुद्रणावसर एवास्माभिरिदं 'रूपावतार'पुस्तकमुपलब्धम्। परं तदानीमपि न ज्ञातं यदिदं पुस्तकं नाममात्रभिन्नं देवतामूर्तिप्रकरणमेवेति अधिकोऽयं श्लोकः 'इति रूपावतारे' इत्युल्लेखेन अत्रत्यपादटीकायां सन्निवेशितो न मूले।

† मूले १३८ तम-पृष्ठस्थस्यास्य श्लोकस्य संख्याङ्को भ्रमान्न मुद्रित इति द्रष्टव्यम।

(क) मूलग्रन्थे उद्देशश्लोके (१६ श्लो०) 'नरदत्ते'त्येव नामोपलभ्यत इत्यतो लक्षणनिर्णय-वेलायामपि मूले 'नरदत्ते'ति नाम्ना भाव्यम्, प्रमादादस्माभिरनुत्प्रेक्षितपाठान्तरं यथाप्राप्तमेव मुद्रितमिति सुधीभिः सोढव्यम्।

६७। अस्य श्लोकस्य पूर्वार्धे—

'कैलाक्षसमोशरणं सिकालिसदाशिवम्' इति पाठः।

६९। (४) 'वितरागे तु' इत्यत्र 'वीतरागेषु'।

७०। (४) 'माहेन्द्रसव्ये' इत्यत्र 'माहेन्द्रोऽपसव्ये'।

७२। (२) 'शुभोदराः' इत्यत्र 'महोहरा'। (३) 'सुनाभं' इत्यत्र 'सुनाभो'।

७४। (२) 'रक्षो गन्धर्वयक्षो' इत्यत्र 'रक्षोगन्धर्वयक्षा'। 'विजग्मुः' इत्यत्र 'प्रजग्मुः'।

अष्टमाध्याये—

६। (४) 'सिद्धचामर-' इत्यत्र 'सिद्धचारण-'।

७। (१-२) '-सनाक्षसूत्रा च मभयं' इत्यत्र '-सनाक्षसूत्राब्जमभयं'।

८। (२) 'हृदये च' इत्यत्र 'हृदयाग्रे'। (३) 'पञ्चाग्रवश्च' इत्यत्र 'पञ्चाग्नयश्च'।

९। (४) 'वीवाहे तु माहेश्वरी' इत्यत्र 'विवाहेश्वरी'।

१०। (२) 'गजासनसंस्थिता' इत्यत्र 'गजासनसुसंस्थिता'।

१३। (२) 'श्वेतचामकरे' इत्यत्र 'श्वेतचामण्डकं'।

१९। (४) 'मोहिन्यपि सव्ये सभिनी' इत्यत्र 'मोहिन्यपसव्ये स्तम्भिन्यपि'।

२१। एकविंशः श्लोको नास्ति।

२४-२६। चतुर्विंशतः षड्विंशान्तानां त्रयाणां श्लोकानां स्थाने—

'रक्ताङ्गो गजवक्त्र (:) स्याद् रत्नकुम्भं तथा(ङ्कु)शम्।
× × × × × × × × परशुमोदकाक्रमात्।
इत्युच्छिष्टगणेशः' इति पाठः।

२७। अस्य श्लोकस्य स्थाने—

* 'सिन्दूराभ(त्रिण ?)त्रिनेत्रश्च प्रोक्तबीजगणाधिप(:)।
दण्डपाशाङ्कुशौ बीजपूरं बिभ्रत् करेषु च॥
इति बीजगणपतिः।

अर्कप्रशाशिधरं वा सिंहवाहनत्रिनेत्रम्।
दानमये मोदका दण्डमेव च॥
टङ्कं शिशेक्षमाला च मुद्गरं चाङ्कुशं तथा।
त्रिशूलं चेति हस्तेषु दधानं कुन्दवत् सितम्॥' एतावान् पाठः।

---

* 'सिन्दूराभस्त्रिनेत्रश्च प्रोक्तो बीजगणाधिपः' इति स्यात्।

२८। (२) 'भृङ्गबिभ्रत्' इत्यत्र 'शूलं बिभ्रत्' ।

अस्मात् श्लोकात् परम्—

वामाङ्गे जकं णादद्याद्धे दक्षिणे ।

पृ कर्णे तु द्वा पातु धूम्रको बालचन्द्रमा(:)' इत्यधिकम् ।

२९। (३) '-राज्यं' इत्यत्र '-राजा' । (४) 'व्यवस्थित:' इत्यत्र 'च संस्थिता' ।

३२। (२) 'बलवान्तक-' इत्यत्र 'बलं प्रातक-' ।

३५। अयं श्लोको नास्ति ।

३६। (३) 'कमण्डलोद्वर्णाभं' इत्यत्र 'कमलोदरवर्णाभं' ।

३७। (१) '-श्चिरकै-' इत्यत्र '-श्चिकरै-' । (३) 'स्थानीयं खेट-' इत्यत्र 'स्थानीयखेट-' ।

४०। (२) 'प्रसारिका' इत्यत्र 'प्रसारिता' ।

४१। (४) 'च स' इत्यत्र 'त्वसि:' ।

४६। (३) 'लीलाग्नी' इत्यत्र 'नीलाङ्गी' ।

५२। (१) 'वरदं' इत्यत्र 'वरं' ।

५३। (४) 'सर्वकृष्ट-' इत्यत्र 'सर्वकृत्र-' ।

५६। (२) 'तथोत्तमम्' इत्यत्र 'तथोन्नतम्' ।

६१। (४) 'हंससंस्थिता' इत्यत्र 'हंसवाहिनी' ।

६३। (२) 'बिभ्रत्तीं' इत्यत्र 'बिभ्रति' ।

६४। (३) 'दरदा' इत्यत्र 'वरदा' ।

६८। (३) 'दादिनी' इत्यत्र 'गदनी' ।

६९। (२) 'सचैयं' इत्यत्र 'स चैव' ।

७२। (३) 'दंष्ट्रदा' इत्यत्र 'दंष्ट्राला' ।

७३। (२) 'चक्रयं' इत्यत्र 'चक्रकं' । (४) '....चाप्यथ' इत्यत्र 'दक्षिणे त्वथ' ।

६४। अस्य श्लोकस्य पूर्वार्धं—

'खेटपाशधनुर्दण्डं कुठारं चेति बिभ्रती' इति पाठः ।

७५। (३) 'इत्येहं' इत्यत्र 'इत्येवं' । (४) 'व्यवस्थया' इत्यत्र 'व्यवस्थिता(:)' ।

७६। (२) 'नृत्यमानं विकारणम्' इत्यत्र 'नृत्यमानपीणाकरम्' ।

७७। (३) 'वीरेश्वरस्य' इत्यत्र 'वीरेश्वरश्च' ।

७८। (१-२) 'वीणाहस्तत्रिशूलश्च' इत्यत्र 'वीणाहस्तस्त्रिशलश्च' ।

८३ । (३) 'वरञ्च पुस्तकं वीणा' इत्यत्र 'वरं पुस्तकं वीणा च' ।

८४ । (३) 'असपत्नं' इत्यत्र 'अक्षाभयं' ।

८६ । (४) '-दायका' इत्यत्र '-दायिनी' ।

८८ । (१) 'श्रुवस्रुचौ' इत्यत्र 'श्रुवश्रुचौ' ।

९१ । (३) 'शूलासिशक्तिचक्राणि' इत्यत्र 'शूलासिशक्तिचक्रासि-' ।

९२ । (२) 'सासवा' इत्यत्र 'समुवा' ।

९३ । (४) 'पाशाबद्धो गले भृशम्' इत्यत्र 'पाशब(द्धे ? द्ध) गलेक्षणः' ।

९५ । (३) 'वरटश्चैव' इत्यत्र 'करटश्चैव' ।

९६ । (१) 'कण्ठढक् चैव' इत्यत्र 'कन्दकश्चैव' ।

९८ । (४) 'भृकुटिनामतः' इत्यत्र 'भृकुटिनामकः' ।

१०१ । (१) 'कुर्या' इत्यत्र 'कार्या' ।

१०६ । (२) 'तत्पृष्ठञ्च करद्वयम्' इत्यत्र 'तत्पृष्ठे च कुरद्वयम्' ।

१०८ । (४) 'तदधःकरे' इत्यत्र 'दधतः करे' ।

१०९ । (३) 'त्रयाणामपि' इत्यत्र 'त्रयाणामनु-' ।

११३ । (३) 'वामे खेटकचापं' इत्यत्र 'वामे खेटकचापं च' ।

११४ । (१) 'घण्टां वा परशुं वापि' इत्यत्र 'घण्टाञ्च परशुं चापि' ।
(२) 'वामहस्ते' इत्यत्र 'वामे हस्ते' । (४) 'प्रकल्पयेत्' इत्यत्र 'प्रदर्शयेत्' ।

११५ । (४) 'निर्यद्दन्त-' इत्यत्र 'तिर्यग्दन्त-' ।

११६ । (१) 'रक्तरक्तिकताङ्गञ्च' इत्यत्र 'रक्तरक्तीकृताङ्गञ्च' । (२) '-विस्फारिते-' इत्यत्र '-विस्फुरिते-' ।

पाठान्तरं समाप्तम् ।

# रूपमण्डनस्य विषयानुक्रमणी

श्रीगणेशाय नमः

# रूपमण्डनम्

—ः ० ः—

## प्रथमोऽध्यायः

[ ग्रन्थारम्भः ]

विश्वरूपं नमस्कृत्य पूर्वतन्त्रानुसारतः ।
मण्डनस्तनुते वास्तुशास्त्रं श्रीरूपमण्डनम् ॥ १ ॥

[ मूर्त्तीनां कर्त्तव्यतोपदेशः ]

प्रासादे लिङ्गमूर्तीनां प्रमाणं शास्त्रलक्षतः ।
मनुष्यपशुपक्ष्यादिरूपं कुर्यात्तदाकृतेः ॥ २ ॥

[ प्रशस्तशिलालक्षणम् ]

निविडा निर्व्रणाऽमृद्वी सुगन्धा मधुरा शिला ।
सर्वार्चालिङ्गपीठेषु श्रेष्ठा कान्तियुता च या ॥ ३ ॥

[ दुष्टशिलालक्षणम् ]

विमलं हेमकांस्यादिचिह्नं लोहमयञ्च यत् ।
तथाऽन्यद्विविधं चिह्नं प्रतिमायां भयावहम् ॥ ४ ॥

[ पुनः शुभशिलालक्षणम् ]

कपोतभृङ्गकुमुदमाषमुद्गासितोपमा ।
पाण्डुरा घृतपद्माभा सर्वार्चासु शुभा शिला ॥ ५ ॥

[ शिलाहरणदिनादिनिर्देशः ]

सुदिने सुमुहूर्त्ते च शकुने शान्तचेष्टिते ।
प्रतिमागृहकाष्ठादिकर्म कुर्यान्न चान्यथा ॥ ६ ॥

[ गृहपूज्यप्रतिमामानम् ]

आरभ्यैकाङ्गुलादूर्द्ध्वं पर्यन्तं द्वादशाङ्गुला ।
गृहेषु प्रतिमा पूज्या नाधिका शस्यते ततः ॥ ७ ॥

[ देवालयपूज्यप्रतिमामानम् ]

तदूर्द्ध्वं नवहस्तान्तं पूजनीया सुरालये ।

[ अनावृतदेशपूज्यप्रतिमामानम् ]

दशहस्तादितो याऽर्चा प्रासादेन विनाऽर्चयेत् ॥ ८ ॥

दशादि(१)करषष्ठ्या तु षट्त्रिंशत् प्रतिमा(ः) पृथक् ।
बाणवेदकरान् यावत् (२)चतुष्कां पूजयेत् सुधीः ॥ ९ ॥

[ प्रतिमाघटनद्रव्याणि ]

अष्टलोहमयी मूर्त्तिः शैलरत्नमयी शुभा ।
श्रेष्ठवृक्षमयी वाऽपि प्रवालादिमयी शुभा ॥ १० ॥

[ जीर्णोद्धारविधिः ]

(३)अतीतब्दः शता (४)मूर्त्तिः पूज्या स्यान्महत्तमैः ।
खण्डिता स्फुटिताऽप्यर्च्या अन्यथा दुःखदायका ॥ ११ ॥

धातुरत्नविलेपोत्था व्यङ्गा(ः) संस्कारयोग्यका(ः) ।
काष्ठपाषाणजा भग्ना(ः) संस्कारार्हा न देवताः ॥ १२ ॥

[ भीषणदेवतास्थानम् ]

भैरवः शस्यते लोके प्रत्यायतनसंस्थितः ।
न मूलायतने कार्यो भैरवस्तु भयङ्करः ॥ १३ ॥

नरसिंहो वराहो वा तथाऽन्येऽपि भयङ्कराः ।

[ दुष्टाः प्रतिमाः ]

नाधिकाङ्गा न हीनाङ्गाः कर्त्तव्या देवताः क्वचित् ॥ १४ ॥

---

(१) '-करवृद्ध्या' इति स्यात् । (२) 'चतुष्क्याम्' इति स्यात् । (३) 'अतीताब्द-शता' इति स्यात् । (४) 'मूर्तिर्या पूज्या' इति स्यात् ।

प्रतिमाकाष्ठ(१)लेपानुमदन्तचित्रायसां गृहे ।
मानाधिका परीवाररहिता नैव पूज्यते ॥ १५ ॥

[ अर्चावैकृतकथनम् ]

नर्त्तनं रोदनं हास्यमुन्मीलननिमीलने ।
देवा यत्र प्रकुर्वन्ति तत्र विद्यान्महाभयम् ॥ १६ ॥

वत्सेनाभिमुखे कुर्याद् यात्रां द्वारञ्च वास्तुनः ।
प्रवेश(:) प्रतिमादीनां गुर्विणीनां विशेषतः ॥ १७ ॥

[ प्रतिमाशिरोज्ञानम् ]

प्राक् पश्चाद्दक्षिणे सौम्ये स्थिता भूमौ तु या शिला ।
प्रतिमायाः शिरस्तस्याः कुर्यात् पश्चिमदक्षिणे ॥ १८ ॥

[ तालमानेन मूर्त्तयः ]

ग्रासवक्त्रमेकभागे द्वौ पक्षी कुञ्जरास्त्रयः ।
किन्नराश्चाश्चतुस्तालाः (२)पञ्चाशितसुरा वृषः ॥ १९ ॥

शूकरो वामनश्चापि षट्तालो गणनायकः ।
सप्तभागाः प्रकर्तव्या वृषशूकरमानकाः ॥ २० ॥

अष्टांशा पार्वती देवी सर्वे देवा नवांशकाः ।
दशतालो भवेद्रामो बलिरूर्ध्वो जिनस्तथा ॥ २१ ॥

ताला एकादश स्कन्दो हनुमान् भूतचण्डिका ।
ताला द्वादश वेताला राक्षसाश्च त्रयोदश ॥ २२ ॥

दैत्याश्चतुर्दशांशाः स्युर्भृगु(३)रूपा ततोऽधिका ।
(४)कालांशाः क्रूरदेवाः स्युरत ऊर्द्ध्वं न कारयेत् ॥ २३ ॥

---

(१) '-लेपाश्मदण्डचित्रायसां ग्रहे' इति स्यात् । (२) पञ्चासितसुरा' इति स्यात् ।
(३) '-रूपं ततोऽधिकम्' इति स्यात् । (४) 'कलांशाः' इति स्यात् ।

[ तालानुसारेणाङ्गविधानम् ]

[ तत्र षट्तालस्य ]

मुखं तालद्वयं तस्य जठरं तत्समं भवेत् ।
गुह्यं वेदाङ्गुलम् ऊरू सप्त जङ्घा च तत्समा ॥ २४ ॥

गुणाङ्गुलं भवेज्जानु पादः कार्यो गुणाङ्गुलः ।
रसतालमिति प्रोक्तं सप्ततालमथोच्यते ॥ २५ ॥

[ सप्ततालस्य ]

वक्त्रं तालप्रमाणं स्यात् कन्धरावंगुलत्रयम् ।
सार्द्धसप्ताङ्गुलं वक्षो मध्यं नवभिरङ्गुलैः ॥ २६ ॥

सार्धसप्त नाभि(१)मध्ये (२)ऊरूरष्टदशाङ्गुले ।
पादोत्सेध त्रिमात्रश्च मनुजाः सप्ततालके ॥ २७ ॥

[ अष्टतालस्य ]

अष्टताले मुखं कुर्यात् तालं द्वादशमात्रकम् ।
ग्रीवास्य त्र्यङ्गुला कार्या हृदयं तु नवाङ्गुलम् ॥ २८ ॥

मध्यं द्वादशमात्रं च नाभिमेढ्रे नवाङ्गुले ।
(३) ऊरू स्यादेकविंशत्या जानु चैव गुणाङ्गुलम् ॥ २९ ॥

जङ्घा तथैकविंशत्या पादमूलं गुणाङ्गुलम् ।

[ नवतालस्य ]

प्रतिमामुखमानेन नव भागान् प्रकल्पयेत् ॥ ३० ॥

वेदाङ्गुला भवेद् ग्रीवा भागेन हृदयं त्वधः ।
नाभिर्भागेन मेढ्रं च भागमेकं प्रकल्पयेत् ॥ ३१ ॥

चतुर्विंशतिमात्रोरुर्जानु प्रोक्तं युगाङ्गुलम् ।
द्विभागेन समा जङ्घा पादस्तु चतुरङ्गुलः ॥ ३२ ॥

---

(१) '-मेढ्रं' इति स्यात् । (२) 'ऊरू अष्टादशाङ्गुलौ' इति स्यात् । (३) 'ऊरुः' इति स्यात् ।

मुखस्यापि त्रिभागेण ललाटं नासिका हनुः ।
विस्तरे स्तनगर्भे तु द्वादशाङ्गुलमीरितम् ॥ ३३ ॥

तद्बाह्ये वेदवेदांशे कक्षे एकान्तरे ततः ।
सप्तसप्ताङ्गुलौ बाहू दैर्घ्ये च षोडशाङ्गुलः (१) ॥ ३४ ॥

करोऽष्टादशमात्रः स्याद्(२)विस्तारो रेणुनाङ्गुलः ।
दैर्घ्ये सूर्याङ्गुलः पाणिर्विस्तारे पञ्चमात्रकः ॥ ३५ ॥

मध्यं मन्वङ्गुलं व्यासे कटी प्रोक्ता जिनाङ्गुला ।
मूल एकादशोरु स्याज्जङ्घा प्रान्ते युगाङ्गुला ॥ ३६ ॥

चतुर्दशाङ्गुलः पाद(३)स्ततोर्द्धे च युगाङ्गुलाः ।
कक्षस्कन्धस्तदूर्द्ध्वे तु कर्तव्यश्चाष्ट(४)मातृकाः ॥ ३७ ॥

ग्रीवा त्वष्टाङ्गुला व्यासे पादः प्रोक्तः षडङ्गुलः ।
षट्सप्ताष्ट(५)नवांशान्तामुद्देशाश्च प्रदर्शिताः ॥ ३८ ॥

ज्ञेयो मानविभा(६)गश्च विस्तरः पूर्वशास्त्रतः ॥ ३९ ॥

इति श्रीसूत्रधारमण्डनविरचिते रूपमण्डने वास्तुशास्त्रे प्रतिमाद्रव्यगुणदोष-
तालाधिकारः प्रथमोऽध्यायः ॥ १ ॥

---

(१) '-ङ्गुलौ' इति स्यात् । (२) 'विस्तारोऽग्रे गुणाङ्गुलः' इति स्यात् । (३) '-स्तदूर्ध्वे च युगाङ्गुलः' इति स्यात् । (४) '-मात्रकः' इति स्यात् । (५) '-नवांशाना-' इति स्यात् । (६) '-गस्य' इति स्यात् ।

# द्वितीयोऽध्यायः

—:०:—

[ जीर्णोद्धारे विशेषः ]

अङ्गप्रत्यङ्गभग्नां तु मूर्त्तिं धीमान् विसर्जयेत् ।
नखाभरणमालास्त्रभग्नां तां न विवर्जयेत् ॥ १ ॥

[ एकत्र देवपूजानिषेधः ]

गृहे लिङ्गद्वयं नार्च्यं गणेशत्रयमेव च ।
शक्तित्रयं तथा शङ्खं (१)मच्छादिदशकाङ्कितम् ॥ २ ॥

द्वे चक्रे द्वारकायास्तु शालिग्रामद्वयं तथा ।
द्वौ शङ्खौ नार्चयेत् तद्वत् सूर्ययुग्मं तथैव च ॥ ३ ॥

तेषां तु पूजनान्नूनमुद्वेगं प्राप्नुयाद् गृही ।

[ तुलस्या पूजानिषेधः ]

तुलस्या नार्चयेच्चण्डीं (२)दीपं सूर्यं गणेश्वरम् ॥ ४ ॥

ब्रह्मादीनाञ्च देवानां देवीनाञ्च यथाक्रमम् ।
आयुधानि तथा वर्णं वाहनं कथयाम्यथ ॥ ५ ॥

ऋग्वेदादिप्रभेदेन कृतादियुगभेदतः ।
विप्रादिवर्णभेदेन चतुर्वक्त्रं चतुर्भुजम् ॥ ६ ॥

दक्षिणाधःकरात् सृष्ट्या जयमालां तथा (३)श्रुतम् ।
पुस्तं कमण्डलुं धत्ते सकूर्चः कमलासनः ॥ ७ ॥

इति कमलासनः ।

अक्षसूत्रं पुस्तकञ्च धत्ते चैव कमण्डलुम् ।
चतुर्वक्त्रा तु सावित्री श्रोत्रियाणां गृहे हिता ॥ ८ ॥

[ इति सावित्री ]

---

(१) 'मत्स्यादी'ति स्यात् । (२) 'नैव' इति स्यात् । (३) 'श्रुचम्' इति स्यात् ।

जटिला(:) श्मश्रुलाः शान्ता आसीना ध्यानतत्पराः ।
कमण्डल्वक्षसूत्राभ्यां संयुता ऋषयः स्मृताः ॥ ९ ॥

[ इति ऋषयः ]

विश्वकर्मा चतुर्बाहुरक्षमालाञ्च पुस्तकम् ।
(१)कम्बां कमण्डलुं धत्ते त्रिनेत्रो हंसवाहनः ॥ १० ॥

[ इति विश्वकर्मा ]

आग्नेय्यां तु गणेशः स्यान्मातृस्थानं च दक्षिणे ।
नैर्ऋत्ये तु सहस्राक्षं वारुण्यां जलशायिनम् ॥ ११ ॥
वायव्ये पार्वतीरुद्रौ ग्रहांश्चैवोत्तरे न्यसेत् ।
ईशाने कमला देवी प्राच्यां तु धरणीधरः ॥ १२ ॥

इति ब्रह्मायतनम् ।

ब्रह्मणोऽष्टौ प्रतीहारान् कथयिष्याम्यनुक्रमात् ।
पुरुषाकारगम्भीराः सकूर्चा मुकुटोज्ज्वलाः ॥ १३ ॥
पद्मं (२)स्रक् पुस्तकं (३)दण्डः सत्यो वामेऽथ दक्षिणे ।
सव्यापसव्य(४)करके (५)पद्मदण्डश्च धर्मकः ॥ १४ ॥
(६)अक्षपद्माङ्कोदण्डः करे धत्ते प्रियोद्भवः ।
दण्डागम(७)स्रुक्फलकैर्यज्ञः स्यात् सर्वकामदः ॥ १५ ॥
अक्षसूत्रगदाखेटदण्डैर्बिजयनामकः ।
अधोहस्तापसव्येन (८)युवेटब्दे यज्ञभद्रकः ॥ १६ ॥
(९)अक्षो पाशाङ्कुशौ (१०)दण्डौ (११)भव्य(:) स्यात् सार्वकामिकः ।
दण्डाक्षांकुशपद्मैश्च विभवः सर्वशान्तिदः ॥ १७ ॥

(१२)इति ब्रह्ममूर्तिः आयतनं प्रतीहाराः ।

---

(१) 'कम्बुं' इति स्यात् । (२) 'स्रुक्-' इति स्यात् । (३) 'दण्डम्' इति स्यात् । (४) '-करयोः' इति स्यात् । (५) 'पद्मदण्डश्च' इति स्यात् । (६) 'अक्षपद्माङ्कुशान् दण्डम्' इति स्यात् । (७) '-स्रुक्-' इति स्यात् । (८) 'खेटधृग्' इति स्यात् । (९) 'अक्षं' इति स्यात् । (१०) 'दण्डं' इति स्यात् । (११) 'भवः' इति स्यात् । (१२) 'ब्रह्ममूर्तेरायतनप्रतीहाराः' इति स्यात् ।

[ सूर्यः ]

सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ।
द्विभुजश्चैकवक्त्रश्च श्वेतपङ्कजधृत्करम् ॥ १८ ॥

वर्तुलं तेजसो बिम्बं (१)मध्यस्थं रक्तवाससम् ।
आदित्यस्य त्विदं रूपं कुर्यात् पापप्रणाशनम् ॥ १९ ॥

[ ग्रहाणां वर्णाः ]

श्वेतः सोमः कुजो रक्तो बुधः पीतो गुरुस्तथा ।
शुक्रः श्वेतः शनी राहुः (२)कृष्णो धूम्रास्तु केतवः ॥ २० ॥

पद्महस्तो भवेत् सोमः कुजो दण्डकमण्डलुः ।
अर्धकायः स्थितो राहुः केतुः करपुटाकृतिः ॥ २१ ॥

[ ग्रहाणां वाहनानि ]

सप्ताश्वरथ आदित्यश्चन्द्रो दशहयः स्मृतः ।
मङ्गलो मेषमारूढो बुधः सर्पासनस्थितः ॥ २२ ॥

हंसारूढं गुरुं विद्याद् भेकारूढं च भार्गवम् ।
शनिं महिषमारूढं राहुं कुण्डस्य मध्यगम् ॥ २३ ॥

सर्पपुच्छाकृतिं केतुं शनिं (३)दष्टा करालिनम् ।

[ ग्रहाणां भूषणानि ]

(४)गृहाः किरीटिनः कार्या (५)रत्नकुण्डलशोभिताः ॥ २४ ॥

[ सूर्यायतनम् ]

सूर्यस्याऽऽयतने स्थाप्या वह्निकोणादितः क्रमात् ।
कुजो जीवस्तमः शुक्रः केतवो (६)यज्ञः शनिः शशी ॥ २५ ॥

---

(१) 'पद्मस्थं' इति स्यात् । (२) 'कृष्णौ' इति स्यात् । (३) 'दंष्ट्रा-' इति स्यात् । (४) 'ग्रहाः' इति स्यात् । (५) 'रत्न-' इति स्यात् । (६) अत्र 'य' इत्यक्षरमधिकं 'ज्ञः' इत्येव स्यात् ।

[ प्रतीहाराः ]

तर्जन्यंशुताम्रचूड(१)दण्डै तु वामतः ।
तर्जनीशक्ति(२)किरणं दण्डै स्यात् पिङ्गलः परः ॥ २६ ॥
द्वे तर्जन्यौ वज्रदण्डावानन्दो वामगो (३)दधात् ।
तर्जनीदण्डापसव्ये ह्यन्तकः स तु दक्षिणे ॥ २७ ॥
द्वे तर्जन्यौ पद्मदण्डे चित्रो धत्ते स वामतः ।
तर्जनीदण्डापसव्ये विचित्रो दक्षिणे स्थितः ॥ २८ ॥
(४)तर्जनीदण्डापसव्ये ह्यन्तकः स तु दक्षिणे ।
द्वे तर्जन्यौ पद्मदण्डे चित्रो धत्ते स वामतः ॥ २९ ॥
तर्जन्यौ किरणं दण्डं किरणाक्षः स धारयन् ।
तर्जनी दण्डापसव्ये प्रतिहारः सुलोचनः ।
चतुर्द्वारेषु संस्थाप्या दिशश्चैते प्रदक्षिणम् ॥ ३० ॥

इति सूर्यादिनवग्रहसूर्यायतनप्रतीहाराः ।

[ दिक्पालेषु इन्द्रः ]

वरं वज्राङ्कुशौ चैव कुण्डीं धत्ते करैस्तु यः ।
गजारूढः सहस्राक्ष इन्द्रः पूर्वदिशाधिपः ॥ ३१ ॥

[ वह्निः ]

वरदः शक्तिहस्तश्च समृणालकमण्डलुः ।
ज्वालापुञ्जनिभो देवो मेषारूढो हुताशनः ॥ ३२ ॥

[ यमः ]

लेखिनीपुस्तकं धत्ते (५)कुर्कुटं दण्डमेव च ।
महामहिषमारूढो यमः कृष्णाङ्ग ईरितः ॥ ३३ ॥

[ नैर्ऋतः ]

खड्गञ्च खेटकं हस्तैः (६) कार्तिकां वैरिमस्तकः ।
दंष्ट्राकरालवदनः श्वानारूढश्च राक्षसः ॥ ३४ ॥

---

(१) '-दण्डैर्दण्डी' इति स्यात् । (२) '-किरणदण्डैः' इति स्यात् । (३) 'दधत्' इति स्यात् । (४) पद्यमिदं सम्पातायातं स्यात् । (५) 'कुक्कुटं' इति स्यात् । (६) 'कर्तिकां वैरिमस्तकम्' इति स्यात् ।

[ वरुणः ]

(१) वरपाशोसलं कुण्डीं हस्तैर्बिभ्रत् क्रमाच्च यः ।
नक्रारूढः स कर्तव्यो वरुणः पश्चिमाश्रितः ॥ ३५ ॥

[ पवनः ]

वरं ध्वजपताकाञ्च कमण्डलुं करैर्दधत् ।
मृगारूढो हरिद्वर्णः पवनो वायुदिक्पतिः ॥ ३६ ॥

[ कुबेरः ]

गदानिधिवीजपूरकमण्डलुधरः करैः ।
गजारूढः प्रकर्तव्यः (२) सौम्यो यो नरवाहनः ॥ ३७ ॥

[ ईशानः ]

वरं तथा त्रिशूलञ्च नागेन्द्रं बीजपूरकम् ।
बिभ्राणो (३)वृषभारूढो ईशानो धवलद्युतिः ॥ ३८ ॥

इति दिक्पालमूर्तिध्यानम् ।

इति श्रीसूत्रधारमण्डनविरचिते रूपमण्डने वास्तुशास्त्रे ब्रह्मसूर्यादिग्रहदिक्पाल-मूर्त्यधिकारो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

(१) 'वरपाशोत्पलं' इति स्यात् । (२) 'सौम्यायां' इति स्यात् । (३) 'वृषभारूढ' इति स्यात् ।

# तृतीयोऽध्यायः

—:०:—

[ युगभेदेन वर्णभेदेन च विष्णुमूर्त्तयः ]

वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ।
श्वेतरक्तपीतकृष्णा(:) क्रमात् (१)कल्युगादिषु ॥ १ ॥
पूज्या द्विजादिभिश्च————————

[ शिरोविधानम् ]

————एषां छत्राभं कुक्कुटाण्डवत् ।
त्रपुषाभञ्च बालेन्दुरूपं कुर्याच्छिरः क्रमात् ॥ २ ॥

[ वर्णभेदेन विष्णुमूर्त्तीनां शुभदत्वम् ]

नारायणः केशवश्च माधवो मधुसूदनः ।
पूजिता मूर्त्तयो ह्येता विप्राणां सौख्यदायकाः ॥ ३ ॥

मधुसूदनविष्णू च क्षत्रियाणां फलप्रदौ ।
त्रिविक्रमो वामनश्च वैश्यानाम् (२)अर्चयेच्छुभा ॥ ४ ॥

पूजिता (३)श्रीधरी मूर्त्तिः शूद्राणां सौख्यदायिनी ।
चर्मकृद्रजकानाञ्च नटस्य वरटस्य च ॥ ५ ॥

मेदभिल्लकिरातानां हृषीकेशः सुखप्रदः ।
कुम्भकारवणिग्वेश्या(४)चक्रिकाध्वजिनामपि ॥ ६ ॥

सर्वेषां प्रकृतीनाञ्च पद्मनाभः सुखावहः ।
दामोदरः सौख्यदः स्याद् (५) ब्रह्मचर्यैकदण्डिनोः ॥ ७ ॥

(६)हरिहरो हिरण्यगर्भो नारसिंहोऽथ वामनः ।
वराहः सर्ववर्णेषु सौख्यदो हितकारकः ॥ ८ ॥

---

(१) 'कलि-' इति स्यात् । (२) 'अर्चने शुभौ' इति स्यात् । (३) 'श्रैधरी' इति स्यात् । (४) '-चक्रिक-' इति स्यात् । (५) 'ब्रह्मचार्येक-' इति स्यात् । (६) 'हरिर्हिरण्यगर्भश्च' इति स्यात् ।

[ वासुदेवः ]

वासुदेवो (१)गदां शङ्खं चक्रपद्मधरो मतः ।

[ केशवः ]

केशवः कमलं कम्बु धत्ते चक्रं गदामपि ॥ ९ ॥

[ नारायणः ]

नारायणः कम्बु(२)पत्नगदाचक्रधरो भवेत् ।

[ माधवः ]

माधवस्तु गदां चक्रं शङ्खं वहति पङ्कजम् ॥ १० ॥

[ पुरुषोत्तमः ]

पुरुषोत्तमस्तु चक्रं पद्मं शङ्खं गदां दधत् ।

[ अधोक्षजः ]

अधोक्षजः सरसिजं गदां शङ्खं सुदर्शनम् ॥ ११ ॥

[ सङ्कर्षणः ]

सङ्कर्षणो (३) गदां कम्बुसरसीरुहचक्रभृत् ।

[ गोविन्दः ]

गोविन्दो धरते चक्रं गदां पद्मं च कम्बुना ॥ १२ ॥

[ विष्णुः ]

विष्णुः कौमोदकीं पद्मं पाञ्चजन्यं सुदर्शनम् ।

[ मधुसूदनः ]

मधुसूदनस्तु चक्रं शङ्खं सरसिजं गदाम् ॥ १३ ॥

[ अच्युतः ]

अच्युतस्तु गदापद्मचक्रशङ्खैः समन्वितः ।

[ उपेन्द्रः ]

उपेन्द्रो वहते शङ्खं गदां चक्रं कुशेशयम् ॥ १४ ॥

---

(१) 'गदा-शङ्ख-चक्र-पद्म-' इति स्यात् । (२) '-पद्म-' इति स्यात् । (३) 'गदा-कम्बु-' इति स्यात् ।

[ प्रद्युम्नः ]

प्रद्युम्नश्च (१)चक्रशङ्खं गदाम्भोजानि पाणिभिः ।

[ त्रिविक्रमः ]

त्रिविक्रमस्त्रिषु गदाचक्रशङ्खान् बिभर्त्ति यः ॥ १५ ॥

[ नरसिंहः ]

नरसिंहस्तु चक्राब्जगदाकम्बुविराजितः ।

[ जनार्दनः ]

जनार्दनोऽम्बुजं चक्रं कम्बुं कौमोदकीं दधौ ॥ १६ ॥

[ वामनः ]

वामनस्तु शङ्खचक्रगदापद्मलसत्करः ।

[ श्रीधरः ]

श्रीधरो वारिजं चक्रं गदाशङ्खं दधाति च ॥ १७ ॥

[ अनिरुद्धः ]

अनिरुद्धो लसच्चक्रगदाशङ्खारविन्दवान् ।

[ हृषीकेशः ]

हृषीकेशो गदां चक्रं पद्मशङ्खं च धारयन् ॥ १८ ॥

[ पद्मनाभः ]

पद्मनाभः पाञ्चजन्यं पद्मं चक्रं गदामपि ।

[ दामोदरः ]

दामोदरोऽम्बुजं शङ्खं गदां धत्ते सुदर्शनम् ॥ १९ ॥

[ हरिः ]

हरिर्धारयते कम्बुं चक्रं पद्मं तथा गदाम् ।

[ कृष्णः ]

कृष्णः करैः पाञ्चजन्यं गदां पद्मं सुदर्शनम् ॥ २० ॥

एताः सुमूर्त्तयो ज्ञेया दक्षिणाधःकरक्रमात् ।
(वासुदेवादिवर्णाः स्युः षडेते तददादयः?) ॥ २१ ॥

---

(१) 'चक्रशङ्खगदाम्भोजानि' इति स्यात् ।

सङ्कर्षणः कार्त्तिकेयोऽब्जशक्तिखेटककम्बुभिः ।
गरुडध्वजस्तार्क्ष्यस्थोऽब्जशङ्खध्वजचिह्नवान् ॥ २२ ॥
जयन्तोऽक्षचक्रदण्डपद्मैर्वादित्रसंवृतः ।
गोवर्धनो लसच्चक्रशङ्खपद्मैर्गदां (१)हि तत् ॥ २३ ॥

इति श्रीहरेश्चतुर्विंशतिमूर्त्तयः ।

मत्स्यकूर्मौ स्वस्वरूपौ नृवराहो गदाम्बुजम् ।
(२) बिभृत्स्यामो वराहास्यो दंष्ट्राग्रे तु धृता धरा ॥ २४ ॥

[ इति मत्स्यकूर्मवराहाः ]

नृसिंहः सिंहवक्त्रोऽतिदंष्ट्रालः कुटिलोरुकः ।
हिरण्योरस्थलासक्तविदारणकरद्वयः ॥ २५ ॥

[ इति नृसिंहः ]

वामनः सशिखः श्यामो दण्डी (३)पीताम्बुपात्रवान् ।
(४) जटिलीनधरो रामो भार्गवः परशुं दधत् ॥ २६ ॥

[ इति वामनपरशुरामौ ]

रामः शरेषुधृक् श्यामः सशीरमुशलो बलः ।

[ इति रामबलरामौ ]

(५) बद्धपद्मासनो रक्तस्त्यक्ताभरणमूर्धजः ॥ २७ ॥
कषायवस्त्रो ध्यानस्थो द्विभुजोऽङ्कोर्द्धपाणिकः ।

[ इति बुद्धः ]

कल्की सखड्गोऽश्वारूढो हरेरवतरा इमे ॥ २८ ॥

[ इति कल्की ]

इति दशावताराः ।

(६)सुप्तरूपं शेषतल्पे (७)दक्षो दण्डभुजोऽस्य तु ।
शिरोधरो वा वामस्तु सपुष्पोऽयं जलेशयः ॥ २९ ॥

---

(१) 'दधत्' इति स्यात् । (२) 'बिभ्रच्च् श्यामो' इति स्यात् । (३) 'छत्राम्बुपात्रवान्' इति स्यात् । (४) 'जटी बाणधरो' इति स्यात् । (५) 'बुद्धः पद्मासनो' इति स्यात् । (६) 'सुप्तरूपः' इति स्यात् । (७) 'दक्षे दण्डो भुजेऽस्य तु' इति स्यात् ।

तन्नाभिपङ्कजे धाता ( श्रीभूमिवशिरोन्थिगे? ) ।
निध्यस्त्रादिस्वरूपाणि पार्श्वयोर्मधुकैटभौ ॥ ३० ॥

इति जलशयनः ।

## अथ शालिग्रामपरीक्षा

**[ पूज्यशिलालक्षणम् ]**

नागभोगसमाकारा शिला सूक्ष्मा च या भवेत् ।
पूजनीया प्रयत्नेन स्थिरा स्निग्धा सुवर्त्तुला ॥ ३१ ॥
तत्राप्यामलकीमानात् सूक्ष्मा चातीव या भवेत् ।
तस्यामेव सदा कृष्णः श्रिया सह वसत्यसौ ॥ ३२ ॥
यथा यथा शिला सूक्ष्मा तथा तथा महत् फलम् ।
तस्मात्तां पूजयेन्नित्यं धर्मकामार्थमुक्तये ॥ ३३ ॥

**[ त्याज्यशिलालक्षणम् ]**

कपिला कर्बुरा भग्ना सूक्ष्मा(१)छिनांकुला च या ।
रेखाकुलाऽस्थिरा स्थूला बहुचक्रैकचक्रिका ॥ ३४ ॥
बृहन्मुखी बृहच्चक्रा बद्धचक्रा च या पुनः ।
(२)बद्धचक्राऽथ वा स्याद् भिन्नचक्रा त्वधोमुखी ॥ ३५ ॥
दग्धा सुरक्ता चापूज्या भीषणा पङ्क्तिचक्रिका ।
पूजयेद् यः प्रमादेन दुःखमेव लभेत् सदा ॥ ३६ ॥

**[ तत्र मतान्तरम् ]**

खण्डिता स्फुटिता भिन्ना पार्श्वभिन्ना प्रभेदिता ।
शालिग्रामसमुद्भूता शिला दोषावहा नहि ॥ ३७ ॥

**[ वर्णभेदात् फलविशेषकथनम् ]**

स्निग्धा सिद्धिकरी मुद्रा कृष्णा कीर्त्तिप्रदायका ।
पाण्डुरा पापदहना (३)पिता पुत्रप्रदायका ॥ ३८ ॥
नीला दिशति (४)लक्ष्मी च रक्तभोगप्रदायिनी ।

**[ चक्रविशेषे वर्णभेदः ]**

कपिलं नारसिंहञ्च वामनं (५)चातसन्निभम् ॥ ३९ ॥

---

(१) 'छिद्राकुला' इति स्यात् । '-स्थिनाकुला' इति वा कथञ्चित् सङ्गच्छत एव । (२) 'लग्नचक्राऽथ वा या स्याद्' इति स्यात् । (३) 'पीता' इति स्यात् । (४) 'लक्ष्मीं च रक्ता' इति स्यात् । (५) 'पीतसन्निभम्' इति स्यात् ।

वासुदेवं सितं ज्ञेयं रक्तं सङ्कर्षणं मतम् ।
दामोदरं तु नीलाभमनिरुद्धं तथैव च ॥ ४० ॥
श्यामं नारायणं ज्ञेयं वैष्णवं कृष्णवर्णकम् ।
बहुवर्णमनन्ताख्यं श्रीधरं पीतमुच्यते ॥ ४१ ॥

[ उत्तमादिचक्रप्रमाणम् ]

वृत्त(१)सूत्रेऽष्टमो भाग उत्तमं (२)वक्तूलक्षणम् ।
मध्यमञ्च चतुर्भागं कनीयस्तु त्रिभागकम् ॥ ४२ ॥

[ त्रिचक्रलक्ष्मीनारायणः ]

लक्ष्मीनारायणो देवस्त्रिभिश्चक्रैर्व्यवस्थितः ।
पूजनीयः प्रयत्नेन भुक्तिमुक्तिफलप्रदः ॥ ४३ ॥

[ शालग्रामस्य प्रतिष्ठानिषेधः ]

अहं ब्रह्मादयो देवाः सर्वभूतानि केशवः ।
सदा सन्निहितस्तत्र प्रतिष्ठाकर्म नास्त्यतः ॥ ४४ ॥

[ शालग्रामप्रशंसा ]

शालग्रामशिलाग्रे तु यो जुहोति हुताशनम् ।
एकाहुतिर्हुता सम्यक् कल्पकोटिगुणोत्तरा ॥ ४५ ॥

इति शालिग्रामपरीक्षा ।

[ अथ मूर्त्तिविशेषाः ]

तार्क्ष्यो (३)मकङ्कतः प्रक्षः कौशिकाकारनासिकः ।
चतुर्भुजस्तु कर्त्तव्यो वृत्तनेत्रमुखस्तथा ॥ ४६ ॥
गृध्रोरुजानुचरणः पक्षद्वयविभूषितः ।
प्रभासंस्थानसौवर्णः कलापेन विभूषितः ॥ ४७ ॥
छत्रञ्च पूर्णकुम्भञ्च करयोस्तस्य कारयेत् ।
करद्वयञ्च कर्त्तव्यं तथा विरचिताञ्जलि ॥ ४८ ॥
नवतालः प्रकर्त्तव्यो गरुडो मानसूत्रतः ।
(४)पादजानुकटिर्यावदर्चायां वाहनस्य दृक् ॥ ४९ ॥
यदुश्च भगवान् पृष्ठे छत्रकुम्भधरौ करौ ।
किञ्चिल्लम्बोदरः कार्यः सर्वाभरणभूषितः ॥ ५० ॥

---

(१) '-सूत्राष्टमो' इति स्यात् । (२) 'चक्र-' इति स्यात् । (३) 'मरकतप्रख्यः' इति स्यात् । (४) 'पादं जानु कटिं यावदर्चायां' इति स्यात् ।

(१)वामाग्रे कुञ्चितः पश्चादन्यपादस्तु जानुना ।
पृथिवीं संस्थितो यत्र गारुडं स्यात्तदासनम् ॥ ५१ ॥
इति (२)गारुडः ।

वैकुण्ठञ्च प्रवक्ष्यामि सोऽष्टबाहुर्महाबलः ।
तार्क्ष्यासनश्चतुर्वक्त्रः कर्त्तव्यः शान्तिमिच्छता ॥ ५२ ॥
गदां खड्गं चक्रशरं दक्षिणे च चतुष्टयम् ।
शङ्खं खेटं धनुः पद्मं वामे दद्याच्चतुष्टयम् ॥ ५३ ॥
अग्रतः पुरुषाकारं नारसिंहं च दक्षिणे ।
अपरं स्त्रीमुखाकारं वाराहास्यं तथोत्तरम् ॥ ५४ ॥
इति वैकुण्ठः ।

विंशत्या हस्तकैर्युक्तो विश्वरूपश्चतुर्मुखः ।
पताका हलशङ्खौ च वज्राङ्कुश(३)शरांस्तथा ॥ ५५ ॥
चक्रञ्च (४)बीजपूरञ्च वरो दक्षिणबाहुषु ।
पताका दण्डपाशौ च गदाशार्ङ्गोत्पलानि च ।
शृङ्गी मुशलमक्षञ्च क्रमात् स्युर्वामबाहुषु ॥ ५६ ॥
हस्तद्वये योगमुद्रा वैनतेयोपरि स्थितः ।
क्रमान्नर-नृसिंह-स्त्री-वराह-मुखवन्मुखः ॥ ५७ ॥
इति (५)विश्वमुखः ।

अनन्तोऽनन्तरूपस्तु हस्तैर्द्वादशभिर्युतः ।
अनन्तशक्तिसंवीतो गरुडस्थश्चतुर्मुखः ॥ ५८ ॥
दक्षिणे तु गदाखड्गौ चक्रं वज्राङ्कुशौ शरः ।
शङ्खः खेटं धनुः पद्मं दण्डपाशौ च वामतः ॥ ५९ ॥
इत्यनन्तः ।

मुखानि पूर्ववत्तस्याप्यत्र त्रैलोक्यमोहनः ।
स षोडशभुजस्तार्क्ष्यारूढः प्रागवच्चतुर्मुखैः ॥ ६० ॥
गदाचक्राङ्कुशौ (६)बाणं शक्तिश्चक्रं वरः क्रमात् ।
दक्षेषु मुद्गरः पाशः शार्ङ्गशङ्खाब्जकुण्डिका(:) ॥ ६१ ॥

---

(१) 'वामोऽग्रे' इति स्यात् । (२) 'गरुडः' इति स्यात् । (३) '-शरास्तथा' इति स्यात् । (४) 'बीजपूरश्च' इति स्यात् । (५) 'विश्वरूपः' इति स्यात् । (६) 'बाणः' इति स्यात् ।

शृङ्गी वामेषु हस्तेषु योगमुद्रा (१)करद्वयम् ।
नरश्च नारसिंहश्च शूकरं कपिलाननम् ॥ ६२ ॥

इति त्रैलोक्यमोहनः ।

दक्षिणे पुण्डरीकाक्षः पूर्वे नारायणः स्मृतः ।
गोविन्दः पश्चिमे स्थाप्य उत्तरे मधुसूदनः ॥ ६३ ॥
ईशाने स्थापयेद् विष्णुमाग्नेय्यां तु जनार्दनम् ।
नैर्ऋत्ये पद्मनाभञ्च वायव्ये माधवं तथा ॥ ६४ ॥
केशवो मध्यतः स्थाप्यो वासुदेवोऽथवा बुधैः ।
सङ्कर्षणो वा प्रद्युम्नोऽनिरुद्धो वा यथाविधि ॥ ६५ ॥
दशावतारसंयुक्तः प्रोक्तो जलशयोऽथवा ।
अग्रतः शूकरः स्थाप्यः सर्वदेवमयः शुभः ॥ ६६ ॥

इति विष्णवायतनम् ।

प्रतिहारांस्ततो वक्ष्ये चतसृणां दिशां क्रमात् ।
वामनाकाररूपास्ते कर्तव्याः सर्वतः शुभाः ॥ ६७ ॥
(२)तर्जनी शङ्खचक्रे च चण्डो दण्डं दधत् क्रमात् ।
वामे स्थाने प्रचण्डोऽस्यापसव्ये दक्षिणे शुभः ॥ ६८ ॥
पद्मं खड्गं खेटकञ्च क्रमाद् बिभ्रद् गदां (३)च यः ।
(४)विलोमे पद्मगदयोर्विजयस्तौ (५)क्रमाल्लिखेन्न्यसेत् ॥ ६९ ॥
(६)तर्जनी बाणचापौ च गदां धाता च सूचितः ।
(७)मुदापसव्ये तैरस्त्रैर्विधाता वाम-दक्षयोः ॥ ७० ॥
तर्जनीकमलं शङ्खं गदां भद्रः क्रमाद् दधत् ।
(८)शस्त्रापसव्ययोगेन सुभद्रस्तौ क्रमान्न्यसेत् ॥ ७१ ॥

इति विष्णुप्रतीहाराः ।

इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे रूपमण्डने
विष्णुमू(र्त्या॑र्त्य)धिकारस्तृतीयोऽध्यायः ॥ ३ ॥

---

(१) 'करद्वये' इति स्यात् । (२) 'तर्जनीं' इति स्यात् । (३) 'जयः' इति स्यात् । (४) 'विलोमैः' इति स्यात् । (५) 'क्रमाल्लिखेत्' इति 'क्रमान्न्यसेत्' इति वा स्यात् । (६) 'तर्जनीं' इति स्यात् । (७) 'सव्येऽपसव्ये' इति स्यात् । (८) 'सव्यापसव्य-' इति स्यात् ।

[ शिवमूर्त्तिशिवलिङ्गलक्षणाधिकाराख्यः ]

# चतुर्थोऽध्यायः

## अथ शिवमूर्त्तयः

### [ द्वादश शिवमूर्त्तयः ]

शुक्लाम्बरधरं देवं शुक्लमाल्यानुलेपनम् ।
जटाभारयुतं कुर्याद् बालेन्दुकृतशेखरम् ॥ १ ॥

त्रिलोचनं सौम्यमुखं कुण्डलाभ्यामलङ्कृतम् ।
सद्योजातं महोत्साहं वरदाभयपाणिनम् ॥ २ ॥

इति सद्योजातः [१] ।

रक्ताम्बरधरं देवं रक्तयज्ञोपवीतिनम् ।
रक्तोष्णीषं रक्तनेत्रं रक्तमाल्यानुलेपनम् ॥ ३ ॥

जटाचन्द्रधरं कुर्यात्त्रिनेत्रं तुङ्गनासिकम् ।
वामदेवं महाबाहुं खड्गखेटकधारिणम् ॥ ४ ॥

इति वामदेवः [२] ।

दंष्ट्राकरालवदनं सर्पशीर्षं त्रिलोचनम् ।
रुण्डमालाधरं देवं सर्पकुण्डलमण्डितम् ॥ ५ ॥

भुजङ्गकेयूरधरं सर्पहारोपवीतिनम् ।
योनसं(?) कटिसूत्रेण गले वृश्चिकमालिकम् ॥ ६ ॥

नीलोत्पलदलश्याममतसीपुष्पसन्निभम् ।
पिङ्गभ्रूपिङ्गजटिलं शशाङ्ककृतशेखरम् ॥ ७ ॥

(१)तक्षकं मुष्टिकञ्चैव पादयोस्तस्य नूपुरौ ।
अघोररूपकं कुर्यात् कालरूपमिवापरम् ॥ ८ ॥

---

(१) 'तक्षको मुष्टिकश्चैव' इति स्यात् ।

महावीर्यं महोत्साहमष्टबाहुं महाबलम् ।
शमयन्तं रिपोः (१)सद्यं निवेशो यत्र भूतले ॥ ९ ॥
खट्वाङ्गञ्च कपालञ्च खेटकं पात्रमेव च ।
वामहस्तेषु कर्त्तव्यमेतच्छस्त्रचतुष्टयम् ॥ १० ॥
त्रिशूलं परशुः (२)खड्गं दण्डश्चैवारिमर्दनः ।
शस्त्राण्येतानि चत्वारि दक्षिणेषु करेषु च ॥ ११ ॥

इत्यघोरः [३] ।

पीताम्बरस्तत्पुरुषः पीतयज्ञोपवीतवान् ।
मातुलिङ्गं करे वामेऽक्षमाला दक्षिणे तथा ॥ १२ ॥

इति तत्पुरुषः [४] ।

(३)शुद्धः स्फटिकसंकाशो जटाचन्द्रविभूषितः ।
(४)अक्षस्त्रिशूलहस्तौ च कपालं वामतः शुभम् ॥ १३ ॥*

[ इतीशः ५ ]

कपालमालि-सुश्वेतं शशाङ्ककृतशेखरम् ।
व्याघ्रचर्मधरं मृत्युञ्जयं नागेन्द्रभूषितम् ॥ १४ ॥
त्रिशूलं चाक्षमाला च दक्षयोः करयोः स्मृतौ ।
कपालं कुण्डिका वामे योगमुद्रा (५)करद्वयम् ॥ १५ ॥

इति मृत्युञ्जयः [६] ।

चतुर्भुजो महाबाहुः शुक्लपादाक्षिपाणिकः ।
पुस्तकाभयहस्तोऽसौ(६)सच काक्षस्त्रिलोचनः ॥ १६ ॥

इति किरणाक्षः [७] ।

---

(१) 'सद्मं' इति स्यात् । (२) 'खड्गो' इति स्यात् । (३) 'शुद्धस्फटिक-' इति स्यात् । (४) 'त्र्यक्षस्त्रिशूलहस्तश्च' इति, 'दक्षे त्रिशूलं हस्ते च' इति वा स्यात् । (५) 'करद्वये' इति स्यात् । (६) 'स-चक्राक्ष-' इति ['किरणाक्ष-' इति वा ?] स्यात् ।

---

* पद्यमिदं मूर्त्यन्तरस्य लक्षकं न तु मृत्युञ्जयमूर्त्तेः, द्विरायुधनिर्देशात् । भवति च मृत्युञ्जयलक्षकत्वेन भ्रान्तिरन्तरा पुष्पिकान्तरविरहात् । देवतामूर्त्तौ 'ईश'लक्षणत्वेनेदं निर्दिष्टम् ( देव० ६।१४ ) ; तदनुगत्याऽस्माभिरपि पुष्पिकैका कल्पिता ; एवञ्चाग्रे 'इति द्वादश रुद्रा' इति पुष्पिकाऽपि नानृतभाषिणी स्यात् ।

चित्रवस्त्रधरं कुर्याच्चित्रयज्ञोपवीतिनम् ।
चित्ररूपं महेशानं चित्रैश्वर्यसमन्वितम् ॥ १७ ॥

चतुर्बाहुं चैक(१)वस्त्रं सर्वालङ्कारभूषितम् ।
खड्गं धनुः शरं खेटं श्रीकण्ठं बिभ्रतं भुजैः ॥ १८ ॥

इति श्रीकण्ठस्वरूपम् [८] ।

अहिर्बुध्नो गदासर्पं चक्रं डमरु-मुद्गरौ ।
शूलाङ्कुशाक्ष(२)माला च दक्षोर्ध्वाधःक्रमाद्दधत् ॥ १९ ॥

तोमरं पट्टिशं चर्म कपालं तर्जनीघटौ ।
(३)शक्तिः परशुकं वामहस्ते सन्धारयत्यसौ ॥ २० ॥

इत्यहिर्बुध्नः [९] ।

विरूपाक्षस्ततः खड्गं शूलं डमरुमङ्कुशम् ।
सर्पञ्चक्रं गदामक्षसूत्रं बिभ्रत् कराष्टकैः ॥ २१ ॥

खेटं खट्वाङ्गशक्तिञ्च परशुं तर्जनीघटम् ।
घण्टाकपालकं चेति वामोर्ध्वादिकराष्टकैः ॥ २२ ॥

इति विरूपाक्षः [१०] ।

बहुरूपो दधद् दक्षे डमरुं च सुदर्शनम् ।
सर्पं शूलाङ्कुशौ कुम्भं कौमुदीजपमालिकाम् ॥ २३ ॥

घण्टाकपालखट्वाङ्गतर्जनीकुण्डिकां धनुः ।
परशुं (४)पट्टिकं चेति वामोर्ध्वादिक्रमेण हि ॥ २४ ॥

इति बहुरूपी सदाशिवः [११] ।

त्र्यम्बकोऽथ दधच्चक्रं डमरुं मुद्गरं शरम् ।
(५)शूलाङ्कुशान्यक्षसूत्रं दक्षोर्ध्वादिक्रमेण हि ॥ २५ ॥

---

(१) '-वक्त्रं' इति स्यात् । (२) '-मालाश्च' इति स्यात् । (३) 'शक्तिं' इति स्यात् । (४) 'पट्टिशं' इति स्यात् । (५) 'शूलाङ्कुशावक्षसूत्रं' इति स्यात् ।

गदाखट्वाङ्गपात्राणि कार्मुकं तर्जनीघटौ ।
परशुं पट्टिशं चेति (१)वामार्धादिकराष्टके ॥ २६ ॥

इति त्र्यम्बकः [१२] ।

इति द्वादश रुद्राः ।

उमामहेश्वरं वक्ष्ये उमया सह शङ्करः ।
(२)मातुलिङ्गं त्रिशूलञ्च धरते दक्षिणे करे ॥ २७ ॥
आलिङ्गितो वामहस्ते (३)नागेन्द्रं द्वितीये करे ।
हरस्कन्ध उमाहस्ते दर्पणो द्वितीये करे ॥ २८ ॥
अधस्ताद् वृषभं कुर्यात् कुमारञ्च गणेश्वरम् ।
भृङ्गिरीटं तथा(४)कुर्यान्निर्मंसिन्नृत्यसंस्थितम् ॥ २९ ॥

इति उमामहेश्वरः ।

कार्यो (५)हरिहरस्यापि दक्षिणार्धे शिवः सदा ।
हृषीकेशश्च वामार्धे श्वेतनीलाकृती क्रमात् ॥ ३० ॥
वरं त्रिशूलचक्राब्जधारिणो बाहुकाः क्रमात् ।
दक्षिणे वृषभः पार्श्वे वामे विहगराडिति ॥ ३१ ॥

इति हरिहरमूर्त्तिः ।

एकपीठसमारूढमेकदेहनिवासिनम् ।
षड्भुजञ्च चतुर्वक्त्रं सर्वलक्षणसंयुतम् ॥ ३२ ॥
अक्षमालां त्रिशूलञ्च गदां कुर्याच्च दक्षिणे ।
कमण्डलुञ्च खट्वाङ्गं चक्रं वामभुजे तथा ॥ ३३ ॥

इति हरपितामहः ।

उमाञ्च द्विभुजां (६)कुर्याल्लक्ष्मीर्नारायणाश्रिता ।
देवं शस्त्रैः स्वकीयैश्च गरुडोपरि संस्थितम् ॥ ३४ ॥

---

(१) 'वामोर्ध्वादि-' इति स्यात् । (२) 'मातुलुङ्गं' इति स्यात् । (३) 'नागेन्द्रो' इति स्यात् । (४) 'कुर्यान्निर्मांसं नृत्य-' इति स्यात् । (५) 'हरिहरश्चापि' इति स्यात् । (६) 'कुर्याल्लक्ष्मीं नारायणाश्रिताम्' इति स्यात् ।

दक्षिणः कण्ठलग्नोऽस्या वामो हस्तः सरोजधृक् ।
विभोर्वामकरो लक्ष्म्याः कुक्षिभागस्थितः सदा ॥ ३५ ॥

सर्वेषामेव देवानां युग्मं युग्मं विधीयते ।
तेषां शक्तिः पृथग्रूपा तदस्त्रवाहनाकृति(:) ॥ ३६ ॥

इति युग्मम् ।

अथ लिङ्गानि ।

स्थिरलक्ष्मीप्रदं हैमं (१)तारजञ्चैव राजतम् ।
प्रजावृद्धिकरं (२)ताम्रं वङ्गमायुर्विवर्धनम् ॥ ३७ ॥

(३)विशेषकारकं कांस्यं पित्तलं भुक्तिमुक्तिदम् ।
सीसकं (४)शक्लिङ्गमायसं (५)पुरिनाशनम् ॥ ३८ ॥

अष्टलोहमयं लिङ्गं कुष्ठरोगक्षया(६)पहम् ।
त्रिलोहसम्भवं लिङ्गमन्तर्धानप्रसिद्धिदम् ॥ ३९ ॥

[ इत्यष्टलोहलिङ्गफलम् ]

आयुष्यं हीरकं लिङ्गं भोगदं मौक्तिकोद्भवम् ।
सुखकृत् पुष्परागोत्थं वैदूर्यं शत्रुमर्दनम् ॥ ४० ॥

श्रीप्रदं पद्मरागञ्च इन्द्रनीलं यशःप्रदम् ।
लिङ्गं मणिमयं पुष्ट्यै स्फटिकं सर्वकामदम् ॥ ४१ ॥

[ इत्यष्टरत्नलिङ्गफलम् ]

रत्नलिङ्गं द्विधा ख्यातं स्वपीठं धातुपीठकम् ।
धातुजं तु स्वयोनिस्थं सिद्धिमुक्तिप्रदायकम् ॥ ४२ ॥

ताम्रजं पुष्परागस्य स्फटिकस्य तु (७)राजितम् ।
ताम्रजं मौक्तिकस्यापि शेषाणां हेमजं मतम् ॥ ४३ ॥

[ इति पीठविधिः ]

---

(१) 'राजतञ्चैव राज्यदम्' इति स्यात् । (२) 'राङ्गं ताम्रमायुःप्रवर्धनम्' इत्याकरे । (३) 'विद्वेष-' इति स्यात् । (४) 'वंशकृल्लिङ्ग-' इति स्यात् । (५) 'रिपु-' इति स्यात् । (६) '-वहम्' इति स्यात् । (७) 'राजतम्' इति स्यात् ।

समस्तमणिजातीनां (१)दीप्तसान्निध्यकारकम् ।
( मनोत्मानं प्रमाणानि तेषु ग्राह्यं नवाम्बुदैः ? ) ॥ ४४ ॥*

[ इति लिङ्गोचिता मणयः ]

शैलेयं भोगदं लिङ्गं मृन्मयं सर्वकामदम् ।
दारुजं वसुसिद्ध्यर्थं सर्वमेतच्चलाचलम् ॥ ४५ ॥

[ इति चलाचललिङ्गम् ]

एकाङ्गुलादिपञ्चान्तं चललिङ्गञ्च कन्यसम् ।
षट्पर्वादिदशान्तञ्च मध्यमेकादशादितः ॥ ४६ ॥

[ इति चललिङ्गम् ]

नैकहस्तादधो(२)वाद्यं प्रासादे स्थिरतां नयेत् ।
स्थिरं तत् स्थापयेद् गेहे (३)गृण्यां हे दूरकृद् यतः ॥ ४७ ॥

[ इति स्थिरलिङ्गम् ]

(४)वाणलक्षणहीनेऽपि यत्र वै रोचते मनः ।
तत्र पूजां प्रकुर्वीत धर्मकामार्थमोक्षदम् ॥ ४८ ॥

[ इति लक्षणादिहीनस्यापि पूज्यत्वम् ]

रत्नमेकाङ्गुलं लिङ्गमङ्गुलाङ्गुलवृद्धितः ।
नवान्तं नवलिङ्गञ्च वृद्धिर्वा मुद्गमानिका ॥ ४९ ॥

[ इति रत्नलिङ्गमानम् ]

धातोरष्टाङ्गुलं पूर्वमष्टाष्टाङ्गुलवर्धनात् ।
त्रिहस्तान्तं नवैव स्युर्लिङ्गानि च यथाक्रमम् ॥ ५० ॥

[ इति धातुलिङ्गमानम् ]

दृढकाष्ठमयं लिङ्गं कर्त्तव्यं षोडशाङ्गुलम् ।
षोडशाङ्गुलिका वृद्धिः षट्करान्तं नवैव हि ॥ ५१ ॥

[ इति दारवलिङ्गमानम् ]

---

(१) 'दीप्तिः सान्निध्यकारणम्' इति स्यात् । (२) 'लिङ्गं' इति स्यात् । (३) 'गृहांहोदूरकृद्' इति स्यात् । (४) 'वर्ण-' इति स्यात् ।

---

* अत्राऽऽदर्शे चतुश्चत्वारिंशसंख्याबोधकोऽङ्को नोपलभ्यते, तत्संख्याकः श्लोकः पतितो न वेति चिन्तनीयम् । अस्माभिस्तु यथाक्रममेवाङ्का निवेशिताः ।

हस्तादिनवहस्तान्तं शैलं लिङ्गं विधीयते ।
हस्तवृद्धया नवैव स्युर्मध्ये वृद्धिर्यदृच्छया ॥ ५२ ॥

[ इति शैललिङ्गमानम् ]

मृद्दारुलोहशैलानां दैर्घ्ये भक्ते जिनांशकैः [२४] ।
कुर्यात् षट्सार्धसप्ताष्टनवांशै(१)स्तरं शुभम् ॥ ५३ ॥

[ इति लिङ्गमानम् ]

श्रीपर्णी (२)शिंशुपाशोकशिरीषः (३)खादिनोऽर्जुनः ।
चन्दनः श्रीफलो निम्बो रक्तचन्दनबीजकौ ॥ ५४ ॥

कर्पूरो देवदारुश्च चन्दनः पारिजातकः ।
चम्पको मधुवृक्षश्च हिन्तालश्चागुरुः शुभाः ॥ ५५ ॥

[ इति लिङ्गवृक्षाः ]

(४)निर्व्रणाः ××× सर्वे लिङ्गार्थे सौख्यदायकाः ।
ग्रन्थिकोटरसंयुक्तान् शाखोद्भूतान् परित्यजेत् ॥ ५६ ॥

[ इति वृक्षलक्षणम् ]

निलयं दारुलिङ्गानामिष्टकादारुजं शुभम् ।
शैलजं धातुरत्नानां स्वरूपं चाधिकं शुभम् ॥ ५७ ॥

[ इति दार्वादिलिङ्गोचिताः प्रासादाः ]

धातुजे रत्नजे बाणे दारुजे च स्वयम्भुवि ।
(५)गृहनूनाधिकं वाऽपि (६)वक्त्रलिङ्गिषु पार्थिवः ॥ ५८ ॥

हस्तमानं भवेल्लिङ्गं वेदहस्ते सुरालये ।
(७)ज्येष्ठलिङ्गे तु वेदांशं षट्त्रिंशं नवहस्तकम् ॥ ५९ ॥

पञ्चादिभूतवेदांशे प्रासादे हस्तसंख्यया ।
मध्यमं पञ्चमांशेन हस्तादिनवहस्तकम् ॥ ६० ॥

---

(१) '-र्विस्तरं' इति स्यात् । (२) 'शिंशपाऽशोकः' 'शिशुकाऽशोकः' इति वा स्यात् । (३) 'खादिरो-' इति स्यात् । (४) 'निर्व्रणाः' इत्यनन्तरं 'सुदृढा' इति त्रुटितं स्यात् । (५) 'गृहं न्यूनाधिकं' इति स्यात् । (६) 'वक्त्रलिङ्गेषु पार्थिवे' इति स्यात् । (७) 'ज्येष्ठलिङ्गन्तु वेदांशे षट्त्रिंशे' इति स्यात् ।

(कृत्वादियुगलत्वान्तं ?)हस्तसंख्ये शिवालये ।
षष्ठांशेन प्रकर्त्तव्यं हस्तादिनवहस्तकम् ॥ ६१ ॥

(१)कनिष्ठाज्येष्ठलिङ्गेषु मध्यमामध्यमेषु च ।
प्रासादाः कन्यसे ज्येष्ठाः सीमामानमिदं स्मृतम् ॥ ६२ ॥

गर्भे पञ्चांशके त्र्यंशे ज्येष्ठलिङ्गं तु मध्यमम् ।
नवांशं पञ्चभागं स्याद् गर्भार्धं कन्यसोदयम् ॥ ६३ ॥

[ इति प्रासादमानेन लिङ्गमानम् ]

पद्मं शङ्खो ध्वजा छत्रं (२)खड्गशक्तिकचामरे ।
वज्रं (३)दण्डोर्द्ध्वभागश्च चक्रं मत्स्यौ घटः शुभः ॥ ६४ ॥

सौख्यदं चिह्न(४)मित्याद्यामावर्त्तो दक्षिणेऽपि यः ।
श्वेतरक्ता पीतकृष्णा रेखा वर्णेषु सौख्यदा ॥ ६५ ॥

[ इति लिङ्गे शुभचिह्नानि ]

ब्रह्मांशश्चतुरस्रोऽधो मध्येऽष्टास्रस्तु वैष्णवः ।
पूजाभागः सुवृत्त(ः) स्यात् पीठोर्द्ध्वं शङ्करस्य च ॥ ६६ ॥

[ इति लिङ्गे ब्रह्मादिभागाः ]

पूजायामे कलांशे च (५)लिङ्गचित्रं दशांशकैः ।
पीठस्यार्धे द्विभागे च रेखा कार्या प्रदक्षिणे ॥ ६७ ॥

(मस्तकं मानमध्ये तु बाह्येऽङ्गे राष्ट्रविभ्रमः ।?)
(६)छत्राभमष्टमांशेन (७)सार्धे द्व्यंशषडङ्गके ॥ ६८ ॥

त्रपुषाभं विस्तरार्धं कुक्कुटाण्डं शिरो मतम् ।
त्रिभागे लिङ्गविस्तारे एकांशेनार्धचन्द्रकम् ॥ ६९ ॥

सार्धत्र्यंशेन तुल्यं स्यादष्टांशे बुद्बुदाकृति(ः?) ।
ऊर्द्ध्वाधोमध्यहीनं यल्लिङ्गं नाशकरं भवेत् ॥ ७० ॥

[ इति लिङ्गस्योर्द्ध्वादिभागाः ]

---

(१) 'कनिष्ठ-' इति स्यात् । (२) 'खड्गः' इति स्यात् । (३) 'दण्डोऽर्ध-चन्द्रश्च' इत्यन्यत्र । (४) '-मित्याद्यमावर्त्तो' इति स्यात् । (५) 'लिङ्गं चिह्नयं' इति स्यात् । (६) 'छत्राभमि'ति स्यात् । (७) 'सार्धद्व्यंशे षडंशके' इति स्यात् ।

दीर्घे वा सन्धिरेखाभिर्युक्तकाकपदाकृति(:?) ।
लिङ्गं नान्याश्रितं लिङ्गमाश्रिताः सर्वदेवताः ।
स्थापयेन्मुख्यदेवस्य (१)स्कन्दमेढ्रान्तरे सुरान् ॥ ७१ ॥

इति घटितरत्नलिङ्गलक्षणम् ।

वाराणस्यां प्रयागे च गङ्गायाः सङ्गमेषु च ।
कुरुक्षेत्रे सरस्वत्यां बाणलिङ्गं सुखावहम् ॥ ७२ ॥

यानि वै नर्मदायाञ्च अन्तर्वेद्याञ्च सङ्गमे ।
केदारे च प्रभासे च बाणलिङ्गं सुखावहम् ॥ ७३ ॥

**[ इति बाणोत्पत्तिस्थानम् ]**

त्रिपञ्चवारं यस्यैव तुलासाम्यं न जायते ।
तदा बाणः समाख्यातः शेषं पाषाणसम्भवम् ॥ ७४ ॥

**[ इति बाणपरीक्षा ]**

स्थूलं (२)खण्डञ्च दीर्घञ्च स्फुटितं छिद्रसंयुतम् ।
बिन्दुयुक्तं च शूलाग्रं कृष्णं च चिपिटं तथा ॥ ७५ ॥

(३)चक्रञ्च मध्यहीनञ्च बहुवर्णञ्च यद् भवेत् ।
वर्जयेन्मतिमाँल्लिङ्गं सर्वदोषकरं यतः ॥ ७६ ॥

**[ इति वर्ज्यलिङ्गानि ]**

ग्रन्थान्तरे ;—

महानदीसमुद्(४)भूतसिद्धक्षेत्रादिसम्भवम् ।
पाषाणं परया भक्त्या लिङ्गवत् पूजयेत् सुधीः ॥ ७७ ॥

सदोषं गुणसंयुक्तं बाणं पूज्यं हि नित्यशः ।
बलाल्लक्ष्मीं समाकृष्य भुज्यते बाणलिङ्गतः ॥ ७८ ॥

(५) सर्वं व्रततपो दानं तीर्थं देवेषु यत् फलम् ।
तत् फलं कोटिगुणितं प्राप्यते लिङ्गपूजनात् ॥ ७९ ॥

---

(१) 'स्कन्ध-' इति स्यात् । (२) 'खर्वञ्च' इति स्यात् । (३) 'वक्रञ्च' इति स्यात् । (४) '-भूतमि'ति स्यात् । (५) 'सर्वव्रततपोदानतीर्थदेवेषु' इति स्यात् ।

शतवारं कुरुक्षेत्रे सहस्रं जाह्नवीजले ।
लक्षवारं नर्मदायां कोटिं च कुरुजाङ्गले ॥ ८० ॥

कृत्वा स्नानं तथा पिण्डं होमं दानं च भोजनम् ।
(१)गुणिते कोटिवारञ्च सर्वपुण्यं लभेन्नरः ॥ ८१ ॥

(२) पद्मे वै शतहस्तेषु (३)बाणेषु च शतेषु च ।
स्वयम्भुवि सहस्रान्तं शिवतीर्थोदकं स्मृतम् ॥ ८२ ॥

[ इति बाणलिङ्गप्रशंसा ]

लिङ्गायामसमो दैर्घ्ये उच्छ्रायः पीठिकासमः ।
(४)समभागयतो वृष(:)पञ्चभागोन्नतो भवेत् ॥ ८३ ॥

बाणलिङ्गे वृषं कुर्यात् (५)स्वयम्भूर्मुखमृन्मये ।
शते सहस्रलिङ्गे च वृषं न्यूनाधिकं विदुः ॥ ८४ ॥

[ इति वाहनविधिः ]

विस्तारस्य त्रिभागेण प्रणालं चाधिकं मतम् ।
(६)तदर्धे नम्रविस्तारं त्रिभागो जलवाहकः ॥ ८५ ॥

इति लिङ्गानि ।

पृथुत्वं पीठिकायास्तु लिङ्गायामसमं भवेत् ।
उदयो विष्णुभागान्ते उमावत् पीठिका स्मृता ॥ ८६ ॥

जात्यैकया विधातव्यं (७)नित्यमन्यन्योसंकुलम् ।
आहुः शैलद्रुमे केचित् पीठं पक्वेष्टकामयम् ॥ ८७ ॥

उपर्युपरि पीठानां सन्धिरङ्गावसानके ।
(८)जालस्य मध्यमध्ये च कर्णे सन्धिं न सन्धयेत् ॥ ८८ ॥

चतुरस्रादिवृत्तान्ता पीठिका दशधा स्मृता ।
उन्नता दर्पणाकारा बाह्ये मेखलयाऽन्विता ॥ ८९ ॥

---

(१) 'गुणितं' इति स्यात् । (२) 'धातवे' इति 'घटे वै' इति वा स्यात् । (३) 'बाणे पञ्चशतेषु च' इति स्यात् । (४) 'समभागायतो वृषः' इति स्यात् । (५) 'स्वयम्भूमुख-' इति स्यात् । (६) 'तदर्धेनाग्रविस्तारं' इति स्यात् । (७) 'नेष्टमन्योन्य-' इति स्यात् । (८) 'नालस्य' इति स्यात् ।

(१)त्रिंशोदंशस्तु पीण्ड्याश्च जगत्याञ्च परिक्षिपेत् ।
ऊर्द्धाधो (जाड्यकुम्भस्य?) तन्मध्ये कनकं भवेत् ॥ ९० ॥
(अर्द्धा?) दैर्घ्यसमा दैर्घ्ये लिङ्गायामायता भवेत् ।
यस्य देवस्य या पत्नी पीठे तां परिकल्पयेत् ॥ ९१ ॥

इति पीठिका ।

मुखलिङ्गं त्रिवक्त्रं वा एकवक्त्रञ्चतुर्मुखम् ।
सम्मुखं चैकवक्त्रं स्यात्त्रिवक्त्रे पृष्ठतो नहि ॥ ९२ ॥
पश्चिमास्यं स्थितं शुभ्रं कुङ्कुमाभं तथोत्तरम् ।
याम्यं कृष्णं करालं स्यात् प्राच्यां दीप्ताग्निसन्निभम् ॥ ९३ ॥
सद्यो वामं तथाऽघोरं तत्पुरुषं चतुर्थकम् ।
पञ्चमञ्च तथेशानं योगिना(२)मथ गोचरम् ॥ ९४ ॥

इति मुखलिङ्गम् ।

वामे गणाधिपः स्थाप्यो दक्षिणे पार्वती तथा ।
नैर्ऋत्ये भास्करं विद्याद् वायव्ये च जनार्दनम् ॥ ९५ ॥
मातृभिर्मातृकास्थानं कारयेद्दक्षिणां दिशम् ।
सौम्ये शान्तिगृहं कुर्याद् यक्षाधीशांस्तु पश्चिमे ॥ ९६ ॥

इत्येकद्वारशिवायतनम् ।

(३) वामहस्ते गृहं कुर्याद् यशोद्वारञ्च दक्षिणे ।
मध्ये रुद्रः प्रतिष्ठाप्यो मातृस्थानञ्च दक्षिणे ॥ ९७ ॥
वामे देवी महालक्ष्मीरुमा (४) × भैरवस्तथा ।
(५)ब्रह्मविष्णुस्तथा रुद्रः पृष्ठदेशे तु कारयेत् ॥ ९८ ॥
इन्द्रादित्यौ च (६)कर्णौ च आग्नेयां स्कन्द एव च ।
ईशाने (७)विघ्नराजस्य धूम्र ईशानगोचरे ॥ ९९ ॥

इति चतुर्मुखशिवायतनम् ।

---

(१) 'त्रिंशदंशन्तु पिण्ड्याञ्च' इति स्यात् । (२) '-मध्यगोचरम्' इत्यन्यत्र । (३) 'वामे स्नानगृहं' इति स्यात् । (४) त्रुटितस्थाने 'च' 'वै' वा स्यात् । (५) 'ब्रह्मविष्णू तथा रुद्रं' इति स्यात् । (६) 'कर्णे च आग्नेय्यां' इति स्यात् । (७) 'विघ्नराजोऽस्य' इति स्यात् ।

मातुलिङ्गञ्च नागेन्द्रं डमरुं बीजपूरकम् ।
नन्दी मुकुटशोभाढ्यः (१)सर्वाभरणभूषितः ॥ १०० ॥
खट्वाङ्गञ्च कपालञ्च डमरुं बीजपूरकम् ।
दंष्ट्राकरालवदनो महाकालस्तु दक्षिणे ॥ १०१ ॥

इति पूर्वप्रतिहारौ ।

तर्जनी च त्रिशूलञ्च डमरुं गजमेव च ।
हेरम्बो वामभागे स्याद् भृङ्गी दक्षिणतः स्मृतः ॥ १०२ ॥
गजं डमरुखट्वाङ्गं तर्जनीं वामहस्ततः ।
उभौ च दक्षिणे द्वारे भृङ्गी दक्षिणतः स्मृतः ॥ १०३ ॥

इति दक्षिणप्रतिहारौ ।

त्रिशूलं डमरुञ्चैव खट्वाङ्गं च कपालकम् ।
कपालं डमरुं दन्तं बीजपूरं तथा दधत् ॥ १०४ ॥
दुर्मुखः पश्चिमे वामे पाण्डुरो दक्षिणे तथा ।

[ इति पश्चिमप्रतीहारौ ]

मातुलिङ्गं मृणालञ्च खट्वाङ्गं पद्मदण्डकौ ॥ १०५ ॥
सितो वामेऽसितो दक्षे उत्तरद्वारसंस्थितौ ।
पद्मदण्डञ्च खट्वाङ्गं मृणालं बीजपूरकम् ॥ १०६ ॥

[ इत्युत्तरप्रतीहारौ ]

इति (२)शिवप्रतिहारौ ।

इति श्रीसूत्र × × मण्डनविरचिते वास्तुशास्त्रे रूपमण्डने शिवमूर्त्तिशिवलिङ्ग-लक्षणाधिकारश्चतुर्थोऽध्यायः ॥ ४ ॥

---

(१) 'सर्पाभरण-' इति स्यात् । (२) 'शिवप्रतीहाराः' इति स्यात् ।

# पञ्चमोऽध्यायः

[ शाक्ताधिकारः ]

अथ गौर्याः प्रवक्ष्यामि प्रमाणं मूर्त्तिनिर्णयम् ।
चतुर्भुजा त्रिनेत्रा या सर्वाभरणभूषणा ॥ १ ॥

[ इति गौरीमूर्त्तेः सामान्यलक्षणम् ]

अक्षसूत्राम्बुजं धत्ते दर्पणञ्च कमण्डलुम् ।
उमा-नाम्नी भवेन्मूर्त्तिर्वन्दिता त्रिदशैरपि ॥ २ ॥

[ इत्युमा ]

(१)अक्षसूत्रां शिवां देवीं गणाध्यक्षकमण्डलुम् ।
पक्षद्वयेऽग्निकुण्डञ्च पार्वती पर्वतोद्भवा ॥ ३ ॥

[ इति पार्वती ]

अक्षसूत्रं तथा पद्ममभयञ्च वरन्तथा ।
गोधासना(२)प्रियामूर्त्तिर्गृहे पूज्या श्रिये सदा ॥ ४ ॥

[ इति श्रिया ]

कमण्डल्वक्षसूत्रञ्च बिभ्राणा वज्रमङ्कुशम् ।
गजासनस्थिता रम्भा कर्त्तव्या सर्वकामदा ॥ ५ ॥

[ इति रम्भा ]

शूलाक्षसूत्रदण्डञ्च बिभ्राणा चैव चामरम् ।
तोतला कथिता चेयं सर्वकोपप्रणाशनी ॥ ६ ॥

[ इति तोतला ]

नागपाशाङ्कुशौ (३)चैव भयदं वरदं करम् ।
त्रिपुरा नाम सा पूज्या वन्दिता त्रिदशैरपि ॥ ७ ॥

[ इति त्रिपुरा ]

इति गौर्या मूर्त्तयः ।

---

(१) 'अक्षसूत्रं शिवं देवं गणाध्यक्षं' इति देवतामूर्त्तौ (८।४)। (२) 'श्रिया-' इति स्यात् । (३) 'चैवाभयदं' इति स्यात् ।

वक्ष्यामि (१)गौर्यायतनं देवतानामनुक्रमात् ।
वामे सिद्धिः श्रिया याम्ये सावित्री चैव पश्चिमे ॥ ८ ॥

पृष्ठकर्णद्वये कार्या भगवती सरस्वती ।
ईशाने तु गणेशः स्यात् कुमारौ चाग्निकोणके ॥ ९ ॥

कुण्डलाभ्यामलंकृता चेश्वरस्य सदा प्रिया ।
मध्ये गौरी प्रतिष्ठाप्या सर्वाभरणभूषिता ॥ १० ॥

इति गौर्यायतनम् ।

अभयाङ्कुशपाशदण्डैर्जया चैव तु पूर्वतः ।
सव्यापसव्ययोगेन विजया (२)तामसा भवेत् ॥ ११ ॥

अभयाम्बुज(३)पोदण्ड अजिता चापराजिता ।
अभयवज्राङ्कुशदण्डैर्विभक्ता (४)मण्डलाऽपि च ॥ १२ ॥

अभयं शङ्खपद्मदण्डैर्मोहिनी स्तम्भिनी तथा ।
जया च विजया चैव अजिता त्वपराजिता ॥ १३ ॥

विभक्ता (५)विमला चैव मोहिनी स्तम्भिनी तथा ।
गौर्या आयतने श्रेष्ठा(६)अष्टा स्युर्द्वारपालिका(:) ॥ १४ ॥

इति गौर्या अष्टौ द्वारपालिकाः ।

दन्तञ्च परशुं पद्मं मोदकञ्च गजाननः ।
गणेशो मूषकारूढो बिभ्राणः सर्वकामदः ॥ १५ ॥

इति गणेशः ।

वरं तथाऽङ्कुशं दन्तं दक्षिणे (७)पार्श्वधाभयौ ।
वामे कपालं बाणाक्षं पाशं (८)कौमोदकी तथा ॥ १६ ॥

---

(१) 'गौर्यायतनदेवतानामनुक्रमम्' इति स्यात् । (२) 'नाम सा' इति स्यात् । (३) '-पाशदण्डैरजिता' इति स्यात् । (४) 'मङ्गला' इति स्यात् । (५) पूर्वत्र (१२) 'मङ्गला' 'मण्डला' वेत्युपलम्भादत्रापि तयोरन्यतरदेव नाम स्यात् । (६) 'अष्ट' 'अष्टौ' वा स्यात् । (७) 'पर्श्वधाभये' इति स्यात्, एवञ्चात्र पर्श्वधशब्दः 'पर्शु'-शब्दवत् परशुपर्यायो द्रष्टव्यः । (८) 'कौमोदकीं' इति साधुः ।

धारयन्तं करै रम्यैः पञ्चवक्त्रं त्रिलोचनम् ।
हेरम्बं मूषकारूढं कुर्यात् सर्वार्थकामदम् ॥ १७ ॥

इति हेरम्बः ।

लम्बोदरं त्रिनयनं पाशाङ्कुशधरं परम् ।
वरदाभयहस्तञ्च (१)लसत्कर्णं सचामरम् ॥ १८ ॥

[ इति वक्त्रतुण्डः ]

वामाङ्के गजकर्णं तु सिद्धिं दद्याच्च दक्षिणे ।
पृष्ठकर्णे तथा द्वौ च धूमको बालचन्द्रमाः ॥ १९ ॥

उत्तरे तु सदा गौरी याम्ये चैव सरस्वती ।
पश्चिमे यक्षराजश्च बुद्धिः पूर्वे सुसंस्थिता ॥ २० ॥

इति गणेशायतनम् ।

सर्वे च वामनाकाराः सौम्याश्च पुरुषाननाः ।
तर्जनीपरशुपद्ममविघ्नो दण्डहस्तकः ॥ २१ ॥

तर्जनीदण्डापसव्ये स भवेद् विघ्नराजकः ।
तर्जनीखड्गखेटञ्च दण्डहस्तः सुवक्त्रकः ॥ २२ ॥

तर्जनीदण्डापसव्ये दक्षिणे बलवान् भवेत् ।
तर्जनीबाणचापञ्च दण्डञ्च गजकर्णकः ॥ २३ ॥

तर्जनीदण्डापसव्ये गोकर्णः पश्चिमे स्थितः ।
(२)तर्जनीपद्माञ्चङ्कुशं दण्डहस्तः सुसौम्यकः ॥ २४ ॥

तर्जनीदण्डापसव्ये स चैव शुभदायकः ।
पक्षद्वारादिके सर्वे प्राच्यादिष्वष्ट संस्थिताः ॥ २५ ॥

इति गणेशप्रतिहाराः ।

कार्त्तिकेयं प्रवक्ष्यामि तरुणादित्यसन्निभम् ।
कमलोदरवर्णाभं कुमारं सुकुमारकम् ॥ २६ ॥

---

(१) 'चलत्कर्णं' इत्युचितः पाठो देवतामूर्त्तौ ( अ० ८, श्लो० २५ ) ।
(२) 'तर्जनीपद्माङ्कुशं च' इति देवतामूर्त्तौ ( अ० ८, श्लो० ३३ ) ।

गण्डकश्चीरकैर्युक्तं मयूरवरवाहनम् ।
(१)स्थापनीयाखेटनगरे भुजान् द्वादश कल्पयेत् ॥ २७ ॥
चतुर्भुजः (२)कर्पटे स्याद् वने ग्रामे द्विबाहुकः ।
दक्षिणे शक्तिपाशश्च खड्गं बाणं त्रिशूलकम् ॥ २८ ॥
(३)वरदश्चैकहस्तस्यादथवाऽभयदो भवेत् ।
एते दक्षिणतो ज्ञेयाः केयूर(४)वनकोज्ज्वलाः ॥ २९ ॥
धनुः पताका मुष्टिश्च तर्जनी तु प्रसारिता ।
(५)खेटकं ताम्रचूडश्च वामहस्तेषु शस्यते ॥ ३० ॥
(६)द्विभुजश्च करे शक्तिर्वाम ऊर्ध्वे च (७)कर्कुटम् ।
चतुर्भुजे शक्तिपाशौ वामतो दक्षिणे त्वसिः ॥ ३१ ॥
वरदोऽभयदो वाऽपि (८)दक्षिणस्यात्तुरीयकम् ।
कार्तिकेयममुं शुभ्रं कर्तव्यं सर्वकामदम् ॥ ३२ ॥

इति कार्तिकेयः ।

अक्षसूत्राम्बुपात्रे च अधोहस्ते प्रकारयेत् ।
सर्वासामीदृशौ हस्तौ द्वावूर्ध्वौ कथयाम्यथ ॥ ३३ ॥
पद्मे युग्मे लीलया स्याल्लीला पद्मं च पुस्तकम् ।
लीलाङ्गी पाशपद्माभ्यां ललिता वज्रमङ्कुशम् ॥ ३४ ॥
पाशाङ्कुशौ लीलावती लीलया(:) पञ्च कीर्तिता(:) ।

इति पञ्च लीलाः ।

वरं त्रिशूलं खेटञ्च पानपात्रं च बिभ्रती ।
नीलकण्ठं तथा नागा महालक्ष्मीः प्रकीर्तिता ॥ ३५ ॥

[ इति महालक्ष्मीः ]

---

(१) 'स्थानीयखेट-' इति स्यात् । (२) 'खर्वटे' इति स्यात् । (३) 'वरदश्चैकहस्तः' इति स्यात् । (४) '-कनकोज्ज्वलाः' इति '-कटकोज्ज्वलाः' इति वा स्यात् । (५) 'खेटकस्ताम्रचूडश्च' इति साधुः । (६) 'द्विभुजस्य' इति स्यात् । (७) 'कुक्कुटः' इति साधुः । (८) 'दक्षिणः स्यात्तुरीयकः' इति स्यात् ।

वरं त्रिशूलं खेटञ्च पानपात्रञ्च बिभ्रती ।
क्षेमङ्करी तदा नाम क्षेमारोग्यप्रदायिनी ॥ ३६ ॥

[ इति क्षेमङ्करी ]

कमण्डलुञ्च खड्गञ्च (१)मरुं पानञ्च पात्रकम् ।
हरसिद्धिस्तदा नाम सर्वेषां सिद्धिहेतवे ॥ ३७ ॥

[ इति हरसिद्धिः ]

इति दुर्गा-मूर्तयः ।

गोधासना भवेद् गौरी लीलया हंसवाहना(:) ।
सिंहारूढा भवेद् दुर्गा मातरः स्वस्ववाहनाः ॥ ३८ ॥

[ इति गौर्यादीनां वाहनानि ]

चण्डिका क्रूररूपा च पिङ्गकेशा कृशोदरी ।
रक्ताक्षी (२)भयनेत्रा च निर्मांसा विकृतानना ॥ ३९ ॥

(३)चण्डिका क्रूररूपा च पिङ्गकेशा कृशोदरी ।
व्याघ्रचर्मपरीधाना भुजङ्गाभरणान्विता ॥ ४० ॥

कपालमालिनी कृष्णा शवारूढा भयावहा ।
त्रिशूलं खेटकं खड्गं धनुः पाशाङ्कुशौ शरः ॥ ४१ ॥

कुठारो दर्पणं घण्टा शङ्खं वस्त्रं गदा पविः ।
दण्डमुद्गर इत्येतैर्यथास्थानायुधैर्युता ॥ ४२ ॥

बाहुषोडशसंयुक्ता चण्डमुण्डविघातिनी ।

इति चामुण्डा ।

खड्गं पात्रञ्च मुशलं लाङ्गलञ्च बिभर्ति सा ।
आख्याता रक्तचामुण्डा देवी योगेश्वरीति च ॥ ४३ ॥

अधीते य इमं नित्यं रक्तदन्त्या वपुस्तवम् ।
तं सा परिचरेद्देवी पतिं प्रियमिवाङ्गना ॥ ४४ ॥

[ इति रक्तचामुण्डा ]

---

(१) 'डमरुं पानपात्रकम्' इति स्यात् । (२) 'भीमनेत्रा' इति स्यात् ।
(३) इदमर्धं सम्पातायातं स्यात् ।

अथ (१)कात्यायिनीं वक्ष्ये (२)दशहस्तां महुर्भुजाम् ।
तेजःप्रतापदां नित्यं नृपाणां सुखबोधिनी(म्) ॥ ४५ ॥

त्रिभङ्गीस्थानसंस्थानां महिषासुरसूदनीम् ।
(३)दक्षत्रिशूलं खड्गञ्च चक्रं बाणं च शक्तिकाम् ॥ ४६ ॥

खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च ।
घण्टाञ्च वामतो दद्याद् दैत्यमूर्धजधृक्कराम् ॥ ४७ ॥

हृदि शूलेन निर्भिन्नं तिर्यग्दन्तविभूषितम् ।
रक्तरक्तीकृताङ्गञ्च रक्तविस्फारितेक्षणम् ॥ ४८ ॥

वेष्टितं नागपाशैश्च भृकुटीभीषणाननाम् ॥ ४९ ॥

देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् ।
किञ्चिदूर्ध्वं तथा (४)वाममङ्गुष्ठो महिषोपरि ॥ ५० ॥

इति श्रीकात्यायनीमूर्तिः ।

चण्डिकायाः प्रतीहारान् कथयिष्याम्यनुक्रमात् ।
वेताल(:)करटश्चैव पिङ्गाक्षो भृकुटिस्तथा ॥ ५१ ॥

धूम्रकः कङ्कदश्चैव रक्ताक्षश्च सुलोचनः ।
दंष्ट्राननविक(५)टास्यसस्फुरद्दशनोज्ज्वलः ॥ ५२ ॥

बर्बरीव्यक्तदेहश्च रक्ताक्षश्च महाबलः ।
तर्जनी चैव खट्वाङ्गमूर्ध्वं डमरुदण्डकौ ॥ ५३ ॥

वेतालः सुसमाख्यातोऽपसव्ये करटः पुनः ।
अभयं खड्गखेटञ्च दण्डः पिङ्गललोचनः ॥ ५४ ॥

(६)वामापसव्ययोगेन भवेद् भृकुटिनामकः ।
तर्जनी च त्रिशूलञ्च खट्वाङ्गं दण्ड एव च ॥ ५५ ॥

---

(१) 'कात्यायनीं' इति साधुः । (२) 'दशहस्तां सुदुर्जयाम्' इति स्यात् । (३) 'दक्षे' इति स्यात् । (४) 'वाममङ्गुष्ठं' इति मात्स्ये (२६०।६५) देवतामूर्त्तौ च (८।११७) पाठः । (५) '-टास्यः संस्फुर-' इति स्यात् । (६) 'वामेऽपसव्य-' इति स्यात् ।

रक्ताक्षो (१)वाम भेदोऽसौ वामे दक्षे त्रिलोचनः ।
दिग्द्वारपक्षयुग्मे च प्रशस्ता विघ्ननाशनाः ॥ ५६ ॥

इति चण्डिकाष्टकप्रतिहाराः ।

अष्टपत्राम्बुजस्योर्ध्वे लक्ष्मीः सिंहासने शुभे ।
बिनायकवदासीना सर्वाभरणभूषिता ॥ ५७ ॥
ऊर्ध्वहस्तौ प्रकर्त्तव्यौ देव्याः पङ्कजधारिणौ ।
(२)वामे घृतघटं धत्ते दक्षिणे मातुलिङ्गकम् ॥ ५८ ॥

इति लक्ष्म्या मूर्तिः ।

क्षेत्रे कोल्ला(३)पुरे दैत्ये महालक्ष्मीर्यदाऽर्च्यते ।
लक्ष्मीवत् सा सदा कार्या रूपाभरणभूषिता ॥ ५९ ॥
दक्षिणाधःकरे पात्रमूर्ध्वे कौमोदकी भवेत् ।
वामोर्ध्वे खेटकं धत्ते श्रीफलं तदधःकरे ॥ ६० ॥

इति महालक्ष्मीः ।

एकवक्त्रा चतुर्हस्ता मुकुटेन विराजिता ।
प्रभामण्डलसंयुक्ता कुण्डलान्वितशेखरा ॥ ६१ ॥
अक्षाब्जवीणा पुस्तकं महाविद्या प्रकीर्तिता ।

[ इति महाविद्या ]

वराक्षाब्जं पुस्तकञ्च सरस्वती शुभावहा ॥ ६२ ॥

[ इति सरस्वती ]

हंसारूढा प्रकर्तव्या साक्षसूत्रकमण्डलुः ।
स्रुवं च पुस्तकं धत्ते ऊर्ध्वहस्तद्वये शुभा ॥ ६३ ॥

इति ब्राह्मी ।

माहेश्वरी प्रकर्तव्या वृषभासनसंस्थिता ।
कपालशूलखट्वाङ्गवरदा च चतुर्भुजा ॥ ६४ ॥

इति माहेश्वरी ।

---

(१) 'नाम' इति स्यात् । (२) 'वामेऽमृतघटं' इति स्यात् । (३) '-पुरादन्ये' इति स्यात् ।

कुमाररूपा कौमारी मयूरवरवाहना ।
रक्तवस्त्रधरा तद्वच्छूलशक्तिगदाधरा ॥ ६५ ॥
इति कौमारी ।

वैष्णवी विष्णुसदृशी गरुडोपरि संस्थिता ।
चतुर्बाहुश्च वरदा शङ्खचक्रगदाधरा ॥ ६६ ॥
इति वैष्णवी ।

वाराहीं तु प्रवक्ष्यामि महिषोपरि संस्थिताम् ।
(१)वाराहसदृशी घण्टानादा चामरधारिणी ॥ ६७ ॥
गदा चक्रगदा तद्वद्दानवेन्द्रविघातिनी ।
लोकानाञ्च हितार्थाय सर्वव्याधिविनाशिनी ॥ ६८ ॥
इति वाराही ।

इन्द्राणी त्विन्द्रसदृशी वज्रशूलगदाधरा ।
गजासनगता देवी लोचनैर्बहुभिर्वृता ॥ ६९ ॥
इति इन्द्राणी ।

दंष्ट्राला क्षीणदेहा च गर्त्ताक्षा भीमरूपिणी ।
दिग्बाहुः क्षामकुक्षिश्च मुशलं चक्रमार्गणौ ॥ ७० ॥
अङ्कुशं बिभ्रती खड्गं दक्षिणेष्वथ वामतः ।
खेटं पाशं धनुर्दण्डं कुठारं चेति बिभ्रती ॥ ७१ ॥
चामुण्डा प्रेतगा रक्ता विकृता(२)स्यादिभूषणा ।
द्विभुजा वा प्रकर्तव्या ( कृत्तिकाकार्यरन्विता? ) ॥ ७२ ॥
इति चामुण्डा ।

वीरेश्वरस्तु भगवान् वृषारूढो धनुर्धरः ।
वीणाहस्तं त्रिशूलञ्च मातृणामग्रतो भवेत् ।
मध्ये च मातृका कार्या अन्ते (३)तेषां विनायकः ॥ ७३ ॥
इति सप्त मातरः ।

---

(१) 'वराह-' इति स्यात् । (२) '-स्याहिभूषणा' इति स्यात् । (३) 'तासां' इति स्यात् ।

क्षेत्रपालो विधातव्यो दिग्वासा घण्टभूषितः ।
कर्तिकां डमरुं बिभ्रद्दक्षिणे तु करद्वये ॥ ७४ ॥

वामे शूलं कपालञ्च मुण्डमालोपवीतकम् ।
(१)करोतिकटितोदारसर्पग्रन्थितशेखरः ॥ ७५ ॥

इति क्षेत्रपालः ।

खट्वाङ्गमसिपाशञ्च शूलञ्च दधतः करैः ।
डमरुञ्च कपालञ्च वरदं भुजगं तथा ॥ ७६ ॥

आत्मवर्णसमोपेतसारमेयसमन्वितम् ।
ध्यात्वा जपेत् सुसंहृष्टः सर्वान् कामानवाप्नुयात् ॥ ७७ ॥

इति वटुकभैरवः ।

इति श्रीसूत्रधारमण्डनविरचिते रूपमण्डने वास्तुशास्त्रे गौर्याः
प्रमाणमूर्तिलक्षणाधिकारः पञ्चमोऽध्यायः ।

---

(१) 'करोटिनिकरोदार-' इति देवतामूर्त्तौ पाठः ( अ० ८, श्लो० ६० ) ।

# षष्ठोऽध्यायः

अथ जैनमूर्त्तिलक्षणाधिकारप्रारम्भः

[ चतुर्विंशतिरर्हन्तः ]

एतस्या(१)मिषसर्पिण्या ऋषभोऽ(२)जिनसम्भवः ।
अभिनन्दस्तु (३)सुमूर्त्तिस्ततः पद्मप्रभाभिधः ॥ १ ॥
सुपार्श्वश्चन्द्र(४)प्रभेव(५)स्तुविधिस्याथ शीतलः ।
(६)श्रियांशो वासपूज्यश्च विमलोऽनन्ततीर्थकृत् ॥ २ ॥
धर्मशान्ति(७)कुप्यरोममल्लिश्च मुनि(८)सुवृतः ।
(९)नेमि-नेमि-पार्श्व-वीरश्चतुर्विंशति अर्हताः (?) ॥ ३ ॥

[ जिनानां वर्णाः ]

(१०)रक्तो च पद्म(११)प्रभु····भवासंपूज्यौ
(१२)शुक्लं च चन्द्रप्रभपुष्पदन्तौ ।
कृष्णौ पुनर्नेमि(१३)षुगुणैर्विलीनै
(१४)श्रीमल्लिः पार्श्वे कनकत्विषोऽन्ये ॥ ४ ॥

[ यथाक्रमं जिनानां ध्वजाः ]

वृषो गजोऽश्व(१५)जो मृगवक्त्रौंचोब्जः स्वस्तिकः शशी ।
मकरवत्सखड्गीशमहिषः शूकरस्तथा ॥ ५ ॥
श्येनो वज्रं (१६)मृगछागो नन्द्यावर्त्तो घटोऽपि च ।
कूर्मो नीलोत्पलं शङ्खः (१७)फाणी सिंहोऽर्हतां ध्वजाः ॥ ६ ॥

---

(१) '-मवसर्पिण्याम्' इति स्यात् । (२) '-जित-' इति स्यात् । (३) 'सुमति-' इति स्यात् । (४) '-प्रभश्च' इति स्यात् । (५) 'सुविधिश्चाथ' इति स्यात् । (६) 'श्रेयांसो' इति स्यात् । (७) 'कुन्थारयो' इति स्यात् । (८) '-सुव्रतः' इति स्यात् । (९) 'नमि-' इति स्यात् । (१०) 'रक्तौ' इति स्यात् । (११) '-प्रभवासपूज्यौ' इति स्यात् । (१२) 'शुक्लौ' इति स्यात् । (१३) '-मुनी च नीलौ' इति स्यात् । (१४) 'श्रीमल्लिपार्श्वौ' इति स्यात् । (१५) '-श्वः प्लवगः क्रौञ्चोऽब्जः' इति स्यात् । (१६) 'मृगश्छागो' इति साधु । (१७) 'फणी' इति स्यात् ।

अथ नक्षत्राणि

उत्तराषाढरोहिण्यौ मृगशीर्षं पुनर्वसुः ।
मघा चित्रा विशाखा चानुराधा मूलमेव च ॥ ७ ॥
पूर्वाषाढा श्रुतिश्चैव शतभिषोत्तरं पदम् ।
रेवती पुष्यभरणी कृत्तिका रेवती क्रमात् ॥ ८ ॥
अश्विनी श्रवणाश्विन्यौ तथा चित्रा विशाखिका ।
उत्तरा फल्गुनी चेति जिनानां जन्मभानि वै ॥ ९ ॥

अथ राशयः

धनुर्वृषोऽथ (१)मिथुनौ मिथुनं सिंह(२)कन्यकैः ।
तुलावृश्चिकचापानि धनुर्मकर(३)कुम्भकैः ॥ १० ॥
(४)मीनामीने कर्कमेषा वृषो मीनोऽप्यजः क्रमात् ।
मकरो मेष-कन्ये तु तुला कन्येति राशयः ॥ ११ ॥

**[ जिनोपासकयक्षनामानि ]**

(५)यक्षिणी स्याद् गोमुखो महायक्षस्त्रिमुखो यक्षनायकः ।
तुम्बरुः कुसुमश्चापि मातङ्गो विजयो जयः ॥ १२ ॥
ब्रह्मा यक्षेट् कुमारः षण्मुखपातालकिन्नराः ।
गरुडो गन्धर्वो यक्षेट् कुबेरो वरुणोऽपि च ॥ १३ ॥
भृकुटि(६)र्गोऽभिधः पार्श्वे वा मातङ्गोऽर्हदुपासकाः

**[ जिनानां शासनदेवताः ]**

चक्रेश्व(७)र्यजिनबला दुरितारिश्च कालिका ॥ १४ ॥
महाकाली(८)शमा शांता (९)भृगुढ्यश्च सुतारिका ।
अशोका मानवी चण्डी विदिता चाङ्कुशी तथा ॥ १५ ॥

---

(१) मिथुनं' इति स्यात्। (२) '-कन्यके' इति स्यात्। (३) '-कुम्भकौ' इति स्यात्। (४) 'मीनो मीन-' इति स्यात्। (५) अत्र 'यक्षिणी'ति सम्पातायातं स्यात्; 'स्याद् गोमुखो महायक्ष-' इतिक्रमेण पाठ्यम्। (६) '-र्गोमेधपार्श्वौ मातङ्गोऽ-' इति स्यात्। (७) '-र्यनितबला' इति देवतामूर्तौ (७।१४)। (८) 'श्यामा' इति स्यात्। (९) 'भृकुटिश्च' इति स्यात्।

कन्दर्पी निर्वाणी बाला धारिणी (१)वरणाप्रिया ।
नादरक्ता च गन्धर्वाऽम्बिका (२)पद्मवती तथा ।
सिद्धायका चेति जैन्यः(३)क्रमा वासवदेवताः ॥ १६ ॥

इति जिनानां (४)यक्षणीनामानि ।

[ एतेषां लक्षणम् , तत्र गोमुखः ]

(५)रिषभो गोमुखो यक्षो(६)हेमवर्णा गजानना ।
(७)वराक्षसूत्रमाशाञ्च उभबीजपुरेषु च ॥ १७ ॥

[ चक्रेश्वरी ]

चक्रेश्वरी हेमवर्णा तार्क्ष्यारूढाऽष्टबाहुका ।
वरं बाणं (८)चक्रं ( शक्तिशूलमनाकुलम् ? ) ॥ १८ ॥*

[ अम्बिका ]

सिंहारूढाऽम्बिका पीता(मलुंबि ?)नागपाशकम् ।
अङ्कुशञ्च तथा(९)पुत्र तथा हस्तेष्वनुक्रमात् ॥ १९ ॥

[ पार्श्वः ]

(१०)पार्श्वे स्यात् पार्श्वनानाथास्य कूर्मारूढा गजजानना ।
बीजपूरोरगं नागं नकुलं श्यामवर्णकैः ॥ २० ॥

[ पद्मावती ]

(११)रक्तायसावती पूर्णा कुर्कुटोरगचतुर्भुजा ।
(१२)पद्मपाशोंशो बीजपूरं हस्तेषु कारयेत् ॥ २१ ॥

---

(१) 'धरणप्रिया' इति स्यात् । (२) 'पद्मावती' इति साधु । (३) 'क्रमाच्छासनदेवताः' इति स्यात् । (४) 'यक्षयक्षिणी-' इति स्यात् । (५) 'ऋषभे' इति स्यात् । (६) 'हेमवर्णो गजाननः' इति स्यात् । (७) 'वरोऽक्षसूत्रं पाशञ्च बीजपूरं करेषु च' इति स्यात् । (८) 'पाशचक्रं' 'चक्रपाशं' वा स्यात् । (९) 'पत्रं' इति स्यात् । (१०) 'पार्श्वः स्यात् पार्श्वनाथस्य कूर्मारूढो गजाननः' इति स्यात् । (११) 'पद्मावती रक्तवर्णा कुक्कुटस्था' इति स्यात् । (१२) 'पद्मं पाशाङ्कुशौ' इति स्यात् ।

---

* अत्रैतदनन्तरं नेमिनाथोपासकस्य 'गोमेघ'यक्षस्य लक्षणं लेखकप्रमादात् त्रुटितम् इति सम्भाव्यते । यतोऽत्र ग्रन्थकृता संक्षेपबुद्ध्या जिनोपासकानां यक्षाणां यक्षिणीनाञ्च तावन्ति लक्षणान्यनभिधाय 'चतस्रोऽतिशयैर्युक्तास्तासां पूज्या विशेषतः' ( २९ ) इत्यग्रिमप्रतिज्ञाग्रन्थानुसारेण आदिनाथ( ऋषभ )-नेमिनाथ-पार्श्वनाथ-महावीराणामुपासकान् गोमुख-गोमेघ-पार्श्व-मातङ्गनाम्नो यक्षान् , चक्रेश्वर्यम्बिका-पद्मावती-सिद्धायकाख्या यक्षिणीश्च लक्षयितुं प्रवृत्तम् इति विज्ञायते । नास्ति चास्य 'गोमेघ'मलक्षयतः प्रतिज्ञातार्थपरिसमाप्तिरित्यवसेयम् ।

[ मातङ्गः ]

महावीरस्य मातङ्गो (१)गजारूढो मितो भवेत् ।
दक्षिणे नकुलं हस्ते वामे स्याद् बीजपूरकम् ॥ २२ ॥

[ सिद्धायका ]

सिद्धायका नीलवर्णा (२)सिद्धारूढाश्चतुर्भुजा ।
पुस्तकं चाभयं (३)दत्ते बाणं वै मातुलिङ्गकम् ॥ २३ ॥

अथ द्वितीयभेदेन चक्रेश्वरी

द्वादशभुजाष्टचक्राणि वज्रयोर्द्वयमेव च ।
मातुलिङ्गाभये चैव पद्मस्था गरुडोपरि ॥ २४ ॥

[ जिनेषु चतुर्णां प्राधान्यकथनम् ]

जिनस्य मूर्त्तयोऽनन्ताः पूजिताः (४)सौख्यसर्वदा ।
चतस्रोऽतिशयैर्युक्तास्तासां पूज्या विशेषतः ॥ २५ ॥

[ एषां नामानि ]

श्रीआदिनाथो नेमिश्च (५)पर्वे वीरचतुर्थकः ।
(६)चक्रे चर्याम्बिका पद्मावती सिद्धायकेति च ॥ २६ ॥
कैलासं सोमशरणं सिद्धिवर्ति सदाशिवम् ।
सिंहासनं धर्मचक्रमुपरीन्द्रातपत्रकम् ॥ २७ ॥

[ जिनप्रतीहारनामानि ]

इन्द्र इन्द्रजयश्चैव माहेन्द्रो विजयस्तथा ।
धरणेन्द्रः पद्मकश्च सुनाभः सुरदुन्दुभिः ॥ २८ ॥
इत्यष्टौ च प्रतीहारा वीतरागे तु शान्तिदाः ।

[ प्रतीहाराणामायुधानि ]

फलं वज्राङ्कुशौ दण्डमिन्द्र(७)मिन्द्रजयस्तथा ॥ २९ ॥
द्वौ वज्रौ फलदण्डश्च माहेन्द्रो विजयोद्भवः ।
( तदा युद्धयोगाद्भवा त्रिपञ्चादिफणोर्द्धगाः ? ) ॥ ३० ॥

---

(१) 'गजारूढः सितो' इति स्यात् । (२) 'सिंहारूढा चतुर्भुजा' इति स्यात् । (३) 'धत्ते' इति स्यात् । (४) 'सर्व सौख्यदाः' इति स्यात् । (५) 'पार्श्वो वीरश्चतुर्थकः' इति स्यात् । (६) 'चक्रेश्वर्यम्बिका' इति स्यात् । (७) 'इन्द्रजय-' इति स्यात् ।

धरणेन्द्रः पद्मकश्च सर्वे शान्तिकराः स्मृताः ।
यक्षरूपाधिकाराश्च निधिहस्ताः (१)शुभोदराः ॥ ३१ ॥
(२)सुनाभ्यो दुन्दुभश्चैव क्रमेणाष्टौ प्रकीर्तिताः ।
इत्यष्टौ च प्रतीहारा वीतरागाः प्रकीर्तिताः ॥ ३२ ॥
(३)नागरादिपूरग्रामे सर्वे विघ्नप्रणाशनाः ।
छत्रत्रयं जिनस्यैव रथिकाभिस्त्रिभि(४)र्युताः ॥ ३३ ॥
अशोकद्रुमपत्रैश्च देवदुन्दुभिवादिकैः ।
सिंहासनमसुराद्यो गजसिंहा विभूषिताः ॥ ३४ ॥
मध्ये च कर्मचक्रं च तत्पार्श्वयोश्च यक्षिणी ।
द्वितालविस्तराः कार्या बहिः परिकरस्य तु ॥ ३५ ॥
दैर्घ्ये तु प्रतिमा तुल्या तयोरूर्ध्वे तु तोरणम् ।
वाहिकाबाह्यपक्षे तु (५)गोसिंहैरलंकृताः ॥ ३६ ॥
कर्तव्या द्वारशाखा च तत्तन्मूर्तिगसंयुता ।
तोरणं पञ्चधा प्रोक्तं रथिकार्थं च देवताः ॥ ३७ ॥
ललितं चेतिकाकारं त्रिरथं वलितोदरम् ।
श्रीपुञ्जं पञ्चरथिकं सप्तावानन्दवर्धनम् ॥ ३८ ॥
रथिकायां भवेद् ब्रह्मा विष्णुरीशश्च चण्डिका ।
जिनो गौरी गणेशश्च स्वे स्वे स्थाने सुखावहाः ॥ ३९ ॥

इति परिकरः ।

श्रीमद्देशे (६)मेदपाठाभिधाने (७)क्षेत्राख्येऽभूत् सूत्रधारो वरिष्ठः ।
पुत्रो ज्येष्ठो मण्डनस्तस्य तेन प्रोक्तं शास्त्रं मण्डनं रूपपूर्वम् ॥ ४० ॥

इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे रूपमण्डने (८)षष्ठमोऽध्यायः समाप्तः ।

॥ समाप्तश्चायं ग्रन्थः ॥

---

(१) 'शुभोदयाः' इति स्यात् । (२) 'सुनाभो' इति स्यात् । (३) 'नगरादिपुर-' इति स्यात् । (४) '-र्युतम्' इति स्यात् । (५) 'गोसिंहैः समलंकृताः' इति स्यात् । (६) 'मेद-' इति स्यात् । (७) 'क्षेत्राख्योऽभूत्' इति स्यात् । (८) 'षष्ठोऽध्यायः' इत्येतन्मात्रं साधु ।

## देवतामूर्त्तौ व्याख्यातानां सरूपाणामीषद्विरूपाणाञ्च रूपमण्डनीयपद्यानां निर्देशः

| रूपमण्डने | | देवतामूर्त्तौ | | रूपमण्डने | | देवतामूर्त्तौ | |
|---|---|---|---|---|---|---|---|
| पृ० | श्लो० | पृ० | श्लो० | पृ० | श्लो० | पृ० | श्लो० |
| ३ | ३ | ९ | ७ | १२ | ३६ | ७२ | ६४ |
| ,, | ५ | १० | ९ | ,, | ३८ | ७३ | ६६ |
| ,, | ६ | ११ | १० | १३ | ५ | ७४ | ३ |
| ४ | ७ | १९ | १७ | ,, | ६ | ,, | ४ |
| ,, | ८ | ,, | १८ | १७ | ३१ | ७७ | १५ |
| ,, | ९ | २० | १९ | ,, | ३४ | ७८ | १८ |
| ,, | १० | २१ | २३ | ,, | ३५ | ,, | १९ |
| ,, | ११ | २२ | २४ | ,, | ३७ | ,, | २१ |
| ,, | १३ | २३ | २६ | ,, | ३८ | ७९ | २२ |
| ,, | १४ | ,, | २६-२७ | ,, | ३९ | ,, | २२-२३ |
| ५ | १५ | २५ | ३३ | १८ | ४० | ,, | २३-२४ |
| ,, | १६ | ३० | ४५ | ,, | ४२ | ,, | २५ |
| ,, | १७ | ३४ | ५८ | ,, | ४७ | ८८ | ६५ |
| ,, | १८ | ७ | ६ | ,, | ४८ | ,, | ६७ |
| ,, | २२ | ४८ | १०-११ | ,, | ४९ | ,, | ६६ |
| ७ | ३४ | ५० | २८-२९ | ,, | ५० | ,, | ६८ |
| ,, | ३५ | ,, | २९-३० | १९ | ५२ | ९२ | ९१ |
| ,, | ३६ | ५०-५१ | ३०-३१ | ,, | ५४ | ,, | ९३ |
| ,, | ३७ | ५१ | ३१-३२ | ,, | ५७ | ९३ | ९७ |
| ८ | ६ | ५९ | २ | २० | ६२ | ९४ | १०४-१०५ |
| ,, | ८ | ६१ | ८ | ,, | ६३ | ९५ | १०६ |
| ९ | ११ | ६२ | १४ | २१ | १ | ९७ | १ |
| ,, | १२ | ,, | १५ | ,, | २ | ,, | २ |
| ,, | १३ | ,, | १६ | ,, | ५ | ९८ | ६ |
| ,, | १७ | ६४ | २० | ,, | ६ | ,, | ७ |
| ११ | ३२ | ७१ | ६० | ,, | ७ | ,, | ८ |
| ,, | ३४ | ७२ | ६२ | ,, | ८ | ,, | ९ |
| १२ | ३५ | ,, | ६३ | २२ | ९ | ,, | १० |

| रूपमण्डने | | देवतामूर्त्तौ | |
| --- | --- | --- | --- |
| पृ० | श्लो० | पृ० | श्लो० |
| २२ | १५ | ९९ | १६ |
| २४ | २६ | १०४ | ५५ |
| ,, | २९ | १०१ | ३२ |
| ,, | ३२ | १०२ | ४२ |
| २७ | ५४ | १०८ | ६५ |
| ,, | ५५ | ,, | ६६ |
| ,, | ५८ | १११ | ८० |
| ,, | ६० | ११० | ७६ |
| २८ | ६१ | ,, | ७७ |
| ,, | ६३ | १११ | ७९ |
| ,, | ६४ | ११९ | ९५ |
| ,, | ६५ | ,, | ९६ |
| ,, | ६६ | ११३ | ८३ |
| ,, | ६८-६९ | ११९ | ९८ |
| २८-२९ | ७०-७१ | १२० | १०० |
| २९ | ७४ | १२१ | १०४ |
| ,, | ७७ | ,, | १०७ |
| ३१ | ९३ | १२७ | १६१ |
| ३२ | १०४ | १२८ | १६२ |
| ,, | १०५-१०६ | १२९ | १६४-१६५ |
| ३३ | १ | १४४ | १ |
| ,, | ३ | ,, | ४ |
| ,, | ५ | १४५ | १० |
| ३४ | ८ | १४६ | १५ |
| ,, | ९ | ,, | १६ |
| ,, | १० | १४७ | १७ |
| ,, | ११ | ,, | १८ |
| ,, | १२ | ,, | १९ |
| ,, | १५ | १४८ | २१ |
| ३५ | १७ | १४९ | २३ |
| ३५ | १८ | १५० | २५ |
| ,, | २० | १५१ | २९ |
| ,, | २१ | ,, | ३० |
| ,, | २२ | ,, | ३१ |
| ,, | २३ | १५२ | ३५ |
| ,, | २६ | ,, | ३६ |
| ३६ | २७ | ,, | ३७ |
| ,, | २८ | १५३ | ३८ |
| ,, | ३१ | ,, | ४१ |
| ,, | ३२ | ,, | ४२ |
| ,, | ३४-३५ | १५४ | ४६-४७ |
| ,, | ३५ | १५५ | ५० |
| ३८ | ५२ | १६२ | ९६ |
| ,, | ५४ | ,, | ९७-९८ |
| ३९ | ५७ | १६३ | १०३ |
| ,, | ५९ | १६४ | १०७ |
| ,, | ६१-६२ | १५९ | ७९-८० |
| ४१ | ७४ | १५६ | ५९ |
| ,, | ७५ | ,, | ६० |
| ४२ | ४ | १३२ | ४ |
| ,, | ५ | १३३ | ५ |
| ,, | ६ | ,, | ६ |
| ४३ | ७ | ,, | ७ |
| ,, | ८ | ,, | ८ |
| ,, | ९ | ,, | ९ |
| ,, | १२ | १३४ | १२ |
| ४४ | १७ | १३५ | १७-१८ |
| ,, | १९ | १४१ | ६१ |
| ४५ | २३ | १४२ | ६५ |

# देवतामूर्त्तिप्रकरणस्य
## शब्दसूची

—:*:—

---

# रूपमण्डनस्थ

—: ० :—

## देवतामूर्त्तिप्रकरणस्य टीकायां प्रमाणत्वेनोद्धृतानां ग्रन्थानां नामानि ।

१ । विष्णुधर्मोत्तरम् ( पुराणम् )

२ । मत्स्यपुराणम्

३ । अग्निपुराणम्

४ । बृहत्संहिता ( ज्योतिषग्रन्थः )

५ । शुक्रनीतिसारः

६ । मयमतम् ( शिल्पशास्त्रम् )

७ । काश्यपशिल्पम् ,,

८ । समराङ्गणसूत्रधारः ,,

९ । शिल्परत्नम् ( पूर्वोत्तर-भागद्वयात्मकम् ) ,,

१० । रूपमण्डनम्

११ । रूपावतारः

१२ । प्राणतोषणी ( तन्त्रम् )

१३ । श्रीतत्त्वचिन्तामणिः ( तन्त्रम् )

१४ । शिलाचक्रार्थबोधिनी

१५ । वीरमित्रोदयः

१६ । जैनपद्मपुराणम्

१७ । चतुर्विंशतिजिनस्तुतिसंग्रहः ।

# शुद्धिपत्रम्

| पृष्ठे | अध्याये | श्लोकाङ्कः | अशुद्धः | शुद्धः |
|---|---|---|---|---|
| ५७ | ३य | २७ | नैर्ऋतास्यो | नैर्ऋत्यास्यो |
| ६२ | ४र्थ | १५ पुष्पिकायां | ० | इति ब्रह्मायतने द्वारदेवताः। |
| ,, | ,, | ६२ | चतुर्हस्ता | चतुर्हस्ताः |
| ६४ | ,, | २० पुष्पिकायां | ० | इति ब्रह्मणः प्रतीहाराः। |
| ६९ | ,, | ४६ पुष्पिकायां | ० | इति सूर्यप्रतीहाराः। |
| ८० | ५म | २७ | (लः ? लम्) | (लम् ? लः) |
| ८३ | ,, | ४१ | एकपद्मा | एको पद्मा |
| ८४ | ,, | ४८ | कलाधिका | फलाधिका। |
| ८६ | ,, | ५९ | अनु- | अणु (टी०) |
| ८८ | ,, | ६६ | गुम्फ | गुल्फ (टी०) |

९२ पृष्ठे ८७ सप्ताशीतितमश्लोकस्योत्तरार्धे 'एकपादोऽस्य' इत्यनन्तरम्—

"कर्त्तव्यो लक्ष्म्युत्सङ्गगतः प्रभोः। तथाऽपरश्च" इति पाठ्यम्।

| | | | | |
|---|---|---|---|---|
| ९३ | ६ष्ठ | ९५ | तुङ्गश्च | लुङ्गश्च |
| १०० | ६ष्ठ | २१ | चित्रचन्द्र | चित्रवस्त्र |
| ११६ | ,, | ९१ | षण्डश्चाभयकं) | षण्डश्चा)भयकं |
| ११९ | ,, | ९६ | शिवांशे | कलांशे (टी०) |
| १२९ | ,, | १६३ | इति पश्चिमप्रतीहारौ | [इति पश्चिमप्रतीहारौ] |
| १३१ | ७म | १ | ऋषभा- | ऋषभ- |
| ,, | ,, | १–३ | समानाकृतयश्च | समानाकृतयः (टी०) |
| १३५ | ,, | १६ | गान्धार्यधिका | गान्धार्यम्बिका। |
| १४१ | ,, | ५७ | वरदं चाक्षसूत्रं त्रिशूलञ्च | वरदं चाक्षसूत्रञ्च त्रिशूलं |
| १४६ | ८म | १२ | (त्रिखण्ड ? ण्डां) | त्रिख(ण्ड ? ण्डां) |